श्रीशान्तिसूरिजैनग्रन्थमाला ] श्रीमत्शान्तिसूरीश्वरपादपद्मेभ्यो नमो नमः [ ग्रन्थाङ्कः—२




पण्डितश्रीदेवविजयगणिविरचितं

# ॥ श्रीजैनरामायणम् ॥

## [गद्यबद्धम्]

अनुयोगाचार्य पं० कीर्तिमुनिसदुपदिष्टसद्गृहस्थानां प्रथमग्राहकाणां द्रव्यसाहाय्येन
शान्तिसूरिजैनग्रन्थमालायाः सेक्रेटरीसुश्रावक झवेरी डाह्यालालात्मजमोहनलालेन प्रकाशितम्
जैनाचार्यश्रीमत्शान्तिसूरिशिष्य कीर्तिमुनिपन्यासेन हरिशङ्करशास्त्रिणा च संशोधितम्

वीरसंवत् २४६६ मूल्यम् रूप्यकत्रयम् विक्रम सं. १९९६

"श्रीशारदामुद्रणालये" तदधिपतिना सुश्रावक हर्षचन्द्रात्मजेन पण्डितभगवानदासेन मुद्रितम्—सारंगपुर तळीया पोल अमदावाद.

# समर्पण पत्रिका

श्रीमन्त शान्ता दान्ता पूज्यपादा गुरुवर्या आचार्यश्रीक्षान्तिसूरीश्वरा' !

कतिगुणान्भवतां वर्णयामि, न मे शक्ति । भवद्भिरुत्तमचारित्रेण क्षमागुणेन च जगति यादृशउपकारः कृतस्तदुपकारेण सर्वे जना मुक्तकण्ठं प्रशंसन्ति, गुणाश्च स्मार स्मारं रुदन्ति। मादृशे जनेऽप्येतादृश उपकार कृत' स आजीवन विस्मृतिपथं नार्हति । भवन्तोऽल्पवयस्येवेमं लोकं परित्यज्य दिवं गतास्तत्तु स्वहृदि निरन्तरं स्थितम् । भवतामनेकान्गुणान्स्मृत्वा रामायणमेतद्भवता करकमले सादरं समर्पयामि ।

कार्तिक शुक्ल ज्ञानपंचमी \
वीरविजयोपाश्रय । राजनगरम्

भवदीयचरणकिंकरः \
**कीर्तिमुनिः पन्यासः**

॥१॥

# उपोद्घातः॥

अस्मिन्गद्यात्मके रामायणे दश सर्गा सन्ति। तत्र दशसैर्गैर्णाष्टमबलदेववासुदेवप्रतिवासुदेवाना रामलक्ष्मणदशग्रीवाना विभीषणसुग्रीवहनुमदादीनामन्येषा चातीवमिष्टसुललितभाषया चरितं वर्णितम्। पुरापीदं चरितं कलिकालसर्वज्ञश्रीमद्धेमचन्द्राचार्यवर्यैर्विद्वत्तापूर्णं चेतश्चमत्कारि पद्यबद्धं त्रिषष्ठिशलाकापुरुषचरित्रस्य सप्तमपर्वरूपं रचितम्। तच्च पुरा भावनगरस्थ श्रीजैनधर्मप्रसारकाख्यसस्थया प्रकाशित मासीत् तच्चाधुनाऽलभ्यम्। इदन्तु गद्यात्मक रामायणमद्यावध्यप्रकटितमलभ्यञ्चेति मत्वाऽस्माभिर्महता परिश्रमेणानुयोगाचार्य श्रीमत्पन्यासहर्षमुनिज्ञानकोशाद् हस्तलिखितमेक पुस्तकं प्रायः शुद्ध समुपलभ्य साक्षररत्नपण्ड्या इत्युपाह्वाऽम्बारात्मज हरिशङ्करशास्त्रिसमीपे प्रेसकोपिं विधाप्य महता परिश्रमेण संशोध्य श्रीशारदामुद्रणालये निर्णयसागराक्षरै मुद्रापितम्।

अथ कदा कुत्र केन कस्मादिद गद्यात्मकं चरित दृब्धमिति सर्वेषा हृदि स्वाभाविकमेव शङ्काजातं समुपजायते तत्समाधानाय ग्रन्थकर्त्रैव समाप्तावलेखि, यदिदं चरित संवत् १६५२ वर्षे, आश्विनमासे, कृष्णपक्षे, दशम्यां तिथौ, गुरुपुष्ययोगे, श्रीमन्मरुस्थल्या, श्रीमालपुरनगरे, श्रीमदकब्बरराज्ये, ज्येष्ठस्थित्या स्थिते. स्वस्ति श्रीमत्तपोगच्छे भट्टारकयुगप्रधानश्रीविजयदानसूरिशिष्याचार्यश्रीराजविजयसूरिशिष्यपण्डितदेवविज-

यगणिभिः श्रीहेमाचार्यकृतरामायणमुपजीव्य सत्यपि प्राकृत गद्यबन्धचरित्रे तथा सत्यपि संस्कृतपद्यबन्धचरित्रे आत्मविनोदार्थं कर्मक्षयार्थं च गद्यबन्धेन कृतमिति ।

अन्या हस्तलिखिता पुस्तिका नोपलब्धा येन संशोधनकार्ये महान्प्रयत्नोऽभूव । यद्यपि दत्तचित्तैरस्माभिस्तत्कार्यं कृतं तथापि दृष्टिदोषात् प्रमादात् यन्त्रदोषाद्वा याः काश्चित्त्रुटयोऽवशिष्टाः स्युश्चेद्गुणग्राहिभिर्विद्वद्भिः संशोध्य वाचनीयाः इति प्रार्थ्यते ।

कार्तिक शुक्ल ज्ञानपञ्चमी
श्रीवीरविजयोपाश्रयः
राजनगरम् ।

कीर्तिमुनिः पन्यासः ।

## पन्यासकीर्तिमुनिजीना सदुपदेशथी रामायणना प्रथमथी ग्राहक थयेला सद्गृहस्थोनी नामावलि।

| | | | |
|---|---|---|---|
| नकल | ५० | [1]सुश्राविका चम्पाबेन | अमदावाद फताशानी पोल. |
| ,, | २५ | शाह भोगीलाल सांकळचन्द | ,, ,, |
| ,, | २५ | सुश्राविका सीताबहेन स्वर्गस्थ शा. दलसुखभाइ मनसुखरामनां धर्मपत्नी [दलसुखभाइना स्मरणार्थे] | ,, नागजीभूधरनी पोल. |
| ,, | २० | शाह कुन्दनमल समरथमल | ,, मस्कतीमारकेट. |
| ,, | १२ | शाह चीमनलाल मोहनलाल दलाल | ,, फताशानी पोल |
| ,, | १२ | शाह छोटालाल मूलचन्द | महुधा |
| ,, | १० | मणीआर वाडीलाल वनमालीदास | कडी |
| ,, | १० | शाह वाडीलाल वेचचन्द | अमदावाद फताशानी पोल. |
| ,, | १० | शाह गीरधरलाल दीपचन्द | ,, ,, |

१ आ पुस्तक प्रकाशनमां स्वर्गस्थ शाह चन्दुलाल हीराचन्दनां सद्धर्मपत्नी धर्मपरायण चम्पाबहेने प्रथम ग्राहक थइने जे अमने मदद करी छे तेथी ज अमे आ पुस्तक प्रकाशित करी शक्या छीए अने तेमने धन्यवाद आपीए छीए।

| | | | |
|---|---|---|---|
| ,, | १० | एक सद्गृहस्थ | अमदावाद फताशानो पोल. |
| ,, | १० | एक सुश्राविका | |
| ,, | १० | मास्तर हीरालाल द्वारा | ,, शामलानी पोल |
| ,, | १० | शाह अम्बालाल हेमचन्द | ,, क्षेत्रपालनी पोल |
| ,, | १० | शाह वालाभाइ चकलदास | ,, पाडापोल |
| ,, | ५ | शाह केशवलाल छगनलाल | ,, फताशानी पोल |
| ,, | ५ | सुश्राविका चम्पाब्हेन कंसारा | ,, ,, |
| ,, | ५ | शाह गौतमलाल द्वारा | समौ |
| ,, | ४ | शाह हिंमतलाल प्रेमचन्द | अमदावाद फताशानी पोल |
| ,, | ४ | शाह रतिलाल डाह्याभाइ | ,, मुहूर्त पोल. |
| ,, | ४ | ब्हेन हीराकोर | ,, |
| ,, | ४ | शाह सुन्दरलाल | ,, लालाभाइनी पोल. |
| ,, | ४ | ब्हेन चन्दन | कपडवंज |
| ,, | २० | साध्वीजी श्रीअनुपश्रीजी तथा कुसुमश्रीजीना सदुपदेशथी सुरत ज्ञानखातानी | |
| ,, | २२ | साध्वीजी श्रीजतनश्रीजो तथा वल्लभश्रीजीना सदुपदेशथी ह: शणगारब्हेन अमदावाद | |
| ,, | २५ | साध्वीजी श्रीधनश्रीजो तथा शान्तिश्रीजी तथा वल्लभश्रीजीना उपदेशथी गाम जावाल. | |

श्रीगौतमाय नमः ।

आचार्यवर्यश्रीराजविजयसूरिशिष्यपन्यासदेवविजयगणिभिर्विरचितम् ।

# श्रीरामायणम्–गद्यात्मकम् ॥

श्रीसुव्रतस्वामिजिनेन्द्रस्याञ्जनद्युतेः । हरिवंशमृगाङ्कस्य तीर्थे सञ्जातजन्मनः ॥१॥
बलदेवस्य पद्मस्य विष्णोर्नारायणस्य च । प्रतिविष्णो रावणस्य चरितं परिकीर्त्यते ॥२॥

अथास्मिन् जंबूद्वीपे भरतक्षेत्रे लवणाब्धौ योजनसप्तशतविस्तृतः सर्वासु दिक्षु राक्षसनामा द्वीपोऽस्ति । तद्द्वीपमध्ये त्रिकूटनामा पर्वतः । उच्चत्वेन नवयोजनानि पञ्चाशद्योजनानि विस्तीर्णत्वेन दीर्घत्वेन शतयोजनानि च । तदुपरि स्वर्णसप्तप्राकारपरिखा गृहतोरणालङ्कृता श्रीजिनभवनभूषिता अष्टोत्तरशतद्वारा लङ्का नाम पुर्यासीत् । यतः—

शतयोजनविस्तीर्णा सप्तप्राकारवेष्टिता । अष्टोत्तरशतद्वारा योजनैस्त्रिंशदीर्घिता ॥१॥

लङ्कापुरी व्यन्तरदेवेन भीमराक्षसेन्द्रेण श्रीअजितस्वामिवारके निष्पादिता । पातालङ्काऽपि षड् योजनानि भूमध्यमतिक्रम्य सपादयोजनशतप्रमाणा समचतुरस्रा स्फटिकवप्रा मणिकपिशीर्षैर्विराजमाना मणिरत्नतेजोभिः सूर्यातिरेकप्रकाशशोभिता प्रतिपक्ष-

शत्रुसमुद्दैरखण्डिता भीमराक्षसेन्द्रेण स्वपूर्वभवपुत्रघनवाहनस्य कार्ये कृता । अथ लङ्कापाताललङ्कयो राज्यं राक्षसीविद्यामपि घनवाहनाय दत्त्वा भीमेन्द्रः स्वस्थानं गतः । तत्पुत्रो घनवाहनोऽपि पुत्राय महाराक्षसे राज्यं दत्त्वाऽजितस्वामिपादान्ते प्रव्रज्य शिवं ययौ ।

सोऽपि महारक्षाः स्वनन्दने देवरक्षसि राज्य दत्त्वा प्रव्रज्य शिवं ययौ । एवं राक्षसद्वीपेऽसंख्येषु पुरुषेषु केषुचित्स्वर्गं केषुचिन्मोक्षं गतेषु श्रीश्रेयांसतीर्थे तत्पुरीद्वयपतिः कीर्त्या धवलो कीर्तिधवलो नाम राक्षसेश्वरोऽभूत् प्रतापतपनोपमः । इतश्च वैताढ्यगिरौ मेघपुरे नगरेऽतीन्द्रनामा विद्याधरोऽभूत् । तस्य पट्टराज्ञी श्रीमती नाम्न्यभूत्, तयोः पुत्रः श्रीकण्ठनामा पुत्री च श्रीकण्ठा नाम्न्यभूत् देवीव रूपतः । इतश्च वैताढ्यगिरौ रत्नपुरेश्वरः पुष्पोत्तरनामा राजा । तेन स्वपुत्रस्य पद्मोत्तरस्यार्थेऽतीन्द्रराजस्य पुत्री श्रीकण्ठा याचिता परमतीन्द्रेण स्वपुत्री पद्मोत्तराय न दत्ता गुणिनेऽपि श्रीमतेऽपि । किन्तु कीर्त्तिधवलराक्षसेश्वराय लङ्कास्वामिने दत्ता, दैवनियोगेन तां श्रीकण्ठां कीर्तिधवलपरिणीतां श्रुत्वा पुष्पोत्तरो नृपोऽतीन्द्रेण सह वैरायते स्म । इतश्चैकस्मिन् दिने श्रीकण्ठेन मेरुपर्वतान्निवृत्तेन पुष्पोत्तरदुहिता पद्मा व्यदृश्यत पद्मया श्रीकण्ठो दृष्टः तयोरन्योन्यमनुरागोऽभूत् । यतः—

विज्ञाय तदभिप्राय श्रीकण्ठस्तां स्मरातुरः । आदाय व्योममार्गेण गन्तुं प्रचकृते द्रुतम् ॥१॥

श्रीकण्ठस्तां गृहीत्वा गतस्तदा चेटिकाः पूत्कुर्वन्तिस्म । तदनु पद्मोत्तरो भ्राता सन्नह्यान्वधावत्, ततः श्रीकण्ठोऽपि पलायमानो कीर्त्तिधवलराक्षसेन्द्रशरणं गतः, भगिनीपतिञ्च ज्ञात्वा तत्र गतः । पद्माहरणवृत्तान्तं कथयित्वा तत्र स्थितः । इतश्च पुष्पोत्तरः पद्मोत्तरपुत्रेण युतोऽन्वधावत् सैन्यैर्दिशः प्रच्छादयन्युगान्तसागर इव समागात् । ततः कीर्तिधवलो राक्षसेश्वरो दूतमुखेन पुष्पोत्तरम-

भाषत । युष्माभिर्विचार्य कर्तव्यम् संग्रामाद्यविचार्य न कार्यम् । यतः—

अपरीक्षितं न कर्तव्यम् कर्तव्यं सुपरीक्षितम् । पश्चाद् भवति सन्तापो ब्राह्मणी नकुलं यथा ॥१॥

अविमृश्य प्रयासो मुधा स्यात् । यतः कन्या ह्यवश्यं कस्मैचिद्दातव्या अनया स्वयं वृतो वरो वरेण कन्या स्वयं वृता । यतः—

वर वरयते कन्या माता वित्तं पिता श्रुतम् । बान्धवाः स्वजनमिच्छन्ति मिष्टान्नमपरे जनाः ॥१॥

अतो युद्धं न युज्यते, वधूवरयोर्विवाहं कृत्वा प्रेष्यताम् । ततः पश्चाऽपि दूतीमुखेन ज्ञापयामास । हे तात ! मयैव वरो वृतः वरेणाप्यहं वृता । इति पुष्पोत्तरपद्मोत्तरौ श्रुत्वा शान्तकोपौ जातौ तयोर्विवाह कृत्वा धनधान्यादिकं दत्त्वा शान्तकोपौ स्वस्थानं जग्मतुः । यतः—

प्रायो विचारचुंचूनां कोपः सुप्रशमः खलु ।

तत्रैव लङ्कानगर्यां स्थितयोस्तयोः सुखेन काले याति सत्येकस्मिन्दिने कीर्तिधवलेन राक्षसेनेदं प्रोक्तम् । यूयमत्रैव राक्षसद्वीपे तिष्ठत । वैताढ्यपर्वते युष्माकं भूयांसो विद्विषोऽधुना वर्तन्ते । तेभ्यो दूरे स्थीयते तद्वरम् । यतः—

शकटात्पञ्चहस्तेषु दशहस्तेषु वाजिनः । हस्तिनः शतहस्तेषु देशत्यागेषु दुर्जनात् ॥१॥

एवं विचार्यात्रैव स्थीयतां, तथास्यैव राक्षसद्वीपस्य नातिदूरे वायव्यां दिशि वानरनामा द्वीपोऽस्ति योजनशतत्रयप्रमाणस्तत्रैव स्थीयताम् । अन्येऽपि द्वीपा बर्बरकुलसिंहलबहलविमलाश्वमुखनरमुखगजमुखप्रमुखा मदीयाः सन्ति पृथिवीखण्डसन्निभाः । एतेषां

---

१ कन्या वरयते रूपम् इत्यपि पाठ । २ कुलम् इत्यपि पाठ ।

द्वीपानां मध्ये यूयं राजधानीं विधाय सुखेन तिष्ठत यथाऽऽवयोर्वियोगो न भवति। अवियुक्ता भवामस्तथा कार्यम् । तदा स्नेहपरवशः श्रीकण्ठो वानरद्वीपनिवासं प्रत्यपद्यत । ततः श्रीकण्ठस्त्रिशतयोजनमितं वानरद्वीपं गतस्तत्रद्वीपे किष्किन्धनामा पर्वतोऽस्ति । तस्मिन्पर्वते किष्किन्धा नामा नगरी स्थापिता । तस्यां नगर्यां श्रीकण्ठं कीर्तिधवलो राज्ये स्थापयामास । तत्र वानरद्वीपे एकस्मिन्दिने श्रीकण्ठेन राज्ञा भूयांसो वानरा दृष्टास्तेषां वानराणां राज्ञाऽमारिपटहो वादितः य एनान् हन्ति स हन्तव्यः । इत्युक्त्वा वानररक्षां कारयतिस्म राजा अन्नपानादिकं वानरयोग्यं भक्ष्यं दापयति ततः सर्वेऽपि लोकास्तथैव कुर्वन्ति । यतः—

राज्ञि धर्मिणि धर्मिष्ठा पापे पापाः समे समाः । राजानमनुवर्तन्ते यथा राजा तथा प्रजाः ॥१॥

अनया राजनीत्या ते वानराः सुखिनो जाताः । इतस्तन्नगरवासी लोको रथेषु यानेषु छत्रेषु गृहेषु प्रासादेषु च वानरानालेखयति । यत्र कुत्रापि याति तत्रापि वानरीविद्यया वानररूपाणि कृत्वा याति कौतुकात् ततो लोके वानरा इत्युक्तिर्जाता । वानरद्वीपवासित्वाच्च, न पुनस्ते वानराः । यतः—

वानरद्वीपराज्येन वानरैर्लक्ष्मभिस्तथा । वानरा इति कीर्त्यन्ते तत्स्था विद्याधरा अपि ॥१॥

श्रीकण्ठसुतो वज्रकण्ठो बलवान् महाविद्याधरः सुखमनुभवन्नास्ते । अथैकदा श्रीकण्ठः सभासीन आकाशे नन्दीश्वरे यात्रायै शाश्वतार्हतां देवान् गच्छतोऽद्राक्षीत् । देवान्दृष्ट्वा मनसि श्रद्धा जाता । अहमपि नन्दीश्वरे देवैः सह यामि । श्रीकण्ठोऽपि विमानमुपविश्य देवैः सह नन्दीश्वरे याति । श्रीकण्ठस्याकाशमार्गे गच्छतो मानुषोत्तरे पर्वते विमानं स्खलितम् नदीवेग इव मार्गवर्तिनि पर्वते । तदा श्रीकण्ठस्य राज्ञो मनसि महद्दुःखं जातम् । अहो ! मया प्राग्जन्मनि तपो न तेपे येन मे नन्दीश्वरयात्रामनोरथो नापूर्यत ।

तेन दुःखेन निर्वेदमापन्नः साधुसमीपे दीक्षां कक्षीचक्रे। तपस्तप्त्वा सिद्धिक्षेत्रमियाय सः श्रीकण्ठपुत्रो वज्रकण्ठः। एवमसंख्येषु नृपेषु गतेषु तत्पट्टे श्रीमुनिसुव्रतस्वामितीर्थे घनोदधिरथ इति नाम्ना राजा अभूत्। लङ्कापुर्यामपि तदा कीर्तिधवलादसंख्येषु नृपेषु गतेषु तडित्केशनामा राजा जज्ञे श्रीमुनिसुव्रतस्वामितीर्थे। तयोर्लङ्काकिष्किन्धाधीशयोर्जलकेल्यान्दोलनादिप्रवृत्तयोः राज्ञोः कश्चित् कपिर्द्रुमात्समुत्तीर्य श्रीचन्द्रायाः पट्टराज्ञ्याः कुचौ नखैर्विलिलेख, तद्दृष्ट्वा तडित्केशलङ्केशो वानरं बाणेन जघान। यतः—

अससौ हि स्त्रीपराभवः। सोऽपि वानरो बाणप्रहारविधुरः किञ्चिद्गत्वैकस्य साधोः प्रतिमास्थस्याग्रे पपात। सोऽपि साधुस्तस्मै वानराय नमस्कारप्रदानेन परलोकशंबलं दत्तवान्। सोऽपि वानरो नमस्कारप्रभावेणाब्धिकुमारेषु भवनपतिदेवेषु देवो जातः। अवधिज्ञानेन ज्ञात्वा तमुपेत्य वंदित्वा स्तुत्वा नृत्यं चक्रे। यतः—उपकारी साधुश्चेति।

अन्यानपि प्लवंगमान् तडित्केशः सुभटैर्हतयामास। ततः स अब्धिकुमारो हृष्टः प्लवंगमरूपाणि विकृत्य वृक्षशिरसि स्थित्वा शिलासमूहै राक्षसानुपद्रवयामास। ततो राक्षसैः सम्भूय पूजां कृत्वा धूपोद्ग्राहनपूर्वं विज्ञप्तस्त्वं कोऽसीति किमुपद्रवसीति राज्ञा विज्ञप्तः पूजितः शान्तकोपो देवो जातः। लङ्केशस्तेन देवेन सह तं मुनिमुपेत्य वंदित्वा वैरकारणं पृष्टवान्, भगवन्! वानरेण सह किं मे वैरकारणम्। मुनिराचख्यौ श्रूयताम्। राजन्! त्वं पूर्वभवे श्रावस्त्यां मन्त्रिनन्दनोऽभूत् एष सुरः पूर्वभवे काशीदेशे वाराणस्यां पारधिः पापप्रियोऽभूत्। अथान्यदा तेन मन्त्रिनन्दनेन साधुसमीपे दीक्षा गृहीता। महीं विहरन् काशीदेशे वाराणस्यामगात्। स साधुस्तेन पापेन लुब्धकेन दृष्टोऽपशकुनमिति ज्ञात्वा बाणेन निपातितः। साधुर्मृत्वा माहेन्द्रकल्पे देवोऽभूत्। ततश्च्युत्वा त्वं तडित्केश इति नाम्ना लङ्काधिपो जातः। कोऽपि लुब्धकस्तस्मिन्नेव दिने विद्युत्पातेन मृतो नरके गतः। ततो निर्गत्य भवं भ्रान्त्वाऽयं कपिर्जातः। हे राजन्!

एतत्ते वैरस्य कारणम् । एनां वार्तां श्रुत्वा शान्तकोपः सुरः तं महामुनिं नत्वा लङ्केशं समनुज्ञाप्य स्वस्थानं गतः । एतद्वार्तां श्रुत्वा वैराग्योत्पन्नमनास्तडित्केशः सुकेशे निजतनये राज्यं न्यस्य संयमं लात्वा केवलज्ञानमवाप्य मोक्षं जगाम । किष्किन्धानाथो घनोदधिरथोऽपि निजपुत्रे किष्किन्धिनाम्नि राज्यं संस्थाप्य दीक्षां लात्वा मोक्षं गतः । इतश्च वैताढ्ये रथनूपुरचक्रवालपुरमस्ति । तत्राशनिवेगो विद्याधरेश्वरोऽस्ति तस्य पुत्रौ विजयसिंहविद्युद्वेगनामानावभूताम् अशनिवेगस्य दोर्दण्डाविवापरौ । तत्रैव वैताढ्य आदित्यपुरे माल्यवान् राजाऽभूत् । तस्य श्रीमालेति कन्यका । राज्ञा तस्याः स्वयंवरः कारितः । तस्मिन्स्वयंवरेऽनेके विद्याधरनरेन्द्राः समागता उच्चेषु मञ्चेषूपविष्टाः शोभन्ते पालके विमाने वैमानिका इव । प्रतिहार्या कथ्यमानान् विद्याधरनरेन्द्रान् विमुच्य तया श्रीमालया किष्किन्धिर्वव्रे । तस्य कण्ठे वरमालां निचिक्षेप दोर्लतासत्यंकारमिव । तं दृष्ट्वा विजयसिंहः सिंहपराक्रमो भृकुटिभीषणो बभाषे । अहो एते वैताढ्यात् निष्कासिता दुर्नयकारिणश्चोरवत् तत् केनामी इहानीता दुर्विनीताः कुलपांसना हन्म्येतान् दुराचारान् पशूनिवेत्युक्त्वा उत्थितोऽशनिवेगतनयो यमोपमः । एवमन्येऽपि वानरा राक्षसा वैताढ्यवासिनो विद्याधरा अशनिघोषसैनिकाः संग्रामं चक्रिरे मिथः । यतः—

दन्तादन्तिप्रवृत्ते भैरुत्फुल्लिंगीकृताम्बरः । कुन्ताकुन्तिमिलत्सादी शराशरिमिलद्रथी ॥१॥

खड्गाखड्गिपतत्पत्तिरसृक्पङ्किलभूतले । रणस्ततः प्रववृते कल्पान्त इव दारुणः ॥२॥युग्मम् ॥

एवं तस्मिन् संग्रामे जायमाने किष्किन्धलघुभ्राताऽन्धको विजयसिंहस्य शिरः क्षुरप्रबाणेनाच्छिदत् तरोः फलवत् । विजयसिंहे मृते तत्सैन्यं भग्नम् । यतः—

मेघहीना हता देशाः, पुत्रहीनं हतं कुलम्। चक्षहीनं हतं रूपम्, हतं सैन्यमनायकम् ॥१॥

ततः किष्किन्धिनाथः श्रीमालामुद्वाह्य महामहेन विमानमारोप्य जयश्रियमिव सपरिच्छदः किष्किन्धां समागात्। इतश्चाशनिवेगःपुत्रवधोदन्तं श्रुत्वाऽकाण्डाशनिपातवदशनिवेगः किष्किन्धानगर्यामागतः। लङ्काकिष्किन्धातः सुकेशिकिष्किन्धिभ्रातरौ निरीयतुः। उभयोः सैन्ययोः संग्रामो जज्ञे। ततो राक्षसवानरसैन्यानि दिशोदिशं पलायितानि। ततो लङ्काकिष्किन्धानायकौ सपरिवारौ पलायित्वा पाताललंकां ययतुः। ततः प्रशान्तकोपोऽशनिघोषः शत्रुनिष्कासनात् शान्तमनाः निर्घातं नाम खेचरं लङ्काकिष्किन्धिराज्ये निवेश्य स्वयं वैताढ्ये रथनूपुरचक्रवालनगर आजगाम महामहेन। अन्येद्युरशनिघोषः साधुसंयोगात् सहस्रारे सुते राज्यं न्यस्य दीक्षामुपाददे। पाताललंकायां स्थितयोस्तयोर्लंकाकिष्किन्धिनाथयोर्मध्ये सुकेशिलङ्कानाथस्येन्द्राण्यां पट्टराज्ञ्यां त्रयः पुत्राः सञ्जाताः-माली, सुमाली, माल्यवांश्चेति। किष्किन्धाधिपतेः किष्किन्धिराजस्य श्रीमालायां पट्टराज्ञ्यां द्वौ पुत्रौ सञ्जातावादित्यरजा ऋक्षरजा नामानौ महाभुजौ। अपरेद्यू राज्ञा किष्किन्धिना सुमेरोर्यात्रां कृत्वा निवृत्तेन मधुपर्वतं पश्यता मनोरमोद्याने तस्य पुनर्मनो रन्तुं विशश्राम। तत्रैव नवीनं किष्किन्धिपुरं कृत्वा तत्रैवास्थात् कैलास इव यक्षराट्। सुकेशस्यापि पुत्रास्त्रयः। शत्रुभिर्हृतं राज्यं श्रुत्वा क्रुधा ज्वलन्तस्त्रयोऽग्नय इव वीर्यशालिनस्ते त्रयोऽपि लङ्कायां समागत्य निर्घातं खेचरं रणांगणे निहत्य पुनर्लंकाराज्ये माली राजाऽभवन्। किष्किन्धायां किष्किन्धिगिराऽऽदित्यरजो नृपोऽभवत्। इतश्च वैताढ्यगिरौ रथनूपुरचक्रवालनगरेऽशनिवेगसुनोः सहस्रारनरेन्द्रस्य चित्तसुन्दर्यां पट्टराज्ञ्यां गर्भे कश्चिद्देवो महर्धिकः समुत्पन्नः। गर्भस्याऽनुभावेन तस्य दुष्पूरो दोहदो जातः। यदहमिन्द्रेण सह भोगाननुभवामि। अपूर्यमाणेन दोहदेन सा दुर्बला जाता वक्तुमशक्यत्वात्। ततः सहस्रारनृपेण निर्बन्धेन पृष्टा यथातथमुवाच। ततः सहस्रारनृपः सहस्राक्षरूपं विधाय

दोहदं पूरयामास। ततः सम्पूर्णदोहदा पूर्णे मास्यनूनविक्रमं प्राचीव सूर्यं राज्ञी पुत्रं प्रसवयामासः। इन्द्रसम्भोगदोहदात् इन्द्र इति नाम दत्तवान्। क्रमेणेन्द्रो वृद्धिं गतः। समये पित्रा बह्व्यो विद्याधर्यः परिणायिता बह्व्यो विद्याः शिक्षिताश्च। ततो राज्यं दत्त्वा सहस्रारो धर्मरतोऽभवत्। इन्द्रो राज्यं करोति, तेनेन्द्रेण सर्वे विद्याधराः साधिताः सर्वे देशा वशीकृताः। इन्द्रेणेन्द्रवृद्धिर्निष्पादिता। यथा–

दिक्पालाँश्चतुरश्चक्रे समानीकान्यनीकपान्। तिस्रः परिषदो वज्रमस्त्रमैरावणं द्विपम् ॥१॥

रम्भादिका वारवधूर्मन्त्रिणं च बृहस्पतिम्। नैगमेऽपिसमाख्यं च पत्यनीकस्य नायकम् ॥२॥

एवं विद्याधरैरिन्द्रपरिवाराभिधाधरैः। इन्द्रोऽहमेवेति धिया सोऽखण्डं राज्यमन्वशात् ॥३॥

तस्य चत्वारो दिक्पालाः स्युः, यथा–ज्योतिःपुरेश्वरो ज्वलिराजस्य पुत्रः आदित्यकीर्तिराज्ञीकुक्षिसमुद्भवः सोमनामा विद्याधरो दिक्पालः प्राच्यामासीत्। मेघपुरेश्वरो मेघरथराजस्य पुत्रो वरुणाकुक्षिसमुद्भवः पश्चिमदिक्पतिर्वरुणनामा विद्याधर आसीत्। काञ्चनपुरेश्वरनाम्नो राज्ञः पुत्रः कनकावल्याः कुक्षिसमुद्भव उत्तरदिक्पतिः कुबेर इति नाम्ना विद्याधर आसीत्। किष्किन्धनगराधिपः कालराजस्य पुत्रः श्रीप्रभाराज्ञीप्रसूतो दक्षिणदिक्पतिर्यमोनाम विद्याधर आसीत्। एवं राज्यं कुर्वाणो विहरन्नास्ते। इन्द्रराज्यं कुर्वाणं लङ्काधिपो मालिभूपतिस्तमिन्द्रं न सेहे गन्धेभोऽन्यमिभमिव। ततो मालिराजो भ्रातृभिर्वानरैः किष्किन्धाधिपतिभिः परिवृतो विविधैर्वाहनैर्युतः प्रचचालेन्द्रं प्रति। मार्गे गच्छतां तेषामशकुनान्यभवन्–

अङ्गारभस्मेन्धनरज्जुपङ्कपिण्याककर्पासतुषास्थिकेशाः। कृष्णायवावस्करकृष्णधान्यपाषाणविष्टाभुजगौपधानि॥

तैलं गुडं चर्म वसाविभिन्नां तिक्तं च भाण्डं लवणं तृणं च।
तक्रार्गलाशृंखलवृष्टिघाताः कार्येकचित्रिंशदियं न शस्ताः ॥२॥
स्वपादयानस्खलनं दशानां खञ्जः क्वचिद्यानपलायनं च।
द्वाराभिघातध्वजवस्त्रपाताः प्रस्थानविघ्नं कथयन्ति यातुः ॥३॥
मार्जारयुद्धारवदर्शनानि कलिं कुटुंबस्य परस्परस्य।
चित्तस्य कालुष्यकरं च सर्वं गन्तुः प्रयाणप्रतिषेधनाय ॥४॥
भूरयः खगमृगाः समाकुलास्तुल्यकालविहिता रवाश्च ये।
ते भवन्ति परदेशयायिनां देहिनां मरणकारिणो ध्रुवम् ॥५॥

इत्याद्यपशकुनान्यवलोकयन् नैमित्तिको बभाषे। राजन्! विचार्य गन्तव्यं संग्रामार्थमपशकुनानि वारयन्ति। माली, सुमालिनाऽपि निवारितो मन्त्रिणा निषिद्धोऽपि दोर्बलगर्वितो मालिराट् तद्वचनं न मन्यते। सबलवाहनो वैताढ्यगिरिं जगाम। इन्द्रोऽप्यैरावणारूढः पाणिना वज्रमुल्लालयन् हुंकारमुखरिताम्बरश्चतुर्भिर्लोकपालैर्वृतः सैन्यसमन्वितो मालिना सह रणाय ढुढौके। तत इन्द्रराक्षससैन्ययोः संग्रामो बभूव। स्यन्दनैः स्यन्दनानाम्, गजैर्गजानाम्, वाजिभिर्वाजिनाम्, सह पादात्यैः पादचारिणां संग्रामः समभवदिति। यथाः—

निपेतुः स्यन्दनः क्वापि शिखराणीव भूभृताम्। पलायन्त गजाः क्वापि वातोद्धूता इवाम्बुदाः ॥१॥
पेतुर्भटानां मूर्द्धानो राहुशङ्काप्रदाः क्वचित्। कृत्तैकपादाः केऽप्यश्वाश्चेलुः संदानिता इव ॥२॥

अमर्षादिन्द्रसैन्येन मालिसैन्यमभज्यत। बलवानपि किं कुर्यात् प्राप्तः केसरिणा करी ॥३॥

पुनरपि संग्रामे लङ्काधीशेन मालिनेन्द्रसैन्यं त्रासितं ततः क्रोधारुणमुखोऽपीन्द्रो वज्रमुल्लालयन् मालिना सह डुढौके। मालिनृपं शस्त्रवृष्टिं कुर्वाणमिन्द्रस्तीक्ष्णवज्रेणावधीत्। हतं मालिनं ज्ञात्वा तत्सैनिका राज्यं दत्त्वा स्वं पुरं ययुः। सुमालिराजस्य प्रीतिमत्यां सहचारिण्या रत्नश्रवाः पुत्रः संजज्ञे। पातालङ्कायां क्रमेण सम्प्राप्तयौवनो रत्नश्रवा एकस्मिन्दिने विद्यासाधनकार्ये कुसुमोद्यानं गतः। तत्रैकत्र रहःस्थाने शुचिमालावर्णकविलेपनानुलिप्तगात्रो जपसन्धरो नासाग्रन्यस्तदृग्द्वन्द्वश्चित्रित इवास्थात्। एवं सप्तदिनान्ते मानवसुन्दरीनाम्नी विद्या सिद्धिं गता। तस्मिन्नेव समये काचिद्विद्याधरी पितृशासनाद् रत्नश्रवसा पुरःस्थिता दृष्टा पृष्टा च। का त्वम्? केन हेतुना समागता? इति पृष्टा सती सा जगौ। श्रूयतां राजन्! कौतुकमङ्गलं नाम नगरम्। व्योमबिन्दुर्नामा विद्याधरः। तस्य द्वे पुत्र्यौ स्तः। एका कौशिका, अपरा कैकशी। कौशिका यक्षपुरेश्वरस्य विश्रवसो राज्ञो दत्ता। तत्पुत्रो वैश्रवणनामा योऽधुना लङ्काराज्यं करोति। अहं तु कौशिकाया लघुभगिनी कैकशी नाम्ना। नैमित्तिकगिरा पित्रा तुभ्यं दत्ताऽहमत्रागता। त्वं मम पाणिग्रहणं कुरु। ततो रत्नश्रवा राजा तत्रैव बन्धुवर्गं समाहूय कैकशीं परिणीतवान्। तत्र पुष्पपुरं नाम नगरं नवं कृत्वा तया सह भोगान् बुभुजे। अन्यदा कैकशी रत्नश्रवोराज्ञी स्वप्ने सिंहं ददर्श कुम्भिकुम्भस्थलभेदनतत्परम्। दृष्ट्वा हर्षिता राज्ञे जगौ। राज्ञोक्तं तव महान्पुत्रो भविष्यति, क्रमेण कैकशी गर्भं बभार। गर्भानुभावतो निष्ठुरा वाणी बभूव। दर्पणे विद्यमाने खड्ग आननं ददर्श। साहंकारं मुखं बभार। विद्विषां मूर्द्धनि पादं दातुमियेष गर्भप्रभावतः। इत्यादि दारुणान्भावान् सा प्रतन्वती सुखेनास्थात्। पूर्णे समये शुभलग्ने शुभमुहूर्ते शुभवेलायां शुभदिने पूर्णे मासि राज्ञी कैकशी पुत्रं सुषुवे। साधिकद्वादशवर्षसहस्रायुरजायत। तृतीयदिने चन्द्रसूर्ययोर्दर्शनं

कारितम्। षष्ठे दिने षष्ठीजागरणादिकम्। द्वादशे दिन अशुचिजातिकर्मणि निवृत्ते नाम दत्तम् दशमुखेति। यतः—

भीमेन्द्रेण पुरा दत्तं नवमाणिक्यनिर्मितम्। चकर्ष पाणिना हारं पार्श्वस्थितकरण्डकात् ॥१॥

कण्ठे चिक्षेप तं हारं बालः सहजचापलात्। जगाम विस्मयं तेन कैकशी सपरिच्छदा ॥२॥

अचयावद्देवनावत् योऽर्चयजि तव पूर्वजैः। न शक्यो वोढुमन्यो यैर्नवमाणिक्यनिर्मितः ॥३॥

यक्षनागसहस्रेण निधानमिव रक्ष्यते। हार आकृष्य कण्ठेऽसौ चिक्षिपे शिशुना तव ॥४॥

नवमाणिक्यसंक्रान्तमुखत्वात्तस्य तत्क्षणम्। नामधेयं दशमुख इति रत्नश्रवा व्यधात् ॥५॥

चतुर्ज्ञानधरो मुनिः पृष्टो हारवृत्तान्तः।

एकस्मिन्दिने रत्नश्रवाश्चिन्तयति यन्मेरौ चैत्यवंदनहेतवे गतवता तातेन सुमालिना साधुनोक्तं–य एनं हारं कण्ठे धारयिष्यति सोऽर्धचक्री भविष्यति, तर्ह्ययम् मम पुत्रो दशमुखोऽर्धचक्री भविष्यतीति निश्चितम्। कैकशी द्वितीयं सुतमसूत भानुस्वप्नेन सूचितम् भानुकर्ण इति नामानम् कुम्भकर्ण इति द्वितीयनामानम्। कैकशी पुनस्तृतीयं सुतमसूत विभीषणनामानं शशाङ्कस्वप्नसूचितम्। कियत्यपि काले गते कैकशी सुतां सुषुवे चन्द्रतुल्यनखत्वात् चन्द्रणखाम् शूर्पणखामिति विख्याताम् सपादषोडशधनुःसमुन्नताम्। ते त्रयोऽपि सहोदरा यथासुखं रेमिरे। गतभया कामचारिणो गगनगामिनः सुरसमप्रभाः संसदि स्थिता देवराजा इव राजन्ते ॥

इति श्रीमत्तपागच्छे भट्टारक श्रीहीरविजयसूरिराज्य आचार्यश्रीविजयसेनसूरियौवराज्ये पं. श्रीदेवगणिविरचिते श्रीरामचरित्रे गद्यबन्धे राक्षसवंशवानरवंशोत्पत्तिरावणकुम्भकर्णविभीषणजन्मवर्णनो नाम प्रथमः सर्गः।

# द्वितीयः सर्गः ।

अथैकस्मिन्दिने साऽनुजो दशमुखो विमानारूढमाकाशे यान्तं वैश्रवणं नृपं ददर्श । दशमुखेन माता कैकशी पृष्टा–हे मातः ! कोऽयं विमानारूढो महामहेन याति ? मात्रोक्तंच स एष मे भगिनीसुतो विश्रवणनामा सकलविद्याधरश्रेष्ठ इन्द्रसुभटो ज्येष्ठो याति । येनेन्द्रेण भवत्पितामहं मालिनं रणे हत्वा लङ्कावानरद्वीपराज्यं हृत्वाऽस्मै वैश्रवणाय ददौ। सोऽयं वैश्रवणो लङ्कां याति । ततःप्रभृति दशमुखो लङ्काराज्यकृते बहूनुपायानचिन्तयत्। जनन्या प्रोक्तं–पूर्वं भीमव्यन्तरेन्द्रो मेघवाहनभुभूजे पूर्वभवनिजतनयाय राक्षसवंशकन्दाय राक्षसद्वीपं लङ्काराज्यं पाताललङ्कां च राक्षसीं विद्यां च शत्रुप्रतिकाराय ददौ। सम्प्रति मेघवाहनक्रमायाता त्वत्पितामहसुमालिसकाशादिन्द्रेण सा राक्षसीविद्या हृता लङ्काराज्यं गतम्। पितामहपितापि ते गृहे पाताललङ्कायां तिष्ठति। तव शत्रवः सुखं क्रीडन्ति मम तव पितुश्च जीवितशल्यं वर्तते । हे पुत्र ! भवान् लङ्काराज्ये स्थितः कदा मया द्रक्ष्यते कदा पुत्रवती भविष्यामीति चिन्तां करोमि ?। विभीषणो वक्ति–मातस्त्वं पुत्रवत्येव यत्पुत्रो दशकन्धरो । मातर्विषादेनालम्। पुत्रपराक्रमं न वेत्सि ? अस्य पुरतः क इन्द्रः। को वैश्रवणः। के लोकपालाः। का विद्या। के विद्याधराः। के राजानः। के देवाः। के मानवाः। सर्वेऽप्येते तृणतुल्याः। हे मातः ! आस्तामार्यो दशग्रीवः। एकोऽपि कुंभकर्णः सकलां महीं वशीकर्तुमीश्वरः। दशमुख उवाच–

दोर्वीर्येणापि चेज्जेतुं शक्तोऽस्मीति जगज्जनान्। तथापि हि प्रयोक्तव्या विद्याशक्तिः क्रमागता ॥१॥
तद्विद्याः साधयिष्यामि निरवद्याः समन्ततः। अनुजानीहि यास्यामि, तत्सिद्ध्यै सानुजोऽप्यहम् ॥२॥

एवमुक्त्वा नमस्कृत्य पितरौ सानुजोऽपि सः। ताभ्यां च चुम्बितो मूर्द्धनि भीमारण्यमुपाययौ ॥३॥

ते त्रयोऽपि महाभीषणेऽरण्ये सिंहशार्दूलभयंकरे जटामुकुटमण्डिता अक्षमालाधरा नासावंशाग्रन्यस्तदृग्द्वन्द्वाः श्वेतांशुकधरा यामद्वयेन ते त्रयोऽपि सर्वकामदां सौख्यदामष्टाक्षरीं विद्यां साधयित्वा ततः षोडशाक्षरमन्त्रं दशकोटिजापात्मकं जपितुमारेभिरे ते त्रयोऽपि महात्मानः। इतश्च जम्बूद्वीपपतिः गुरुः सान्तःपुरपरिवारः तत्रायातो तान्ददर्श। तेषां विद्यासाधनविघ्नाय देवसुन्दरीं प्रेरयामास। तास्तेषां क्षोभाय चक्रिरे हावभावविलासविभ्रमान्। यतः—

हावो मुखविकारः स्यात्, भावश्चित्तसमुद्भवः। विलासो नेत्रजो ज्ञेयो विभ्रमो भ्रूसमुद्भवः ॥१॥

भो भो मन्त्रसाधकाः! शृण्वन्तु—किं भवताम् विद्यासिद्धये। अस्माभिः सह यूयम् स्वेच्छया रमध्वम्। यथा ते सर्वा विद्याः सर्वे मन्त्राः सर्वाः सिद्धयः प्रकटीभवन्ति। इत्याद्यनेकवचनरचनया न चलिताः। ततो जम्बूद्वीपाधिपो यक्षोऽब्रवीत्। भो भो मुग्धा युष्माभिः किमारब्धं ध्यानाडम्बरम्। केनचिद्धूर्तेन वंचिताः। यद्युष्माकम् विलोक्यते तत्प्रार्थयन्तु। मुच्यतां ध्यानाडम्बरम्। इति श्रुत्वाऽपि ते न चुक्षुभुस्ततो जम्बूद्वीपाधिपः किलकिलारावकारिणो व्यन्तरान् दुष्टान् विविधोपायाँश्च कुर्वाणान् पर्वतशृंगनिपातपरान् प्रेरयामास। तथापि ते न चुक्षुभुस्ततो कैकसीं, रत्नश्रवसं, चन्द्रणखां च विकृत्याग्रे चिक्षिपुः। ते त्रयः साश्रुनयना एवं चक्रन्दुः करुणस्वरं यथास्थाप्यथा। हे पुत्रा एते वयं हन्यामहे लुब्धकैः पशवो यथा निर्दयैर्युष्माकं पश्यतामपि। उत्तिष्ठ वत्स! दशकन्धर! कुम्भकर्ण! विभीषण! त्रायस्व। हे पुत्र! दशकन्धर! तवाहंकृतिः क्व गता। तव पुरत एते पापा अस्मान् यमसदनं नयन्ति। तथापि न चलिताः। ततो देवेन दशकन्धरकन्धराच्छित्वा मायया कुम्भकर्णविभीषणपुरतः पातिता। भ्रातृभक्तितः कुम्भकर्णविभीषणौ किञ्चिच्चलितौ

कोपवशं गतौ च। रावणस्तु परमार्थज्ञो न चलितो मनसि गिरीन्द्र इव निश्चलः। आकाशे साधु साधु इति वाण्यभूत्। सर्वे व्यन्तराः किंकराः पुष्पवृष्टिं चक्रुः। तस्मिन्समये सहस्रविद्याः समभ्येयुर्द्योतिताम्बराः। सर्वाभिर्विद्याभिः सम्भूय संवृतो दशाननः। सहस्र विद्याः सिद्धाः। यतः—

प्रज्ञप्ती रोहिणी गौरी गान्धारी च तथा परा। नभःसञ्चारिणी कामदायिनी द्योतिताम्बराः ॥१॥
अणिमा लघिमा क्षोभ्या मनःस्तंभनकारिणी। श्रुतिदाना तपोरूपा दहनी विपुलोदरी ॥२॥
शुभप्रदा रजोरूपा दिनरात्रिविधायिनी। वज्रोदरी समाकृष्टि रदर्शन्यजरामरा ॥३॥
अनिलस्तम्भनीतोयस्तम्भनी गिरिदारणी। अवलोकनी तु वह्नि घोरा धीरा भुजंगिनी ॥४॥
वारिणी भुवनावंध्या दारुणी मदनाशिनी। भास्करी रूपसम्पन्ना रोशनी विजया जया ॥५॥
वर्धनी मोचनी चैव वाराही कुटिलाकृतिः। चित्तोद्भवकरी शान्तिः कौबेरी वशकारिणी ॥६॥
योगेश्वरी बलोत्सादा चण्डा भीतिः प्रधर्षिणी। दुर्निवारा जगत्कम्पकारिणी भानुमालिनी ॥७॥
एवमाद्या महाविद्याः पुरासुकृतकर्मणा। स्वल्पैरेव दिनैः सिद्धा दशास्यस्य महात्मनः ॥८॥ अष्टभिः कुलकम् ॥

संवर्धनी (१) जृम्भिणी (२) सर्वापहारिणी (३) व्योमगामिनी (४) इन्द्राणी (५) एताः पञ्च विद्याः कुम्भकर्णस्य सिद्धाः। सिद्धार्था (१) शत्रुदमनी (२) निर्व्याघाता (३) खगामिनी (४) चतस्रो विद्या विभीषणस्य सिद्धाः। जंबूद्वीपाधिपो दशमुखं क्षमयामास। ममापराधः क्षम्यताम्। इत्युक्त्वा तत्रैव वने स्वयंप्रभं नाम नगरं दशमुखकार्ये कृतवान्। तत्र रावणस्य राज्यं संस्थाप्य

स्वस्थानं गतोऽनादियकनामा सुरः। रावणं विद्यासिद्ध विज्ञाय तन्मातापितरौ सकलपरिवृतौ तत्रेयुः।

तैर्महामहश्चक्रे सादरं ते त्रयोऽपि हि। मानिता पूजिता बाढम्, पुण्यैः सर्वत्र पूज्यते ॥१॥

उपवासैरथो षड्भिश्चन्द्रहासमसिं वरम्। दशास्यः साधयामास पुण्यैः सर्वं हि साध्यते ॥२॥

तस्मिन्समये वैताढ्यगिरौ दक्षिणश्रेण्यां सुरसंगीतनाम्नि नगरे मयनामा विद्याधरेश्वरोऽस्ति। तस्य हेमवती नाम्ना पट्टराज्ञी। तयोः पुत्री कल्पवल्लीस्वप्नोपशोभिता मन्दोदरीनामाऽस्ति। क्रमेण वर्धमानाऽष्टवार्षिकी जाता। पित्रा पाठिता सकलविद्या ग्राहिता क्रमेण यौवनं प्राप्ता। राज्ञेदृशी दृष्टा। यथा—

शुचि नेत्रद्वयं यस्य वक्त्रं चन्द्रोपमं शुभम्। स्मरपाशोपमौ कर्णौ कपोलौ दर्पणोपमौ ॥१॥

नासिकातैलधारेव कामचापोपमे भ्रुवौ। दशना हीरकतुल्या विद्रुमप्रवराधरौ ॥२॥

मयूरस्यकलापेन तुल्यं कचनिबन्धनम्। ईदृग्विधं महारूपं दृष्ट्वा लोकोऽप्यचिन्तयत् ॥३॥

श्यामा यौवनशालिनी मधुरवाक् सौभाग्यभाग्योदया,
कर्णान्तायतलोचनातिचतुरा प्रागल्भ्यगर्वान्विता।
रम्याबालमरालमन्थरगतिर्मत्तेभकुंभस्तनी,
बिम्बोष्ठी परिपूर्णचन्द्रवदना भृङ्गालिनीलालका ॥१॥

पीनोरू पीनगण्डा लघुसमदशना पद्मनेत्रान्तरक्ता,
विम्बोष्ठी गण्डनाशा गजपतिगमना दक्षिणावर्तनाभिः।
स्निग्धाङ्गी वृत्तवक्त्रा पृथुमृदुजघना सुस्वरा चारुकेशी,
भर्ता तस्याः क्षितीशो भवति च सुगमा पुत्रमाता च नारी ॥२॥

एवंविधा निजपुत्रीं दृष्ट्वा मयराजो विद्याधरकुमाराणां गुणापगुणविलोकनेन योग्यवराभावे मनसि चिन्तामापन्नश्चिन्तयति। कन्या मया कस्य देया। ततो मन्त्रिणोक्तम्–स्वामिन्! चिन्ता मा कुरु। कन्याया उचितो वरोऽस्ति। मयराजेनोक्तम्–क्व वरः। मन्त्रिणोक्तम्–लङ्कानाथो रत्नश्रवसः सुतो दशमुखनामा योग्यवरोऽस्ति। यतः—

कुलं च शीलं च सनाथता च विद्या च वित्तं च वपुर्वयश्च।
वरे गुणाः सप्तविलोकनीयास्ततः परं भाग्यवशा हि कन्या ॥१॥

अतः स्वामिन्! अस्य देया मन्दोदरी मन्दोदर्या योग्यो वरोऽस्ति। ईदृशोऽन्यो कोऽपि वरो नास्ति राजसु विद्याधरेष्वप्य-द्रिषु मेरुरिव। इति श्रुत्वा मयराट् शान्तः पुरपरिवारः स सैन्यः सबान्धवो मन्दोदरीं लात्वा दशमौलये दातुं चचाल। स्वपुरुषै ज्ञापयित्वा ते सर्वेऽपि स्वयंप्रभपुर ययुः। सुमालिप्रमुखा ज्ञातिवृद्धास्तं विवाहं मेनिरे। तैः सर्वैः कुटुम्बपरिवारसंयुक्तैः शुभलग्ने शुभमुहूर्ते शुभग्रहनिरीक्षितकल्याणवद्वेलायां तयो रावणमन्दोदर्योर्विवाहं कृत्वा मयराट् स्वस्थानं गतः। रावणोऽपि मन्दोदर्या सह

भोगान्बुभुजे, यथा इन्द्र इन्द्राण्या, ईश्वरः पार्वत्या। एकस्मिन्दिने रावणो व्योममार्गेण मेघरवं गिरिं ययौ। तत्र गिरिसरोवरे षट्सहस्रप्रमाणाः खेचरकन्यका रममाणा रावणेन दृष्टाः। ताभिः कन्यकाभी रावणो दृष्टः, सानुरागाः पाणिग्रहणाय साग्रहा गान्धर्वेण विवाहेन परिणीताः। यतः—

ताः सरागाः सरागेण दशग्रीवेण कन्यकाः। गान्धर्वेण विवाहेन सर्वा अप्युपयेमिरे ॥१॥

ततः कञ्चुकिपुरुषैस्तत्पितॄणां विज्ञप्तं, ततस्ते विद्याधराः सम्भूयानुदशकन्धरं दधाविरे। ततस्ता नवोढा दशकन्धरं प्रोचुः, स्वामिन्विमानं त्वरितं प्रेर्यतेऽमरसुन्दरो नाम्ना विद्याधरः विद्याधरैर्वृतः पृष्ठे समायाति। रावण उवाच–हे सुन्दर्यो मम दोर्बलं पश्यत। इत्युक्त्वा विमानस्थो रावणः संग्रामे सज्जीभूय विद्यास्त्रैरस्त्राणि खण्डयन् सुभटान्, नागपाशैर्बन्धयन्, विद्याधरचमूं नाशयन् सिंहनादेन कोपदुर्धर्षो दशास्यः प्रेयसीभिः पितृभिक्षां ययाचे। ततस्ते राजानो मोचिताः स्वं स्वं स्थानं जग्मुः। रावणोऽपि प्रेयसीयुतो विद्याधरैः परिवृतः स्वयंप्रभपुरं समागतः। ताभिः प्रेयसीभिः सह सुखमनुभवन्नास्ते। अथ कुम्भपुराऽधीशस्य महोदरराजस्य स्वरूपनयनापट्टराज्ञीकुक्षिजां नवयौवनां तडिन्मालानाम्नीं कन्यकां तडित्समप्रभां कुम्भकर्णः परिणीतवान्। वैताढ्यदक्षिणश्रेणिभूषणज्योतिःपुरेशितुः वीरसेननाम्नो [1]विष्णुश्रीराज्ञीकुक्षिजां नामतः पङ्कजश्रियम् पङ्कजवदनां पङ्कजारुणलोचनां विभीषणः परिणीतवान्। रावणमन्दोदर्योः सुखमनुभवतोर्देवेन्द्रस्वप्नसूचितो देवेन्द्रसमतेजाइन्द्रजित् नाम्ना पुत्रोऽभवत्। कियत्यपि काले गते मन्दोदरी राज्ञी मेघस्वप्नसूचितं द्वितीयं नन्दनं मेघवाहनं नाम्ना प्रसूता। अथैकस्मिन्समये कुंभकर्णविभीषणौ वैश्रवणाश्रितां लङ्कामु-

१ नन्दवतीत्यपिपाठः।

पदुद्रुवतुः। सोऽपि वैश्रवणो दूतेन रावणपितामहं सुमालिनमित्यवोचत्। भो राजन्! वार्येतां रावणावरजौ कुम्भकर्ण विभीषणौ। दुर्मदौ वीर्यशालिनौ पाताललंकास्थावन्यवीर्यमजानन्तौ पातालल‍ङ्काकूपभेकौ लङ्कोपद्रवं कुर्वाणौ निवार्येताम्। एतावन्तं कालं मयोपेक्षितौ अथ नोपेक्ष्ये। तच्छ्रुत्वा रावणः क्रुद्धो दूतं जगाद। रे क एष वैश्रवणः, कस्य सेवकः, क इन्द्रः, हन्मि सर्वान्, तदाऽहं रावणः, दूतत्वात् त्वमवध्योऽसि गच्छ स्वस्थानम्। गतो दूतः। वैश्रवणे यथोक्तं निवेद्य कोपितो वैश्रवणः। स सोदरो रावणः सपरिवारः ससैन्यो लङ्कानगर्यां गतः। लङ्कातो वैश्रवणोऽपि ससैन्यो निर्गत्य संग्रामं चक्रे मिथः। कृते संग्रामे रावणो जितः। वैश्रवणः पराजितः सन्नेवमचिन्तयत्। संग्रामे भग्नोऽहमिन्द्रस्य किमास्यं दर्शयिष्ये। यथा—

सरसो लूनपद्मस्य भग्नदन्तस्य दन्तिनः। शाखिनश्छिन्नशाखस्यालङ्कारस्य च निर्मणेः ॥१॥

भ्रष्टज्योत्स्नस्य शशिनस्तोयदस्य गताम्भसः। परैश्च भग्नमानस्य मानिनो धिगवस्थितिम् ॥२॥ (युग्मम्)

तदलं ममराज्येन नैकानर्थप्रदायिना। उपादास्ये परिव्रज्यां द्वार निर्वाणवेश्मनः ॥३॥

इति निर्विण्णचित्तः पुनर्वैश्रवणश्चिन्तयति कुम्भकर्णविभीषणौ मम बान्धवौ रावणोऽपि मम बन्धुः। येन मे वैराग्यमुत्पादितम्। एवं ध्यात्वा शस्त्रादिकमाभरणालङ्कारादिकं त्यक्त्वा तत्त्वनिष्ठः स्वयमेव परिव्रज्यामुपाददे। ततस्त साधुं नत्वा रावणो रचिताञ्जलिरेवमुवाच भो महाभाग! भो भ्रातः! राज्यं कुरु। एवं रावणे प्रोच्यमानेऽपि वैश्रवणः प्रतिमास्थितः किञ्चिन्नोचे। यतः—शिवंगमी। एवंविधं निरीहं वैश्रवणं साधुं ज्ञात्वा क्षमयित्वा पादौ प्रणम्य वैश्रवणसत्कं पुष्पकं विमानं लात्वा रावणो लङ्कां ययौ। लङ्काराज्यं गृहीत्वा सपरिवारः सुखेनास्थात्। एकस्मिन्दिने पुष्पकविमानारूढो भ्रातृभिः पितृभिः परिवृतः सम्मेतशिखरयात्रां

कृत्वाऽर्हत्प्रतिमां नत्वा, महास्तोत्रेण स्तुत्वा, नाट्यं कृत्वा मुदितमनाः संमेतशैलादवतरन् कोलाहलं श्रुत्वा सेवकान्पृच्छति। ततः प्रहस्तप्रतीहार ऊचे राजन्! वनात्कश्चिद्धस्तिरत्नं समागात् सप्तहस्तोन्नतो नवहस्तायतः पिङ्गलनेत्रः श्वेतवर्णः श्वेतदन्त उन्नतकुम्भस्थभासुरः सुस्वरः सप्ताङ्गभूप्रतिष्ठित एवं विधो हस्ती समागतः। प्रहस्तवचनं श्रुत्वा रावणो हस्तिनं वशीकृत्याध्यारोहत्। तं हस्तिनं सुन्दरं ज्ञात्वा रावणेन तस्य भुवनालङ्कार इति नाम दत्तम्। तेनारूढो रावणः इन्द्र ऐरावणारूढ इव शुशुभे। इतश्च कश्चिद्विद्याधरो घातजर्जरो रावणं व्यजिज्ञपत्। देव! पाताललंकातः किष्किन्धिनृपनन्दनः किष्किन्धां राजधानीं गतः। आदित्यरजा ऋक्षरजा नाम्ना यमेन चिरं युद्ध्वा द्वावपि भ्रातरौ बद्धौ कारायां क्षिप्तौ, नरकावस्थां प्रापितौ वैतरणीवधबन्धादिकं कारितौ। एतौ त्वदीयसेवकौ क्रमायातौ, स्वामिन्! कारागृहात्तौ मोचय। तयोः पराभवस्तवैव पराभवः। रावण उवाच—पवनवेगम् मत्सेवकौ कारायां क्षिप्तौ तस्य फलं लभिष्यतीत्युक्त्वा पुष्पकविमानारूढो विद्याधरचमूपरिवृतो रावणो यमदिक्पालपालितां किष्किन्धां पुरीं-गतः। तत्र यमस्य नरकान् दारुणान् त्रपुपानशिलास्फालनपरशुच्छेदादिकान् सप्तापि नरकान् तत्र क्लिश्यमानपत्तींश्च दृष्ट्वा दशाननो रुष्टः। परमाधार्मिकान् त्रासयन्, नरकान् भञ्जन्, स्वपत्तीन् मोचयामास। महान् कस्य सौख्याय न स्यात्। ते नरकपाला यमं विज्ञपयामासुः। रावणेन नरकान् भङ्क्त्वा सर्वे कारागृहाल्लोका मोचिताः। एतद्वचनं श्रुत्वा क्रोधारुणलोचनः सैन्यपरिवृतो रावणं प्रति दधावे। सैन्याः सैन्यैः, गजा गजैः, रथा रथिभिः, पादात्याः पादातिभिः समं महासंग्रामं चक्रिरे। ततो रावणबाणजर्जरो यमराजः कण्ठगतप्राणो रथनूपुरनाथमिन्द्रनामानं शरणं गतः। उवाच यमः। यतः—

यमः पार्श्वे नमस्कृत्य जगादैतत् कृताञ्जलिः। जलाञ्जलिर्मयादायि यमत्वाय प्रभोऽधुना ॥१॥

छुप्य या तुप्य या नाथ करिष्ये यमतां नहि। उत्थितो हि दशग्रीवो यमस्यापि यमोऽधुना ॥२॥
विद्राव्य नरकारक्षान् नारकास्तेन मोचिताः। क्षत्रव्रतधनेनोच्चैर्जीवन्मुक्तोस्मि चाहवात् ॥३॥
जित्वा वैश्रवणं तेन लङ्कापि जगृहे युधि। तद्विमानं पुष्पकं च जितश्च सुरसुन्दरः ॥४॥

यमस्यैतद्वचः श्रुत्वा क्रुद्धः। इन्द्रं कुपितं संग्रामतत्परं कुलवृद्धमन्त्रिणः संग्रामान्निषेधयन्ति। यमाय सुरसंगीतपुरराज्यं ददवेंद्रो रथनूपुरचक्रे क्रीडति। यतः—

विकइ महति पुरी नमीजवेलानीगमी। ते थाइ धुरी धीर चेतसजीम विलसीवली ॥१॥

ततो रावण आदित्यरजसे किष्किन्धां ददौ। ऋक्षरजस ऋक्षपुरं ददौ। स्वयं लङ्कायां ययौ। लङ्कायां गते रावणे लङ्काराज्यं शोभितम्। यथा रजनी चन्द्रेण, नभः सूर्येण, प्रासादो देवेन, पुष्पं भ्रमरेण, राजा छत्रेण, नगरं दुर्गेण, काननं कल्पवृक्षेण, योगी ध्यानेन, धनी दानेन, यतिर्निर्ममत्वेन, शूरः सत्त्वेन, गजो मदेन, तुरंगमो जवेन, सरो राजहंसेन, मस्तकमवतंसेन, वनं सिंहेन, सिंहो वनेन, सुवर्णं रत्नेन, राज्यममात्येन, भोज्यं लवणेन, मेरुर्नन्दनेन, कुलं सुपुत्रेण, भानुर्दिनेन, निशा शशांकेन, राजा न्यायेन, नारी मदेन, नदी जलेन, पुष्पं परिमलेन, दन्ता मुखेन, विद्युन्मेघेन, मण्डपस्तोरणेन, राजा रणेन, स्त्री हारेण, खं नक्षत्रेण, तथा लङ्का रावणेन शुशुभे। इतश्च किष्किन्धाधिनाथस्याऽऽदित्यरजसः कपिराजस्य नन्दन इन्दुमालिन्यां महिष्यां जातो वाली नाम्ना अभवत्। बलवान् रणरसिको बाहुबली। एकस्मिन्दिने साधुसमीपं गतो वाली धर्म्मं शृणोति। यथा—

अथिरेण थिरो समलेन निम्मलो परवसेण साहिणो। देहेण जइ विढप्पइ धम्मो ता किं न पज्जत्तं ॥१॥ 

अस्थिरेण शरीरेण स्थिरं कर्मसमाचरेत्। प्रायेण हि प्रयास्यन्ति प्राणाः प्राघूर्णका इव ॥१॥
देवपूजा गुरूपास्तिः स्वाध्यायः संयमस्तपः। दानं चेति गृहस्थानां षट् कर्माणि दिने दिने ॥२॥

इत्यादि धर्मं श्रुत्वा धर्मपरायणः प्रत्यहमासमुद्रान्तपृथिव्यां जम्बूद्वीपमर्यादां प्रदक्षिणीकृत्य देवान्ववन्दे। कतिचिद्दिनान्ते तस्य आदित्यरजसः श्रीप्रभापट्टराज्ञीकुक्षौ सुग्रीव इति द्वितीयः पुत्रोऽभूत्। ऋक्षपुराधीशस्य ऋक्षरजसो हरिकान्ताकुक्षिजौ नलनीलनामानावुभौ सुतावभूताम्। इतश्चादित्यरजा राजा बलशालिने वालिने राज्यं दत्त्वा व्रतं लात्वा तपस्तप्त्वा शिवं ययौ। वालिराजाऽपि सुग्रीवं निजभ्रातरं यौवराज्ये न्यधात्। कथंभूतं सुग्रीवम् सम्यग्दृष्टिं न्यायवन्तं दयावन्तं महौजसं स्वानुरूपं यौवराज्ये सुग्रीवं वाल्येऽपि न्यधात्। अत्रान्तरे रावणश्चैत्यवन्दनकार्ये भुवनालङ्कारगजारूढो मन्दोदर्या सहितो मेरुपर्वते ययौ। तस्मिन्समये मेघप्रभात्मजः खरदूषणविद्याधरश्चन्द्रणखां जातरागो हृत्वा पाताललंकां ययौ। तत्रस्थं चन्द्रोदरनृपमादित्यरजसः सूनुं निर्वास्य स्वयं राज्यमाजगृहे। एतद्वृत्तान्तं दशकन्धरः श्रुत्वा क्रुद्धो रावणः। खरघाताय यान्तं मन्दोदरी देवी रावणं वारयामास। राजन्कोऽयं कदाग्रहः। यतः– कन्याऽवश्यं कस्मैचिद्देया। शूर्पणखया अनुरूपवरो वृतः खरदूषणोऽदूषणस्ते पत्तिः विक्रमी। अतः प्रधानपुरुषं प्रेष्योद्वाहं कुरु। पातालल‍ङ्कां च देहि, धेहि च प्रसन्नताम्। मन्दोदर्या यथोक्तं, रावणेन तथा कृतम्। ततः पातालल‍ङ्काराज्यं कुर्वन् खरदूषणः शूर्पणखया सह भोगान् बुभुजे रावणाज्ञया। ततो निर्वासितो चन्द्रोदरो नृपोऽनुराधया पत्न्या सह वने गतस्तत्रानुराधा गर्भिण्यभूत्। तस्मिन्समये चन्द्रोदरो मृतः। अनुराधा तनयमसूत। तस्य नाम दत्तं विराध इति। मदोत्कटं विद्याद्यलंकृतं खरदूषणे वैरं कुर्वाणं वालिनरेश्वरं सिषेवे। एकस्मिन्दिने रावणो दूतमनुशिष्य किष्किन्धाधिपतिं वालिनं प्रति प्रेषयामास। सोऽपि दूतो गत्वा वालिनं

ग्यजिघपत्र। हे राजन्! अहं रावणस्य दूतः। रावण इति वक्ति। अस्माकं पूर्वजः कीर्तिधवलस्तेन तव पूर्वजः श्रीकण्ठो वैरिभयाद्रक्षितः। तयोः प्रीतिरभूत्। प्रीत्या वानरद्वीपराज्ये स्थापितः। तदादिरावयोः परस्परं भूयसी प्रीतिश्चलितोभयोः पक्षयोः। यावत्त्वं राज्ये स्थापितोऽतस्त्वं मम सेवको मम सेवां कुरु। यथावयोः प्राग्वत्स्नेहो वर्धते। प्राग्वत्सेवकत्वं कुरु। सेवां कुर्वतस्तव राज्यं वृद्धिं यास्यति। वालिर्वोचत्। भो दूत! अहं न जानामि उभयोः सम्बन्धोऽस्ति राक्षसवानरयोः क्षीरनीरवत्संमिलितयोः। परमहं देवं गुरुं विनाऽन्यस्य कस्यापि सेवां न जानामि। यतः—

देवं सर्वज्ञमर्हन्तं साधुं च सुगुरुं विना। सेव्यमन्यं न जानामि मोहः कः स्वामिनस्तव॥१॥

ततो दूतेनोक्तम्—भो राजेन्द्र! क्रमागतं स्नेहं मा खण्डय। दशमौलये विप्रियं कुर्वतस्तव सौख्यं न भविष्यति। वालिनोक्तम्—तव स्वामी दर्पोत्कटो वर्तते। तस्य दर्पं हरिष्यामि। ततो विसृष्टो गतो दूतो रावणं नत्वेत्यूचे। भो रावण! राजेन्द्र! वालिस्त्वाज्ञां न मन्यते किम्बहुनोक्तेन। तच्छ्रुत्वा रुष्टो रावणः क्रोधोद्धुरकन्धरः ससैन्यः पुष्पकविमानाधिरूढो युद्धाय किष्किन्धां ययौ। यतः—

पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैः। युद्धे विजयसन्देहः प्रधानपुरुषक्षयः॥१॥

सन्नद्ध वालिराजोऽपि राजमानो भुजौजसा। तमभ्यागाद्दोष्मतां हि प्रियो युद्धातिथिः खलु॥२॥

ततः प्रवृत्ते युद्धे उभयोरपि सैन्ययोः। गण्डशैलागण्डशैलैर्द्रुमाद्रुमि गदागदि॥३॥

तत्राचूर्यन्त तिलशो भ्रष्टपर्वतवद्रथाः। मृत्पिण्डवदभिद्यन्त महान्तोऽपि मतङ्गजाः॥४॥

कुष्माण्डवदखण्डयन्त स्थाने स्थाने तुरंगमाः। चञ्चापुरुषवद्भूमावपात्यन्तपदातयः ॥५॥

एवंविधं प्राणिसंहारं प्रेक्ष्य वालिवानरो दशास्यं प्रत्यूचे। भो रावण! भवतां प्राणिवधः कर्तुं न युज्यते। तर्हि किं पुनः पञ्चेन्द्रियवधः। त्वं श्रावको विवेकी दोष्मान् जनक्षयं कुर्वन् किं न लज्जसे? एवं वालिना सम्बोधितो रावणो दयावान् युद्धे कुशलो द्वन्द्वयुद्धं मेने। ततो द्वावप्यन्योन्यं द्वन्द्वयुद्धेन युयुधाते, शस्त्राशस्त्रैर्मन्त्रामन्त्रैर्वाणावाणैश्चिरं युद्ध्वा ततो रावणश्चन्द्रहासं खड्गं चकर्ष, वालिनं हन्तुं धावितः। शोभितो रावणस्तेन खड्गेनोत्प्रेक्ष्यत एकशृंगो गिरिरिव वा एकदन्तो गज इव। आपतन्तं रावणमवलोक्य कुपितो वालीचिन्तयति। एनं किंकरोमि क हन्मि चन्द्रहाससहितम्पाताले क्षिपामीति विचिन्त्य करे धृत्वा वामकक्षाकोटरे क्षिप्त्वा वालिराट् चतुःसमुद्रं बभ्राम। भ्रान्त्वा सचन्द्रहासं रावणं बभाषे। भो रावण! तव काचित् शक्तिरस्ति? रावणेनोक्तम् मुञ्च मुञ्च गता शक्तिस्तच्छ्रुत्वा कृपालुना वालिना मुक्तो रावणः। उक्तं च:—

वीतरागं सर्वविदमाप्तं त्रैलोक्यपूजितम्। विनार्हन्तं न मे कश्चिन्नमस्योऽस्ति कदाचन ॥१॥

त्वं मया मुक्तः, पूर्वोपकारान् स्मृत्वा मया तव राज्यं च दत्तं, त्वं सुखेन राज्यं भुंक्ष्व, अन्यथा मयि राज्यंकुर्वाणे त्वयि राज्यं कुतो भवेत् अहंपरिव्रज्यामादास्ये शिवसाम्राज्यकारणं। किष्किन्धायां तव सेवकः सुग्रीवो भवतु। एवं कथयित्वा रावणाज्ञया सुग्रीवं किष्किन्धाराज्ये संस्थाप्य वालिराट् स्वयं गगनचन्द्रर्षिपादमूले व्रतमग्रहीत्। संयमं लात्वैकादशांगीं पठित्वा विविधाभिग्रहपरस्तपस्तेपे। कदाचित्प्रतिमाधरः, कदाचिद्ध्यानवान्, कदाचित्कायोत्सर्गो, कदाचिद्योगासनस्थः, कदाचिन्मौनतत्परः, कदाचिद्वैयावृत्तिकरः, कदाचिद्दर्शनासक्तः, कदाचिद्गुरुभक्त एवं विहरति। कदाचिदष्टापदे गत्वा मासक्षपणं विधाय पारणकं करोति। पुनः

कायोत्सर्गे मासक्षपणान्त आचाम्लेन पारणकं करोति । एवं कुर्वाणस्य तस्यानेकलब्धय उत्पन्ना अणिमालघिमादयः । एव वालिमुनिर्बहून्वर्षान्यावत्तपस्तेपे । इतश्च सुग्रीवराडपि श्रीप्रभां स्वां पुत्रीं दशमौलये दत्वा सेवको भूत्वा वालिपुत्रं चन्द्ररश्मिं यौवराज्यपदे कृत्वा सुखेन राज्यं करोति। श्रीप्रभामुद्वाह्य रावणोऽपि लङ्कां गतः । रावणेनाप्यन्येषा विद्याधराणां बह्व्यः कन्यका उपयेमिरे । एकस्मिन्दिने रावणो नित्यालोकपुरे नित्यालोकविद्याधरेशितुः कन्यकां रत्नावलीनाम्नीमुद्वोढुं याति । अष्टापदोपरिगच्छतस्तस्य पुष्पकं नाम विमानं स्खलितं सद्यो वप्रे सैन्यमिव, पर्वते नदीपूरमिव, नंगरैर्यानपात्रमिव, आलानस्तंभे गजमिव । विमानं स्खलितं दृष्ट्वा रावणश्चुकोप । तत्क्षणादेव विमानं मुक्त्वाऽधोऽवततार । ततोऽष्टापदे कायोत्सर्गस्थं वालिमुनिं दृष्ट्वा चिन्तयति । अहो एप दुराचारो मुनिवेषेणाद्यापि कषायं न मुंचति । येनाथाह समुद्रे क्षेप्स्यामि । क्रोधतस्तेन साधुहत्या तीर्थभङ्गादि न चिन्तितम्, धिक् क्रोधः । यतः—

क्रोधो मूलमनर्थानां क्रोधः संसारवर्धनः । धर्मक्षयकरं क्रोधस्तस्मात्क्रोधं विवर्जयेत् ॥१॥

कोहपयट्टु देहघरी तिन्नि विकार करेइ । अप्पंताबि परतवि परतहहाणि करेई ॥२॥

कोही लग्गपलेवणु डज्झीगुणरयणाइ । उपशमजलीं जेम उल्हवी सही ते दुःख सयाइं ॥३॥

सन्तापं तनुते भिनत्ति विनयं सौहार्दमाच्छादयत्युद्वेगं जनयत्यवद्यवचनं सूते विधत्ते कलिम् ।
कीर्तिं कृन्तति दुर्मतिं वितरति व्याहन्ति पुण्योदयं दत्ते यः कुगतिं स हातुमुचितो रोषः सदोषः सताम् ॥४॥

रावणः क्रोधारुणोऽष्टापदं विदार्य मध्ये प्रविश्य विद्यासहस्रं स्मृत्वाऽष्टापदं बाहुभ्यामुद्दध्रे। तडित्तडितिकुर्वाणमष्टापदं कम्पमान

दृष्ट्वा वालिमुनिरवधिज्ञानेन ज्ञात्वा कायोत्सर्गं पारयित्वा सावधानोऽनेकलब्धिनिधानः प्राणिरक्षणपरो भरतेश्वरकारितचैत्यसंसरणपरो भगवान् वाली रागद्वेष विनैष रावणशिक्षानिमित्तं वामपादाङ्गुष्ठेनाष्टापदमूर्द्धानं किञ्चिदपीडयत्। वालिवामाङ्गुष्ठाग्रसम्पर्कात् स्वस्थानस्थितो गिरिः संकुचितः। रावणो मुखेन रुधिर वमन् अरावीत्। तदा तेन लोके रावण इति नाम जातम्। तमारावं श्रुत्वा मुक्तो रावणः, साधुना तत्कृतं तीर्थरक्षाकृते रावणशिक्षाकृते च। ततो निःसृत्य रावणो निष्पतापोऽनुतापवान् वालिनं नत्वा रचिताञ्जलिरेवं व्याजहार। भूयो मयापराधः कृतः भो साधो त्वया क्षन्तव्यः। अथापराधं नाहं करिष्ये। भवच्छक्तिर्मया दृष्टा। हे प्रभो त्वया मम प्राणा दत्ताः। त्वं माता त्वं मे पिता जीवितदानात् इत्युक्त्वा त्रिःप्रदक्षिणीकृत्य नमश्चक्रे दशाननः। दशास्यो मुनीन्द्रं स्तौति यथा–

अहो ते निज्जियो कोहो अहो माणो पराजिओ। अहो ते निक्खिया माया अहो लोहो वशीकओ ॥१॥
अहो ते अज्जवं साहु अहो ते साहु मद्दवं। अहो ते उत्तमा खन्ति अहो ते मुत्ति उत्तमा ॥२॥
इहंसी उत्तमो भंते पच्छाहोहीसी उत्तमो। लोगुत्तमुत्तमं ठाणं सिद्धिं गच्छसि नीरओ ॥३॥

इत्यादि स्तुत्वा रावणो भरतकारितेऽष्टापदेऽष्टापदचैत्ये सान्तःपुरो गतः। तत्र राजचिह्नानि यथा–'खग्गं छत्तो वाहनमउडं चमरे अपञ्चमए' इत्यादीनि मुक्त्वा चैत्यमध्ये गतो रावणः। अष्टप्रकारेण पूजां करोति, यथा—

वरपुष्फगन्धअक्खय पईवफलधूव नीरपत्तेहीं। नेवज्ज विहाणेणय जिणपूआ अट्ठहा भणिया ॥१॥

इत्यादिकां पूजां विधायारात्रिकमङ्गलप्रदीपगीतनृत्यवादित्रादिकं कुर्वतो वीणातन्त्री त्रुटिता ततो रावणेन भुजनसां समाकृष्य

वीणां संमार्ज्य वादिता। गानं कुर्वताऽन्तःपुरीभिर्नर्तितम्। तत्र पूर्वं धरणेन्द्र आगात्। तेन रावणभक्तिर्दृष्टा। संतुष्टः प्रोवाच। भो रावण! अर्हद्भक्तिवस्तत्र मुख्यं फलं मोक्षस्तथापि किंचिद्याचस्व। रावणेनामोघं शस्त्रं याचितम्। ततो धरणेन्द्रेणामोघविजया नाम्ना विद्याशक्तिर्दत्ता। धरणस्तिरोदधे। रावणोऽपि नवीनैरष्टोत्तरशतकाव्यैः स्तुत्वा, यथा—

अनघ्यगनविद्धांसो निर्द्रव्यपरमेश्वराः। अनलंकारसुभगाः पान्तु युष्मज्जिनेश्वराः ॥१॥

ये देवा भवतः पादौ भवत्पादाविवाश्रिताः। ते लभन्तेऽद्भुतां भव्याः श्रियं त इव शाश्वतीम् ॥२॥

कलेव चन्द्रस्य कलंकमुक्ता मुक्तावलीवोरुगुणप्रपन्ना। जगत्त्रयस्याभिमतं ददाना जिनेश्वरी कल्पलतेव मूर्त्तिः॥

तीर्थनाथान् नमस्कृत्य नित्यालोकपुरे गतस्तत्र रत्नावलीमुद्वाह्य पुनर्लङ्कामागतः। वालिमुनेरपि निर्मलं संयमं पालयतो घनघातिकर्मक्षयतः केवलज्ञानमुत्पेदे। सुरासुरैरपि केवलमहिमा चक्रे। वालिकेवल्यपि धर्मं कथयन्नास्ते। यतः—

धम्मेण कुलप्पसुई धम्मेण य दिव्वरूवसम्पत्ति। धम्मेण धण समिद्धि धम्मेण सुवित्थडा कीत्ति ॥१॥

धम्मेण विणा जइ चिन्तियाइं लब्भंति जीवसुक्खाइं। ता तिहु यणंमि सयले कोवि नहु दुक्खिओ हुज्जा ॥२॥

निर्दन्तः करटी हयो गतजवश्चन्द्रं विना शर्वरी निर्गन्धं कुसुमं सरो गतजलं छायाविहीनस्तरुः।
रूपं निर्लवणं सुतो गतगुणश्चारित्र्यहीनो यतिर्निर्देवं भवनं न राजति तथा धर्मं विना मानवः ॥३॥

इत्यादि धर्मदेशनां कृत्वा सिद्धानन्तचतुष्को वालिमुनिर्मोक्षमगमत्। इति वालिमुनिकथा॥

इतश्च वैताढ्यगिरौ ज्योतिःपुरे नगरे ज्वलनशिखो नाम्ना विद्याधराधिपोऽस्ति। तस्य श्रीमती नाम्ना पट्टराज्ञी। तयोः पुत्री

तारा नाम्नी । सा साहसगतिना विद्याधरेण याचिता । राज्ञा सुग्रीवेणापि याचिता । ततो ज्वलनशिखविद्याधरेण नैमित्तिकः पृष्टो मम पुत्री सुतारा कस्य दीयते उभयोर्मध्ये । नैमित्तिकेनोक्तम् । राजन् ! साहसगतिरल्पायुः । सुग्रीवः कपीश्वरश्च दीर्घायुरिति नैमित्तिकेन कथिते सुग्रीवाय सुतारा कन्या दत्ता । यथा—

हरिणाक्षी गजगमना प्रहसितवदना मनोरमा रामा । सुललितवचना श्यामा बिम्बोष्ठी नक्रदीपशिखा ॥१॥

राज्ञा सुग्रीवेण परिणीता सुतारा, वियोगार्दितः साहसगतिर्दिनेदिने कृष्णपक्षे शशिवत् क्षीणोऽभूदङ्गारचुम्बित इव क्वापि रतिर्न लेभे । सुग्रीवस्य सुतारायां रममाणस्याङ्गद (१) जयानन्द (२) नामानौ पुत्रौ बभूवतुः । यतः—

पियमहेलामुहकमलं पालमुहं धूलिधूसरच्छायं । सामिमुहं सुपसन्नं तिन्निवि पुन्नेहिं पावन्ति ॥१॥

धनाढ्यता राजकुले च मानं प्रियानुकूला तनया विनीताः ।
धर्मे मतिः सज्जनसंगतिश्च षट् स्वर्गलोका जगतीतलेऽपि ॥२॥

तौ दृष्ट्वा हर्षितः सुग्रीवः सुखेन राज्यं करोति । स साहसगतिः मन्मथोन्मथ्यमानो चेतसीदं चिन्तयामास । कामिनां कुतो लज्जा । यतः—

नैव पश्यति कामांधो जन्मांधो नैव पश्यति । न पश्यति मदोन्मत्तो ह्यर्थी दोषं न पश्यति ॥१॥

मा मतिः परदारेषु परद्रव्येषु मा मतिः । परापवादिनी जिह्वा माभूदेव कदाचन ॥२॥

एतदर्थं साहसगतिना किं कृतम्—हिमवद्गिरौ गत्वा रूपपरावर्तनीं शेमुषीं विद्यां शिक्षित्वा सिद्धविद्यो जातः । इतश्च लङ्का-

नगरीतो दशाननो दिग्यात्रार्थं निर्गतः। सर्वान्नरेन्द्रान्विद्याधरांश्चसाधयित्वा सर्वान् देशान्वशीकृत्य सुग्रीवादिचमूचक्रपरिवृत इन्द्रं प्रति चचाल। मार्गेण गच्छता रावणेन रेवा नाम नदी दृष्टा। तस्य तीरे सैन्यं निवेश्य रावणः श्रीजिनपूजां करोति। यतः—

जिनपूजनं विवेकः सत्यं शौचं सुपात्रदानं च। महिमक्रीडागारः शृंगारः श्रावकत्वस्य ॥१॥

पूजया भवति राज्यपूजितो पूजया भवति निर्मला मतिः।
पूजया भवति नाकपूजितः पूजया भवति निर्वृतिः क्रमात् ॥२॥

सयं पमज्जणे पुण्णं सहस्सं च विलेवणे। सयसाहस्सिआ माला अणन्तं गीयवाईए ॥३॥

पूजां कृत्वा स्तुतिं कृत्वा नासाग्रन्यस्तदृग्द्वन्द्वः पद्मासनस्थो जिनपुरतो ध्यानेनास्थात्। रावणस्य ध्यानं कुर्वतो नद्या जलं ववृधे। तेन जलेन वृद्धिंगतेन श्रीजिनवरेन्द्राणां पूजा प्लाविता तेन पूजापहारेण शिरश्छेदादधिकदुःखेन दुःखितो जातकोपो रावण इदमभ्यधात्। रे रे पश्यतां केन मे पूजा विनाशिता, देवेन, दानवेन, मानवेन, राक्षसा, वानरेण वा विलोकयत, विलोकयित्वा तं मदुपेहानीयताम्। तस्मिन्समये कश्चिद्विद्याधरो रावणं विज्ञपयति। राजन्! माहिष्मती नाम्ना नगरी तस्यां सहस्रांशुनामा राजास्ति सहस्रशो नृपैः सेव्यमानो महाभुजो रेवायां सेतुबन्धं कृत्वा सहस्रशोराज्ञीपरिवृतो जलकेलिं करोति। राज्ञीभिः सह जलकेलिं कृत्वोभयोः कुले लक्षशः सुभटान् मुक्त्वा यथेप्सितं रन्त्वा जलं सेतुबन्धान्मुक्तम्। तेन जलेन पूजा प्लाविता। राजन्! पश्यतामेतानि तस्य स्त्रीणां निर्माल्यानीति तद्विद्याधरवचनं श्रुत्वा रुष्टो रावणो राक्षसभटान् प्रैषीत्। तेऽपि राक्षसभटास्तत्रगत्वा संग्रामं चक्रिरे मिथः। राक्षसवानरसैन्यैः सहस्रांशुसैन्यं भग्नम्। ततः सहस्रांशुराद् अधिज्यं धनुः कृत्वा राक्षसस्योपरि धावितः।

राक्षसान् हक्कयामास। ततो नष्टा राक्षसाः। तावता रावणो ऽप्यागात्। यतः—

द्वावप्यमर्षणौ द्वावप्यूर्जितौ द्वावपि स्थिरौ। विविधैरायुधैर्युद्धं व्यदधानौ चिरायुतौ ॥१॥

दोर्वीर्येणावीजय्यं तं ज्ञात्वा जग्राह रावणः। विद्यया मोहयित्वेभमिव माहिष्मतीपतिम् ॥२॥

रावणस्तं बद्धा स्कन्धावारेऽनयत्। रावणो यावत् सभायामुपविष्टो हृष्टमनास्तावच्चारणर्षिः शतबाहुः समाययौ। रावणोऽपि सिंहासनात्समुत्थाय तस्य साधोः पादौ ननाम। यतः—

अवद्यमुक्ते पथि यः प्रवर्तते प्रवर्तयत्यन्यजनं च निःस्पृहः।
स सेवितव्यः स्वहितैषिणा गुरुः स्वयं तरंस्तारयितुं क्षमः परम् ॥१॥

विदलयति कुबोधं बोधयत्यागमार्थं सुगतिकुगतिमार्गौ पुण्यपापे व्यनक्ति।
अवगमयति कृत्याकृत्यभेदं गुरुर्यो भवजलनिधिपोतस्तं विना नास्ति कश्चित् ॥२॥

एवंविधं तरणतारणसमर्थं साधुं ज्ञात्वा ववंदे। मुनिरपि तस्य रावणस्य धर्मलाभाशीःप्रदात्। ततो रावणो बद्धाञ्जलिपुटो मुनिमवोचत्। भो साधो किमागमनकारणमुच्यताम्। मुनिना धर्मोपदेशो दत्तो यथा–

काया हंसविना नदी जलविना दात्रा विना याचको, भ्राता स्नेहविना फलं ऋतुविना धेनुश्च दुग्धं विना।
भार्या भक्तिविना पुरं विभुविना वृक्षं च पत्रं विना, दीपस्तैलविना निशा शशिविना पुण्यं विना मानवः ॥१॥

विलम्बो नैव कर्तव्य आयुर्याति दिनेदिने। न करोति यमः क्षान्तिं धर्मस्य त्वरिता गतिः ॥२॥

इत्यादि धर्मदेशनां दत्त्वा हे रावण राजेन्द्र ! श्रूयताम्—माहिष्मत्यां नगर्यां शतबाहुनामाहं राजाऽभवम् । भवभावाद्विरक्तोऽहं सहस्रकिरणे पुत्रे राज्यमारोप्य मोक्षाध्वस्यन्दनप्रायमहं व्रतमशिश्रियम् ।

इत्यर्धोक्ते दशग्रीवो नमद्ग्रीवोऽब्रवीदिति। किमसौ पूज्यपादानामङ्गजन्मा महाभुजः ? ॥१॥

ओमिति मुनिनोक्तो रावणो जगाद । स्वामिन् ! दिग्विजयप्रक्रमेणेह नदीतटे आगतेनेहावासं विधाय मया जिनपूजा कृता । सा अमुना मुक्तवारिणा पूजा प्लाविता । तेन मया कोपोऽकारि । मुनेरग्र इत्युक्त्वा रावणस्तत्क्षणादेव सहस्रांशुमाकार्य लज्जानम्राननमेवमुवाच । भो महासत्त्व ! त्वं मे भ्राता, भो साधो त्वं पिता मम, स्वेच्छं रमस्व। गच्छ स्वस्मिन् राज्ये। सहस्रांशुनोक्तम् राजन् ! मे कार्यं नास्ति । अहमपि व्रतं श्रयिष्यामीत्युक्त्वाऽनरण्यं नाम तनयं दशास्याय समर्प्य पितृपादान्ते व्रतमग्रहीत् । रावणोऽपि तौ शतबाहुसहस्रांशू नत्वा सहस्रांशुपुत्रेऽनरण्ये राज्यं दत्त्वा दशानन इन्द्रं प्रत्यम्बरे चचाल । इति शतबाहुपुत्रसहस्रांशुकथा ॥

रावणस्याम्बरे गच्छतः यष्टिमुष्ट्यादिघातप्रहारजर्जरो नारदमुनिः पश्चादागतो रावणं प्रति बभाषे। भो राजेन्द्र ! श्रूयताम्, राजपुरे नगरे मरुत्तो नाम भूपतिर्मिथ्यादृष्टिः । तेन यज्ञः प्रारब्धस्तस्मिन्यज्ञे बहवश्छागा वधाय समानीताः सन्ति । आकाशादवतीर्य मया प्रोक्तं भो मरुत्तराट् त्व हिंसां मा कुरु, यागे छागान्मा मारय । मरुत्तराडूचे भो नारद ! अयं पशुवधादिमहाधर्मः शास्त्रोक्तः स्वर्गहेतवे । ततो नारद उवाच, मयोक्तम् यज्ञेऽजैर्यष्टव्यम् न जायन्त इत्यजाः त्रिवर्षव्रीहयः नतु पशवश्छागाः । अथवा यथा—

ततस्तस्याहमित्याख्यां वपुर्वेदीरुदीरिता । आत्मा यष्टा तपो वह्निर्ज्ञानं सर्पिः प्रकीर्तितम् ॥१॥

कर्माणि समिधः क्रोधोदयस्तु पशवो मताः । सत्यं यूपः सर्वप्राणिरक्षणं दक्षिणा पुनः ॥२॥
त्रिरत्नी तु त्रिवेदीयमिति वेदोदितः क्रतुः । कृतो योगविशेषेण मुक्तेर्भवति साधनम् ॥३॥

अतो राजन् छागवधान् निवर्तय । इदं मम वचनं श्रुत्वा क्रोधारुणलोचना विप्रा मम हननायाधावन् । तैर्यष्टिमुष्ट्यादिभिर्भृशं हतो राजन्निहागमम् । तच्छ्रुत्वा रावणस्तत्र गतः । मरुत्तभूपालं यागवधान्निषिध्य सर्वज्ञोक्तो धर्मः समादिष्टः । हृष्टाः सर्वेऽपि भूपाला अहिंसामयं धर्मं सर्वेऽप्याददिरे ॥ नारदकथा ॥

रावणो नारदं पप्रच्छ—भो नारद ! पशुवधादियज्ञाः केनोपदिष्टाः । नारद उवाच । शुक्तिमती नगर्यस्ति । तस्यामभिचन्द्रो नाम राजा । तस्य पुत्रो वसुनामा । तस्यां नगर्यां क्षीरकदम्बकनामा विप्रस्तस्य पुत्रः पर्वतकनामा । प्राघूर्णको नारदश्चाहम् । एते त्रयोऽपि क्षीरकदम्बकोपाध्यायान्तिके पठन्ति । उपाध्यायस्त्रीनपि वसुपर्वतकनारदान् पाठयति । एकस्मिन्दिने एते त्रयोऽपि पाठखेदश्रान्ता त्रिप्रहरे सुप्ताः । आकाशे चारणयुग्मं याति । तयोर्मध्य एको ज्ञानवान् । अनेनापरस्योक्तम् । एतेषां त्रयाणां मध्ये एकः स्वर्गे गमी । द्वौ नरके यास्यतः । इति श्रुतमुपाध्यायेन ध्यानवता । तत उपाध्यायेन चिन्तितं मम पाठितौ नरके यास्यतः अथ-
वा पाठनेन, परं परीक्षां करोमि कौ नरकं यास्यतः को मोक्षं यास्यतीति विमृश्य त्रयः पिष्टमयाः कुक्कुटाः कृताः । त्रयाणां दत्त्वेत्युक्तं च यत्र कोऽपि न पश्यति तत्र हन्तव्याः ततो विजने गत्वा पर्वतकेन वसुराजपुत्रेणापि हतः । नारदेन चिन्तितं कुत्र हन्यते । विजने गत्वा चिन्तितमेते पक्षिणः पश्यन्ति, देवाः पश्यन्ति, सिद्धाः पश्यन्ति, तर्हि तत्स्थानं नास्ति यत्र कोऽपि न पश्यति । कुं ज्ञातम् गुरुणोक्तं, जीवो न हन्यते गुरुणा इति ज्ञापितम् ततो नारदेन कुक्कुटो गुरुणामग्रे मुक्तः, क्षीरकदम्बकेनोक्तम् कुक्कुटः कथं न

इतः। नारदेनोक्तं स्वामिन् तत्स्थानं नास्ति यत्र कोऽपि न पश्यतीति ज्ञात्वा मया कुक्कुटो न मारितः, गुरुणा ज्ञातमेष शिवंगमी। इति वैराग्यात् उपाध्यायेन साधुसमीपे दीक्षा गृहीता। अभिचन्द्रेणापि राज्ञा वसुपुत्राय राज्यं दत्त्वा दीक्षा गृहीता। तदनु क्षीरकदम्बकोपाध्यायपदे तत्पुत्रः पर्वतकोऽभूत्। अभिचन्द्रराज्ये तत्पुत्रो वसुनामाऽभूत्। तदन्वहं तु स्वग्रामे गतः। इतश्च वसुराजाय केनचित्स्फटिकशिला दत्ता। तदुपरि सिंहासनं उपविशतो राज्ञ इति प्रसिद्धिर्जाता। महाराजस्य वसुराजस्य सत्यवादिनः सिंहासनमाकाशे तिष्ठति। यतः—लोको हि बलवान् खलु। तया प्रसिद्ध्या सर्वे राजानो वशवर्तिनो जाता। एवं सुखेन राज्यं करोति, हे रावण राजेन्द्र! एकस्मिन्दिनेऽहं शुक्तिमतीं पुरीमगाम्। पर्वतकगृहे गतवान्। तत्रासौ सभामध्ये व्याख्याने क्रियमाणे एवं व्याख्यानं करोति। अजैर्यष्टव्यम्, कोऽर्थः? अजशब्देन छागास्तैर्होतव्यम्। मयोक्तम्। भो एवंविधं व्याख्यानं मा कुरु। अजशब्देन त्रिवर्षव्रीहयो न तु छागाः। पर्वतकेनोक्तम्—अजशब्देन पशवो न तु व्रीहयः। एवं विवादं कुर्वतोस्तयोर्मध्ये पर्वतकेनोक्तम्। ममोक्तं यद्यसत्यं भवति तदा मम जिह्वा याति। नारदेनोक्तम् ममोक्तम् यदाऽसत्यं भवति तदा मम शिरो याति। अत्रार्थे कः साक्षी। उभाभ्यामुक्तं राजा वसुः सहाध्यायी साक्षी। एवं कथयित्वा सभा विसृष्टा। गृहान्तर्गते पर्वतके मात्रा प्रोक्तम्। भो पुत्र त्वज्जनकेनाजशब्देन त्रिवर्षव्रीहय उक्ताः नतु छागाः। त्वयैतदसत्यं प्ररूपितम्। पुत्रेणोक्तम् मातर्यदुक्तं तदुक्तमेव अथ त्वं राज्ञोऽग्रे गत्वा कथय यथाजीवितं भवति। अन्यथा जीवितं नास्ति। ततः क्षीरकदम्बकोपाध्यायपत्नी वसुराट्समीपे गता उक्तञ्च—भो राजेन्द्र! वसुराज! तव पुरतः किञ्चित्प्रार्थयामि। वसुराजेनोक्तम्। मातः प्रार्थय। ततः प्रार्थितं राजेन्द्र! मह्यं पुत्रभिक्षां देहि। उपाध्यायपत्न्या सर्वं कथितं नारदपर्वतकप्रवृत्त्यादिकम्। ततो वसुराजेन प्रोक्तं यत् नारदेनोक्तं तत्सत्यं तव पुत्रेणोक्तं तदसत्यम्।

मातरसत्यं कथं ब्रुवे यतः–

असत्यमप्रत्ययमूलकारणं कुवासनासद्मसमृद्धिवारणम् ।
विपन्निदानं परवञ्चनोर्जितम् कृतापराधं कृतिभिर्विवर्जितम् ॥१॥

यशो यस्माद् भस्मीभवति घनवह्नेरिव वनम्, निदानं दुःखानां यदवनिरुहाणां जलमिव ।
न यत्र सच्छायातप इव तपःसंयमकथा, कथंचित्तन्मिथ्यावचनमभिधत्ते न मतिमान् ॥२॥

हे मातः ! एवं जानन्नप्यहं कूटसाक्ष्यं कथं ब्रुवे ? तत उपाध्यायपत्न्योक्तम्। राजन् ! ममोपरोधेन ब्रूहि ततः प्रतिपन्नं राज्ञा। प्रभातसमये नारदपर्वतकावन्येऽपि बहवो लोका राजसभायां समाजग्मुः। उभाभ्यां स्वं स्वं व्याख्यानं कृतम्। तत उभाभ्यां पृष्टम्। राजन् ! क्षीरकदम्बकोपाध्यायेन कोऽर्थः कथितः ? परलोकभयमजानता वसुराजेनाविचार्योक्तम्। अजशब्देनच्छागा उच्यन्ते न तु व्रीहयः। ततः पर्वतकपक्षं राज्ञा कृतं दृष्ट्वा वाढस्वरेण नारदोऽवोचत्। भो देवा असत्यवादिनं वसुं शिक्षापयत। यथा–

वसुर्वसुमतीनाथस्ततो वसुमतीतले। पतितः सद्यो नरकपातं प्रस्तावयन्निव ॥१॥
देवताभिरसत्योक्तिकुपिताभिर्निपातितः। जगाम नरकं घोरं नरनाथो वसुस्ततः ॥२॥

वसोः पुत्राः पृथुवसुः (१) चित्रवसुः (२) वासवः (३) शक्रः (४) विभावसुः (५) विश्वावसुः (६) शूरश्च (७) महाशूरः (८) पितृपदे स्थिताः सर्वेऽपि देवताभिर्हतास्तथैव प्ररूपणात् मृत्वा सर्वेऽपि नरकं गताः। वसुर्नवमः पुत्रो नंष्ट्वा नागपुरं ययौ बृहद्ध्वजो वसुस्तुर्दशमो मथुरायां ययौ। पर्वतकोऽपि नगर्या निष्कासितो नगरलोकैर्धिक्कृत्वा। पर्वतको नगर्या निष्कासितो महाका-

स्युरेण संगृहीतः ।

## ॥ इति पर्वतकवसुराजकथा ॥

अथ महाकालकथा कथ्यते । यथा रावणेन पृष्टो नारद उवाच—चारणयुगलं नाम नगरम् । अयोघनो नाम्ना राजा । दिति-नाम्नी राज्ञी । तयोः पुत्री सुलसा नाम्नी । तस्याः स्वयंवरो राज्ञाऽयोघनेन प्रारब्धः । अनेके राजान आहूताः । अनेके राजान आगताः । तेषु मध्ये सागरोराडधिकः । सागरस्य मन्दोदरी नाम्नी प्रतिहारी । सा सागराज्ञयाऽयोघननृपावासे प्रत्यहं याति । एकस्मिन्दिने मंदोदर्या कदलीवनमध्यस्थितया दितिसुलसयोर्वचनमश्रावि । यथा—ऋषभस्वामिपुत्रौ भरतबाहुबली । तयो रावपुत्रावादित्ययशःसोमयशसावभूताम् । सोमवंशे मम भ्राता तृणबिन्दुनामा । सूर्यवंशे तव पिता अयोघननामाऽस्ति । अयोघनस्वसा सत्ययशा नाम्नी तृणबिन्दुराजाय दत्ता । तयोः पुत्रो मधुपिंगलनामा मम भ्रातृसुतोऽहं त्वां तस्मै दीयमानामिच्छामि । अतस्त्वं तस्य कण्ठे वरमालां क्षिपेरिति शिक्षां दत्त्वा जननी स्वस्थानं गता, पुत्र्यपि स्वस्थानं गता । एतद्वचो मन्दोदर्या दास्या सागरराजस्याग्रे निवेदितम् । सागरेण भूभुजा निजपुरोहिताग्रे कथितम् । पुरोहितेन नवीनं शास्त्रं कृतं, तस्मिन्शास्त्रे सागरगुणा मधुपिङ्गलविगुणाश्च इति श्रूयते । तत्पुस्तकं पेटायां चिक्षेप । एकस्मिन्दिने स्वयंवरदिनादर्वाक्सभायां वाचयितुमारब्धम् । इतश्च तत्रादौ सागरोऽज्ञोचत् । वाच्यमानेऽत्र पुस्तके यो लक्षणहीनो यो वध्यस्ताड्यश्च सोऽखिलैरिति निश्चित्य पुरोहितेन तथा वाचितम् यथा सर्वेऽपि राजानः कन्यका च श्रृण्वन्ति । तच्छ्रुत्वा कन्यकया सागरो वृतः । मधुपिंगलश्च निर्घाटितः सभातो निष्कासितः । निष्कासनानन्तरं मधुपिंगलोऽपमानात् तापसोऽभूत् । बालतपः कृत्वा शुभध्यानेन मृत्वा व्यंतरेषु महाकालनामा सुरो जातः षष्टीवर्षसहस्रायुः ।

देवेनावधिज्ञानं प्रयुक्तं तेन सागरचेष्टितं ज्ञातम् । तस्य सुरस्य सागरराजस्योपरि महान्द्वेषो जातः द्वेषाच्चिन्तयति हन्मि सर्वान् मद्द्वेषिणः इति विचार्य तेन शुक्तिमत्यां नगर्यां पर्वतकमैक्षत। स सुरो विप्रवेषं कृत्वा शाण्डिलनामा त्वत्पितुर्मित्रोऽस्मीति कृत्वा मिलितः । देवस्य तेन पर्वतेन सह मैत्री जाता । शाण्डिलविप्रेणोक्तं भो पर्वतक त्वं यागान् पशुवधादीन्प्ररूपय। अहं तव पक्षं पूरयिष्यामि । विद्यया मनोभीष्टं करिष्यामि सर्वेषां दुर्गतौ पातनायायमुपायः कृतः । विशेषतः सागरस्य तेन देवेन देशे मारी विकुर्विता व्याधिरोगाश्चानेकशः । देवेनाकाशवाणी कृता यः पर्वतकमतं ग्रहीष्यति स रोगाच्छुटिष्यति ततः पर्वतकेन पशुवधादिकाः प्ररूपिताः । यः पशुवधादिकं यागं करोति तस्य समाधिर्भवति । तस्य देवः समाधिं करोति बहिर्मुखा लोकाः किमपि न जानन्ति । एकेन कृतं तत्सर्वैरपि क्रियते । यतः—

गतानुगतिको लोको न लोकः पारमार्थिकः । मृदितं राजकुलं सर्वं कुम्भकृन्मदने मृते ॥१॥

तेन पर्वतकेन यागाः प्ररूपिताः । महाकालदेवेन देवशक्त्या वृद्धिं नीताः । पर्वतकेन यागाः कथिताः । मातृमेधे यथा—

मातृमेधे वधो मातुः पितृमेधे वधः पितुः । अन्तर्वेदी विधातव्या दोषस्तत्र न विद्यते ॥१॥

इत्यादि समुपदिश्य सागरं स्वमते स्थापयित्वाऽनेकान्यागान्कारापयित्वा तस्यर्द्धिर्वृद्धिश्च दत्ता । ततः सप्रत्ययो लोकः प्राणिहिंसादिकान्मखान् निःशंकमकरोत् । तस्य पर्वतस्य मते स्थितः । सुलसासागरपुत्रेणानेके यज्ञाः कृताः । अजमेधे यज्ञेऽजा हुताः । ते देवेन जीवापिताः, एवमश्वमेधेऽश्वा हुतास्तेऽपि जीवापिताः । मातृपितृमेधे सुलसासागरौ जुहाव । यतः—

सागरं सुलसायुक्तं, सञ्जुहावाध्वरानले । कृतकृत्यो जगामाथ, महाकालः स्वमाश्रयम् ॥१॥

एवं पर्वताद्यागाः प्रवर्तिता महाकालेन विवर्धिताः। स पर्वतको मृत्वा नरकं गतः। ते हिंसात्मका यागा मया निषिद्धाः। ते विप्रा न मानयन्ति। तैर्विप्रैर्मम प्रहारा दत्ताः। अतस्त्वं तान्यागान्निषेधय। तेन रावणेन तत्रागत्य मरुत्तो राट् यागान्निषिद्धः।

॥ इति महाकालसुरकथा ॥

अथास्यैव नारदस्योत्पत्तिः कथ्यते।

रावण उवाच। मरुत्तराट् श्रूयताम्। ब्रह्मरुचिर्नाम्ना द्विज आसीत्। तेन तापसी दीक्षा गृहीता। तेन कर्म्मी नाम्ना भार्या कृता। तेन सह भोगाननुभवती सा गुर्विण्यभूत्। तस्मिन्नवसरे तत्र साधवः समागतास्तेष्वेकः साधुरब्रवीत्। भो ब्रह्मरुचिद्विजर्षे! त्वया किमारब्धं भवभीत्या गृहवासं त्यक्त्वा पुनर्गृहवासो मण्डितः। तच्छ्रुत्वा ब्रह्मरुचिना जैनदीक्षा गृहीता। सा तस्य भार्या कर्म्मी नाम्नी श्राविका जाता। तत्राश्रमे वसन्त्या तया पुत्रः सुषुवे नारदनामा रोदनादिविवर्जितः। सा तस्य माता कुत्रचिद्गताऽभूत् तावता जृम्भकामरैर्नारदोऽपजह्रे। तद्वियोगार्दिता कर्म्मी साध्व्यन्तिके प्राव्राजीत्। ते देवा नारदं पालयामासुः। शास्त्राण्यध्यापयन्ति स्म। क्रमेण पाठिता रोहिण्यादिविद्याः। शिक्षितसाध्वन्तिकेऽणुव्रतधरोऽपि यौवनं प्राप्तोऽपि न विषयाभिलाषी। शिखाधरो न गृहस्थो न संयतः। कुतूहली कलहप्रियो मुखरी देवैः संवर्धितत्वात् देवर्षिरित्युच्यते। प्रायेण स्वेच्छाचारी ब्रह्मचारी च विश्रुतः। इति रावणोक्तां वार्तां श्रुत्वा हर्षितो मरुत्तो नारदश्च ॥ इति नारदोत्पत्ति कथानकम् ॥

मरुत्तराजोऽपि स्वां कन्यां कनकप्रभां रावणाय ददौ। दशास्योऽपि तामुद्वाह्य तया सह तत्र रेमे। रावणस्ततोऽपि मथुरां नगरीं जगाम। तत्र हरिवाहनो मधुपुत्रेण सह संमुखमागात् त्रिशूलसहितेन। ईशानेन्द्रो यथा शूलेन सहितः शोभते तथा हरि-

वाहनपुत्रोऽपि शूलेन शोभते। तं शूलिनं दृष्ट्वा रावणोऽपृच्छत्। भो मधो! भो शूलिन्! भवता शूलं कुतो लब्धम्। ततो हरिवाहनः पुत्रं प्रत्यूचे। हे पुत्र! स्ववृत्तान्तं कथय। ततो मधुरूचे। हे रावणराजेन्द्र! श्रूयताम्। इदमायुधं प्राग्जन्मसुहृदा चमरेन्द्रेणार्पितम्। इदमुक्त्वा तत्कथां कथयति। यथा धातकीखण्डद्वीपे ऐरवतक्षेत्रे शतद्वारपुरे नगरे सुमित्रनामा राजपुत्रोऽभूत् तस्य प्रभवनामा सेवकस्तावुभौ मित्रे अभूताम् वसन्तमदनाविव। एकस्य कलाचार्यस्य समीपे तौ कलां जगृहतुः। एवं सुखेन दिनान्यतिवाहयतोस्तयोः कालो याति। उद्यौवनः कुमारः सुमित्रनामा पित्रा राज्ये स्थापितः। तेन राज्ञा प्रभवसेवको ग्रामाकरादिप्रदानेनात्मसदृशः कृतः। एकस्मिन्दिने मित्रेण सह राजाऽटव्यां गतः। तस्यामटव्यां राज्ञा भीमपल्लिपतेः पुत्री दृष्टा। तस्यां मोहितोराजाऽमार्गयत्। भीमपल्लिपतिना निजपुत्री वनमाला दत्ता। राजा तामुद्वाह्य निजनगरे समागतः। तया सह भोगान् बुभुजे। एकस्मिन्दिने वनमाला प्रभवमित्रेण दृष्टा। तया सह रन्तुकामो दिने दिने कृशो जज्ञे। यतः—

चिन्तातुराणां न सुखं न निद्रा, अर्थातुराणां न सुहृन्न बन्धुः।
कामातुराणां न भयं न लज्जा, क्षुधातुराणां न बलं न तेजः ॥१॥

दत्तस्तेन जगत्यकीर्तिपटहो गोत्रे मषीकूर्चकश्चारित्रस्य जलांजलिर्गुणगणारामस्य दावानलः।
सङ्केतः सकलापदां शिवपुरद्वारे कपाटो दृढः, शीलं येन निजं विलुप्तमखिलं त्रैलोक्यचिन्तामणिः ॥२॥

एकस्मिन्दिने प्रभवमेवंविधं कृशं दृष्ट्वा राज्ञा प्रोक्तम्। भो प्रभव! त्वं किं दुर्बलोऽसि? तव किं बाधते? कथय। स न कथयति। पुनः पृष्टम्। भो मित्र! तव किं बाधते? राज्ञा पुनः पुनः पृष्टे तेन सत्यमुक्तम्, राजन्मम वनमालारागो बाधते एतदौर्ब-

त्यकारणम्। तच्छ्रुत्वा राजा प्रोचे रे मित्र! त्वदर्थे राज्यं त्यजामि तर्हि वनमालया किम्? वनमाला तुभ्यं मया दत्ता। त्वमेनां गृहाण। अनया सह त्वं स्वेच्छया रमस्व। भोगान्भुंक्ष्व। साऽपि राज्ञा प्रेषिता। निशामुखे गता। तयोक्तम् हे प्रभव! त्वदर्थं प्रेषिताऽहमतस्त्वं मया सह रमस्व। अनुगतो राजा सर्वं पश्यति। सर्वं शृणोति च। प्रभवो बभाषे। यथा—

बभाषे प्रभवोऽप्येवं धिङ्माम् निरपत्रम्। अहो सत्त्वमहासत्त्वो यस्येदृक् सौहृदं मयि ॥१॥

प्रेम्णा अपि हि दीयन्ते परस्मै न पुनः प्रिया। इति दुष्करमेतद्धि कृतं तेनाऽद्य मत्कृते ॥२॥

ततो मनसि लज्जितश्चिन्तयति। अहो! मया किं कृतं, राज्ञोऽग्रे किमुक्तम्। धिङ्माम् कामान्धम् निर्लज्जं परस्त्रीगमनतत्परम्। यतः—

चत्वारो नरकद्वाराः प्रथमं रात्रिभोजनम्। परस्त्रीगमनं चैव संधानानन्तकायकम् ॥१॥

इति विचार्य तेन राज्ञी विसृष्टा। हे मातः त्वं स्वस्थानं गच्छ। त्वं मम माताऽसि। अहं तव पुत्रोऽस्मीत्युक्त्वा पादौ पतित्वा विसृष्टा। वनमालागतानन्तरं प्रभवोऽपि खड्गेन स्वशिरश्छेत्तुमारेभे। ततो राज्ञा प्रकटीभूय भणितम्। हे मित्र! मा साहसं कुरु। इत्युक्त्वा कृपाणमुद्दालितम्। ततः प्रभवोऽधोमुखो लज्जया वसुधां विशन्निवास्थात्। कथंचन सुमित्रेण स्वस्थानमनीयत। तौ राज्यं चक्रतुः स्नेहपरायणौ। ततः सुमित्राडन्ते दीक्षां लात्वेशानदेवलोके सुरोऽभवत्। ततश्च्युत्वा मथुरानगर्यां हरिवाहनराजस्य माधवीपट्टराज्ञीकुक्ष्यां मधुनामा पुत्रोऽभवत्। प्रभवोऽपि भवं भ्रान्त्वा विश्वावसुविप्रस्य ज्योतिर्मत्यां पत्न्यां श्रीकुमारनामा तनूरुहोऽभवत्। स श्रीकुमारः सनिदानं तपो विधाय काले विपद्य चमरेन्द्रोऽभवत्। अतस्त्वं मम पूर्वजन्मसुहृत् इत्याख्याय तेन चमरेन्द्रेण मे शूलं

प्रहरणं दत्तम्। द्विसहस्रयोजनं गत्वा कार्यं कृत्वा निवर्तते। इति श्रुत्वा रावणोऽपि तं मधुकुमारं भक्तिमन्तं शक्तिमन्तं च ज्ञात्वा स्वां पुत्रीं मनोरमां ददौ॥ इति मधुकुमारकथा॥

अथ लङ्काप्रापणादनन्तरमष्टादशसु वर्षेषु गतेषु रावणो मेरुपर्वते पाण्डुकवने चैत्यान्यर्चितुं गतो रावणस्तत्र पूजां करोति। यतः—

पापं लुम्पति दुर्गतिं दलयति व्यापादयत्यापदाम्, पुण्यं संचिनुते श्रियं वितनुते पुष्णाति नीरागताम्।
सौभाग्यं विदधाति पल्लवयति प्रीतिं प्रसूते यशः, स्वर्गं यच्छति निर्वृतिं च रचयत्यर्चाऽर्हतां निर्मिता॥१॥

तत्र पूजां कृत्वा आरात्रिकं मङ्गलप्रदीपं गीतनृत्यवादित्रस्तुतिस्तोत्रादिकं कृत्वा हर्षितो दशाननस्तत्रैवास्थात्। तत्र स्थितेन रावणेन दुर्लङ्घ्यनगरे इन्द्रदिग्पालं नलकूबरं ग्रहीतुं कुम्भकर्णः प्रेषितः। कुम्भकर्णोऽपि रावणाज्ञया सैन्यपरिवृतस्तत्र ययौ। नलकूबरोऽपि दुर्लङ्घ्यनगरे आशालीविद्यया वह्निमयं वप्रं व्यधात् योजनशतप्रमाणम्। तन्मध्ये स्थितः कुम्भकर्णेन सह युद्धं करोति। कुम्भकर्णस्तं नगरं ग्रहीतुं न शक्नोति। ततः कुम्भकर्णस्तं नगरं परिवेष्ट्य स्थितो जम्बूद्वीपं समुद्र इव। ततः कुम्भकर्णनरैर्गत्वा दशास्याय विज्ञप्तम्। देव! दुर्लङ्घ्यनगरं कुम्भकर्णादिभिर्ग्रहीतुं न शक्यते। ततो रावणस्तत्रागात्। दृष्टं नगरम् नामतो दुर्लङ्घ्यम् परिणामतश्च दुर्लङ्घ्यम्। सबान्धवो रावणश्चिन्तयति। किं करिष्यते? नगरं कथं ग्रहीष्यते? इति चिन्ताप्रपन्नोऽत्र भाग्यं प्रधानम्। यतः—

नैवाकृतिः फलति नैव कुलं न शीलं, विद्यापि नैव न च यत्न कृताऽपि सेवा।
भाग्यानि पूर्वतपसा किल संचितानि, काले फलन्ति पुरुषस्य यथैव वृक्षाः॥१॥

अघटितघटितानि घटयति सुघटितघटितानि जर्जरीकुरुते।
विधिरेव तानि जनयति यानि पुमान्नैव चिन्तयति ॥२॥

रावणे चिन्तामग्ने सति नलकूबरपत्न्या दूतिका प्रेषिता। तया दूतिकयाऽऽगत्यैवमुक्तम्। हे नाथ ! रम्भा नाम्नी नलकूबरपत्नी त्वां रिरंसते, त्वामेव स्मरति, त्वद्गुणैर्हृतमना वर्ततेऽतस्त्वमंगीकुरु। तयाऽङ्गीकृतया तवाशालीवप्रः समेष्यति। इदं नगरं तव दास्यति, तव सुदर्शनं चक्रं दास्यति। साऽपि तव दासी भविष्यत्यतस्त्वमङ्गीकुरु। तया वशवर्तिन्या राज्यं तवाऽयत्तं भविष्यति। तस्मिन्समये रावणेन विभीषणमुखं विलोकितम्। तदा दासीं प्रति विभीषणेनोक्तम्। एवं यत्त्वया प्रोक्तम् तत्सर्वं रावणः करिष्यति, त्वं व्रज, तव स्वामिन्यग्रे कथय। सा गता। ततो रावणो विभीषणं बभाषे। रे बान्धव ! त्वया कुलविरुद्धं किं प्रतिपन्नम्। अस्मत्कुले केनाप्येवं न कृतम्, त्वया किं प्रतिपन्नम्। अहो त्वया विरुद्धमङ्गीकृतम्। कुले कलंको वचसा कृतस्त्वया। ततो विभीषणो बभाषे हे बान्धव ! हे राजेन्द्र ! त्वं मां प्रसीद। वाङ्मात्रेण कलंको न भवति। अतस्त्वमेतस्या विद्यां लात्वा ततो वचोयुक्त्या परित्यजेर्येन केनोपायेन बुधः स्वार्थं साधयेत् ॥१॥

अपमानं पुरस्कृत्य मानं कृत्वा च पृष्ठतः। स्वार्थमालम्बयेत्प्राज्ञः स्वार्थभ्रंशो हि मूर्खता ॥१॥

इति विचार्य रावणस्तूष्णीको बभूव। तावत्तत्रागता रम्भा तत्परिरम्भलम्पटा रावणेन भाषिता, एवंविधा दृष्टा च। यतः–

तन्वीश्यामा शिखरदशना पक्वबिम्बाधरोष्ठी, मध्ये क्षामा चकितहरणी प्रेक्षणा निम्ननाभिः।
श्रोणिभारादलसगमना स्तोकनम्रा स्तनाभ्याम्, या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥१॥

दशास्येनासन उपवेशिता। प्रार्थितश्च। भो सुन्दरि! आशालीविद्यां मह्यं देहि। तत्क्षणादेव तयाऽऽशालीविद्या दत्ता। सिद्धविद्यो रावणो दुर्लङ्घ्यनगरे गतस्तन्नगरं वेष्टितम्। आशालीविद्याऽपहृता। ततो नलकूबरः संग्रामाय निर्गतः। संग्रामो लग्नः। नलकूबरक्षिप्तानि शस्त्राणि व्यन्तराधिष्ठितानि रावणसैन्ये न प्रभवन्ति। ततो विभीषण उत्तस्थौ। तयोः संग्रामोऽभूत्। नलकूबरसैन्यं भग्नम्। ततो विभीषणेन नलकूबरोऽग्राहि चर्मभस्त्रेव दन्तिना। तत्र सुदर्शनं चक्रं रावणेन प्राप्तम्। यतः—

देवासुरैरप्यजय्यं शक्रसम्बन्धि दुर्धरम्। चक्रं सुदर्शनं नाम तत्र प्राप च रावणः ॥१॥

ततो विभीषणो नलकूबरं रावणं प्रत्यानिनाय रावणेन मानितः पूजितः प्रेमदृष्ट्या विलोकितः। सोऽपि प्रीतो रावणपादे निपतितः। तुष्टेन रावणेन तन्नगरं दुर्लङ्घ्यपुरं दत्तम्। तत्र राज्ये स्थापितः। रम्भोवाच। हे रावण! त्वं मामङ्गीकुरु। त्वं मम प्राणनाथोऽस्यहं तव प्राणप्रियाऽस्मि। रावण उवाच। भद्रे! आत्मभर्तारं भजस्व। त्वं कासवध्वजस्य राज्ञः पुत्री। सुन्दर्युदरसंभवा। त्वमुभयोर्विशुद्धं कुलं मा कलङ्कय। अन्यच्च—

विद्यादानाद् गुरुस्थाने मम त्वमसि सम्प्रति। स्वसृमातृपदे पश्याम्यन्यामपि परस्त्रियम् ॥१॥

इत्युक्त्वा नलकूबरभूपतेरर्पयामासादूषितामखण्डितशीलां पितुर्गृहात्समागतामिव रावणः। कुम्भकर्णं विभीषणं च प्रत्युवाच। अहो! स्त्रीचरित्रम्। यतः—

नाग्निस्तृप्यति काष्ठेन नापगाभिर्महोदधिः। नान्तकः सर्वभूतेन न पुम्भिर्वामलोचनाः ॥१॥

अहो! स्त्रीचित्तं चपलम्। नायिकाकटाक्षविक्षेपवत्, विद्युल्लताविलासवत्, सन्ध्यारुणवत्, वातान्दोलिततूलवत्, पवनप्रे-

ह्रोलितध्वजाग्रवत्, सज्जनकोपवत्, दुर्जनमैत्रीवत्, वेश्यास्नेहवत्, गिरिनदीवेगवत्, गजकर्णवत्, शरत्कालमेघवत्, इन्द्रचापवत्
कान्दिशिकनयनमेषोन्मेषवत्, हरिद्राशगवत्, इन्द्रजालवत्, वायुवेगवत्, मर्कटचेष्टितवत्, प्राणिजीवितवत्, कुशाग्रजलबिन्दुवत्,
एवंविधं स्त्रीचित्तं चञ्चलम्। षट्पदः—

स्त्रीचरित्रलखि एक प्रियसुषोली छंडुं दिनदोराथी डरी। रत्तिविसहरगलीफंडुं घरी मुसाथी डरी।
यनह केसरी युचकारी धरणी थकी ढली पडी। चढी परवत अणीआली नई सायर दुत्तरी तरी।
सुफई जली वुडुवी मरी। भणई चंग गुणवंत स्त्रीय विसासममको करी ॥१॥

शास्त्रं सुनिश्चितधिया परिचिन्तनीयमाराधितोऽपि नृपतिः परिशङ्कनीयः।
अंकः स्थिताऽपि युवतिः परिरक्षणीया शास्त्रे नृपे च युवतौ च कुतः स्थिरत्वम् ॥२॥

रावणेनोक्तम् भो बान्धव! कुम्भकर्ण! विभीषण! स्त्रीचरित्रं विलोकितम्? नलकूबरपत्न्या रम्भानाम्न्या किं कृतम्? धिक्
स्त्रीचरित्रम्। ततो रावण इन्द्रं प्रति चलितो नलकूबरोऽप्यनुचलितः। रावणमायान्तं श्रुत्वा भीतः सहस्रारः पुत्रमिन्द्रः स्नेहपूर्वमभा-
षत। हे पुत्र! त्वयैकेनाऽपि पुत्रेण मम कुलमुद्योतितम्। अन्यवंशोन्नतिं हृत्वा स्ववंशोन्नतिः कृता। अतः सर्वेभ्यो विद्याधरनरेन्द्रे- ॥२१॥
भ्योऽहमोजस्वीत्यहंकारं मा कृथाः। यथा—

उत्थितोऽस्त्यधुना वीरः सर्ववीरत्वतस्करः। प्रतापेन सहस्रांशुः सहस्रांशुनियन्त्रकः ॥१॥
हेलोत्पाटितकैलासो मरुत्तमखभञ्जनः। जम्बूद्वीपेशयक्षेन्द्रेणाप्यक्षोभितमानसः ॥२॥

उपार्हन्निजदोर्वीणागीततोषितचेतसः। धरणेन्द्रादमोघाख्यशक्तिः शक्तित्रयोर्जितः॥३॥

भ्रातृभ्यां स्वानुरूपाभ्यां स्वभुजाभ्यामिवोत्कटः। रावणो नाम लङ्केशो सुत्केशकुलभास्करः॥४॥ कुलकम्॥

येन यमो हेलया जितो वैश्रवणश्च सेवकोऽकारि, वालिसोदरः सुग्रीवः पत्तिश्चक्रे येन दुर्लंघ्यप्राकारं भित्वा दुर्लंघ्यपुरमेत्य तनातुजं नलकूबर बद्धा जगृहे। हे पुत्र! अतस्त्वं तं रावणं प्रणिपातसुधावृष्टया शमय, पुनः रूपवतीं सुतामस्मै प्रयच्छ, एवं रावणेन सह संधानं विधेहि। इति सहस्रारपितृवच श्रुत्वेन्द्र उवाच हे तात! अस्मै वध्याय स्वकन्या कथं दीयते। एभिः सह किं सन्धानम्, कोऽयम्, अनेन किं भवति, किं करिष्यति, एभिः सहावयोः किमाधुनिकं वैरमस्ति? सर्वदैव सर्वे राक्षसा अस्माकं शत्रवोऽतः स्नेहतः कातरो मा भूः, धैर्यमाश्रय, स्वसूनोः पराक्रमं किं न वेत्सि। तयोरेवं वदतो रथनूपुर नाम नगरं रावणश्चमूभिर्वेष्टयामास दुर्धरो दशकन्धरः। रावणेन राज्यनीतिं स्मरता पूर्वं दूतः प्रेषितः। तेन दूतेन गत्वेन्द्रराजस्याग्रे विज्ञप्तम्। हे इन्द्रराजेन्द्र! ये केचन राजानो वर्तन्ते तैः सर्वैरुपायनानि दत्त्वा दशकन्धरः पूजितस्त्वमपि स्वां पुत्रीं रूपवतीं दत्त्वा पादौ प्रणम्य स्वं राज्यं पालय, दशकन्धरं पूजय। अन्यथा शक्तिं दर्शय। भक्तिं शक्तिं वा विना जीवितं नास्ति। तत इन्द्रो जगाद तव स्वामी वराकैर्नृपैः पूजितस्तदयं मत्तोऽपि मदोन्मत्तः पूजां वाञ्छति। दूतो रावणं प्रत्यागत्य विज्ञपयतीन्द्रेण तवाज्ञा न मन्यते। तच्छ्रुत्वा कोपारुणो रावणो रणकर्मणि डुढौके। इन्द्रोऽपि सकलसैन्यपरिवृतो रावणं डुढौके। सामन्ताः सह सामन्तैः, सैनिकाः सह सैनिकैः सेनान्याः सह सेनान्यैस्तद्वयोर्युयुधिरे। तयोरन्योऽन्यं शस्त्रवर्षिणोः संवर्तपुष्करावर्तकमेघयोरिवाभवत्संग्रामः। रावणश्चिन्तयति–वराकैः सैनिकैः मशकैरिव किं हतैः? भुवनालङ्कारं करिपुङ्गवमारुह्य युद्धाय सज्जो बभूव। इन्द्रोप्यैरावणारूढः सम्मुखः समुपस्थितः।

द्वावप्युभौ महाप्राणौ दन्तैर्दन्तान्प्रजह्रतुः । उत्थापयन्तौ स्फुलिंगानरण्युन्मथनादिव ॥१॥
मिथो घातैर्विषाणेभ्यो सौवर्णवलयावलिः । पपातोर्व्यां विरहिणीबाहुभ्य इव तत्क्षणम् ॥२॥
क्षणाच्छल्यैः क्षणाद्बाणैः क्षणादपि च मुद्गरैः । गजाविव द्वितीयौ तौ रावणेन्द्रौ प्रजह्रतुः ॥३॥
छलज्ञो रावणः स्वेभादुत्पत्यैरावणं ययौ । हत्वा च तन्महामात्रं बबन्धेन्द्रं करीन्द्रवत् ॥४॥

ततो रावणसैन्ये जयजयारावो जातः । इन्द्रसैन्ये पराजयो जातः । धृत इन्द्रे तत्सैन्यं भग्नम् । रावण इन्द्रं धृत्वा कारायामक्षिपत् । काष्ठपञ्जरे शुकवत् क्षिप्त्वा सदिक्पालमिन्द्रं ररक्ष । इन्द्रजनकः सहस्रारो रावणं नमस्कृत्य रचिताञ्जलिर्बभाषे । हे रावणराजेन्द्र ! अहं त्वा भिक्षां ययाचे, त्वं मा पुत्रभिक्षां देहि । रावण उवाच यदीदृशं कर्म कुर्यात् सलोकपालस्तदा मुञ्चामि नान्यथा । किं करोति श्रूयताम्, लङ्कां नगरीं समार्जन्या समार्जयति, समार्ज्य गन्धाम्बुभिः प्रत्यहं परिपिञ्चति, मालाकार इव पुष्पोत्करं वितनोति, ततश्चेलोत्क्षेपं धूपोद्ग्राहं करोति, जिनचैत्येषु पुष्पाणि ग्रथित्वा ग्रथित्वा समानयत्यनान्यपि मम कार्याणि सर्वाणि करोति तदैनमिन्द्रं मुञ्चामि नान्यथा ।

एवं करिष्यतीत्युक्ते सहस्रारेण रावणः । मुमोच शक्रं कारायाः सत्कृत्य निजबन्धुवत् ॥१॥
रथनूपुरमेत्येन्द्रस्तस्थावुद्विग्न उच्चकैः । तेजस्विनां हि निस्तेजो मृत्युतोऽप्यतिदुःसहः ॥२॥
निर्वाणसंगमो नाम ज्ञानी तत्राऽन्यदा मुनिः । समवासरदिन्द्रोऽपि तं वन्दितुमुपाययौ ॥३॥
ज्ञानिनाऽपि मुनिना धर्मदेशना चक्रे । यथा—

भोगे रोगभयं सुखेक्षयभयं वित्तेऽग्निभूभृद्भयम्, दासे स्वामिभयं जये रिपुभयं वंशे कुयोषिद्भयम्।
स्नेहे वैरभयं नयेऽनयभयं काये कृतान्ताद्भयं, सर्वं नामभयं भवेत् पुनरिदं वैराग्यमेवाभयम् ॥१॥
अर्थः पादरजःसमो गिरिनदीवेगोपमं यौवनं, मानुष्यं जलबिन्दुलोलचपलं फेनोपमं जीवितम्।
धर्मं यो न करोति निश्चलमतिः स्वर्गार्गलोद्घाटनम्, पश्चात्तापहतो जरापरिणतः शोकाग्निना दह्यते ॥२॥
धर्मो जगतः सारः सर्वसुखानां प्रधानहेतुत्वात्। तस्योत्पत्तिर्मनुजाः सारं तेनैव मानुष्यम् ॥३॥

भो भव्या एवंविधं मानुष्यं लब्ध्वा प्रमादो न विधेयो धर्मे यत्नः कार्यः। एवंविधां धर्मदेशनां श्रुत्वेन्द्रराजोऽब्रवीत्—हे भगवन्! केन कर्मणा मया रावणात् तिरस्कारपदं प्राप्तमित्यनुग्रहं विधाय त्वं ब्रूहि। ततो निर्वाणसंगमो नाम्ना ज्ञानी मुनिरब्रवीत्। यतः—इन्द्रराजेन्द्र! पारिञ्जयपुरे नगरे ज्वलनसिंहो नाम राजा। वेगवती नाम्नी राज्ञी। तयोरहल्या नाम्ना पुत्री। तस्याः कृते राज्ञा स्वयंवरः कारितः। अस्मिन्स्वयंवरेऽनेके राजानो मिलितास्तत्र चन्द्रावतीश आनन्दमाली राजाऽऽगतः। तेनानन्दमालिना सह सूर्यावर्तपुरीशोऽपि तडित्केशनामा समागतः। शुभदिने स्वयंवरमहोत्सवो जातस्तस्मिन्स्वयंवरेऽहल्याकन्यकयाऽऽनन्दमाली वव्रे। आनन्दमालिनं वृतं ज्ञात्वा तडित्केश आनन्दमालिनीर्ष्यालुर्जातः। ततः प्रभृत्यपि द्वेषं वहति परं किञ्चित्कर्तुं नो शक्नोति। तया सह भोगाननुभवन् सुखं वर्षाण्यत्यवाहयत्। एकस्मिन् दिने स्त्रियः किञ्चित्स्वरूपं दृष्ट्वा मनसि चिन्तयति। यतः—

अन्तर्विषमया ह्येता बहिरेव मनोहराः। गुञ्जाफलसमाकारा योषितः केन निर्मिताः ॥१॥

इति निर्वेदादानन्दमाली व्रतमग्रहीत्। तीव्रं तपस्तप्यमान आनन्दमाली महर्षिभिः सह विहारं चक्रे। विहरन्नेकदाऽऽनन्दमाली

रथावर्तं पर्वतं जगाम। तत्र तडित्केशेन पूर्वमत्सरिणा दृष्टस्ताडितश्च यष्टिमुष्ट्यादिभिः। परमानन्दमाली ध्यानान्न चलितः। तस्मिन्समये आनन्दमालिभ्राता कल्याणगणधरोनाम महामुनिस्तेन दृष्टम्, एष तडित्केशो दुष्टात्मा साधोरुपसर्गं करोति, तत एनं तडित्केशं निवारयामीत्युक्त्वा तेजोलेश्यां मोक्तुं प्रारेभे। तस्मिन्नवसरे तडित्केशपत्न्या सत्यश्रिया भक्तिजल्पितैः पादपतितैः कल्याणगणधरः साधुः शमितः। तेन साधुना तेजोलेश्याऽपि संहृता। ततस्तडित्केशो मुनितिरस्कारजातपापात् भवं भ्रान्त्वा कतिचिद्भवान्ते शुभं कर्म विधाय सहस्रारसुत इन्द्रनामा विद्याधरो राजा जातः। पूर्वभवे यत्त्वया मुनितिरस्कारः कृतः तर्जितश्च तेन हेतुना त्वमस्मिन्भवे रावणेन तिरस्कृतस्तर्जितश्च। यतः—

वह मारण अब्भक्खाण दाणपरधण विलोवणाईणं। सव्वजहण्णोउदवो दसगुणिउ इक्कसी कयाणं ॥१॥
तिव्वयरेउ पहुसे सयगुणिउ सयसहस्स कोडिगुणो। कोडाकोडिगुणो वा हुज्ज विवागो बहुतरो वा ॥२॥

इति साधुवचनं श्रुत्वेन्द्रश्चिन्तयति—अथ किं रावणसेवां करोमि। यतः—

आरुह्य हस्तिनं शस्तं समर्थमथवा रथम्। तुरंगं वेगवन्तं वा खरे नारोहणं वरम् ॥१॥

एवं विमृश्य दत्तवीर्ये निजपुत्रे राज्यं दत्त्वा सहस्रपरिवारपरिवृतो सहस्रारपित्रा सहित इन्द्रो निर्वाणसंगममुनिपादान्ते प्रवव्राज, अत्युग्रं तपस्तेपे।

यत्पूर्वार्जितकर्मशैलकुलिशं यत्कामदावानल, ज्वालाजालजलं यदुग्रकरणग्रामाहिमन्त्राक्षरम्।
यत्प्रत्यूहतमःसमूहदिवसो यल्लब्धिलक्ष्मीलता, मूलं तद्द्विविधं यथाविधितपः कुर्वीत वीतस्पृहः ॥१॥

एवंविधं तपस्तप्त्वा केवलज्ञानं प्राप्य सहस्रारमुनिसहित इन्द्रः शिवं ययौ।

॥ इति इन्द्रविद्याधरकथा ॥

एकस्मिन्दिने रावणः स्वर्णतुंगं शैलं ययौ। तत्र देवान्वन्दित्वाऽनन्तवीर्यं नाम महामुनिं तत्क्षणोत्पन्नकेवलिनं वन्दित्वा यथास्थाननिषण्णो रावणः। सुधासारणीं धर्मदेशनां शुश्राव। यतः—

त्रिसंध्यं देवार्चां विरचय चयं प्रापय यशः,
श्रियः पात्रे वापं जनय नयमार्गं नय मनः।
स्मरक्रोधाद्यारीन् दलय कलय प्राणिषु दयां,
जिनोक्तं सिद्धान्तं शृणु वृणु जवान्मुक्तिकमलाम् ॥१॥

देशनान्ते रावणेन पृष्टं स्वामिन्! कुतो मे मरणं भविष्यति। अनन्तवीर्यकेवलिनोक्तम्-पारदारिकदोषेण तव मृत्युर्वासुदेवाद्भविष्यति। अतस्त्वं परस्त्रीसंगं मा कार्षीः। यतः—

तिर्यञ्चो मानवा देवाः, केचित्कान्तानुचिन्तनम्। मरणेऽपि न मुञ्चन्ति, सद्योगं योगिनो यथा ॥१॥
सन्तापफलयुक्तस्य, नृणां प्रेमवतामपि। बद्धमूलस्य मूलं हि, महद्वैरतरोः स्त्रियः ॥२॥
धर्मं शीलं कुलाचारान्, शौर्यं स्नेहं च मानवः। तावदेव ह्यपेक्षेत, यावन्न स्त्रीवशो भवेत् ॥३॥
श्लथा सद्भावना धर्मात्, स्त्रीविलासशिलीमुखात्। मुनिरुद्राहतो ध्वस्तो निपतन् शीलकुंजरात् ॥४॥

अकीर्तिकारणं योषिद्, योषिद्वैरस्य कारणम्। संसारकारणं योषिद्, योषितं वर्जयेत्ततः ॥५॥

भो रावण! ईदृशं परस्त्रीसंगं वर्जय। मुनिना बहूक्तेनापि परस्त्रीनियमो न कृतः। किन्तु परस्त्रीमनिच्छन्तीं नेच्छामि, यदि वाञ्छति भोक्तुं तदा भोक्ष्ये नान्यथेति नियममग्रहीत्। पुनरनन्तवीर्यकेवलिनोक्तम् "भो महाभाग! त्वं सर्वथा परस्त्रीनियमं कुरु"। रावणेनोक्तम् भो स्वामिन्नेतत् प्रत्याख्यानं कर्तुं नो शक्यते। अतोऽप्रसन्नामनिच्छन्तीं नेच्छामीति नियमः कृतः। परं कथं करोति प्रत्याख्यानम्। "अवश्यं भावि भावानाम्"। अनन्तवीर्यकेवलिनं नत्वा पुष्पकविमानरूढो लंकां नगरीमाजगाम्।

इति श्रीमत्तपागच्छे भट्टारकश्रीहीरविजयसूरिराज्ये आचार्यश्रीविजयसेनसूरियौवराज्ये पण्डितदेवविजयगणिविरचिते श्रीरामचरित्रे गद्यबन्धे रावणदिग्विजयवर्णनो नाम द्वितीयः सर्गः॥

## तृतीयः सर्गः।

इतश्च वैताढ्यगिरावादित्यपुरे नगरे प्रह्लादो नाम राजा। केतुमती नाम्ना पट्टराज्ञी। तयोः पुत्रः पवनंजयनामा। कथंभूतः। पीनोन्नतस्कंधः, सत्यसंधः, कमलवदनः, उज्ज्वलरदनः, सुरभिनिःश्वासो, लक्ष्मीनिवासः, सरलनासावंशः, पृथ्वीपीठावतंसः, प्रलंबकर्णः, सुवर्णवर्णो विशालनेत्रः सर्वकलाशालिकरोऽष्टमीचन्द्रमभालस्थलोऽनाकलितबलः, कज्जलश्यामलकेशपाशः, सर्वजनपूरिताशः, सच्चैकतानवृत्तिरुभयपक्षनिर्मलप्रवृत्तिस्त्रिशक्तिसमन्वितश्चतुर्विद्यालङ्कृतो जितपञ्चेन्द्रियविक्रमः षण्मुखपराक्रमः सप्तराजाङ्गविराजितो-

ऽष्टविधमदविवर्जितो नवनिधानाकरभण्डारो दशदिग्विख्यातसार एकादशरुद्रकलाधारो द्वादशसूर्यसमतेजास्त्रयोदशयक्षकृतसान्निध्य-श्चतुर्दशविद्यालब्धमध्यः पञ्चदशतिथिदत्तदानः षोडशकलासम्पूर्णचन्द्रसमानः सप्तदशभेदजिनपूजकोऽष्टादशदेशविख्यातकीर्तिक एकोनविंशतिपत्तनाधीशो विंशतिविंशोपकधर्मधुराधीशो रूपेण निर्जितमार एवंविधः पवनञ्जयकुमारोऽस्ति जयी पवनवद्गगनगामी च। इतश्चात्रैव भरते दन्तिपर्वते महेन्द्रपुरे माहेन्द्रोनाम राजाऽभवत्। तस्य माहेन्द्रराजस्य हृदयसुन्दरी नाम्नी पट्टराज्ञी। तयोः पुत्र्यञ्जनासुन्दरी। कीदृशी?–

बाहुद्वन्द्वमृणालमास्यकमलं लावण्यलीलाजलं, नारीणां कुचचक्रवाकयुगलं धम्मिल्लसेवालकाः।
श्रोणितीररसालनेत्रलहरीकन्दर्पदावानलैर्दग्धानामिवगाहनाय विधिना चैतत्सरो निर्मितम् ॥१॥

एवंविधां शतपुत्रोपरिजातां मातापित्रोरत्यन्तवल्लभां तां पुत्रीमुद्यौवनां दृष्ट्वा जनकश्चिन्तयति। पुत्री कस्य देया। यतः— नीतिशास्त्रेऽप्युक्तम्—

वरं वरयते कन्या माता वित्तं पिता श्रुतम्। बान्धवाः स्वजनमिच्छन्ति मिष्टान्नमपरे जनाः ॥१॥
मूर्खनिर्धनदूरस्थशूरमोक्षाभिलाषिणाम्। त्रिगुणाधिकवर्षाणां तस्मै देया न कन्यका ॥२॥
अत्यद्भुतधनाढ्यस्य अतिशीतस्य रोषिणः। सरोगयङ्गविकल्यस्य तस्मै देया न कन्यका ॥३॥
बधिरक्लीबमूकानां खञ्जान्धजडचेतसाम्। सहसाघातकर्तॄणां तस्मै देया न कन्यका ॥४॥
कुलजातिविहीनानां पितृमातृवियोगिनाम्। गेहिनीपुत्रयुक्तानां तस्मै देया न कन्यका ॥५॥

कुशीलचौर्ययुक्तानां द्यूतमद्यपलाशिनाम्। विदेशिकस्वगोत्रिणां तस्मै देया न कन्यका ॥६॥
सदैवोत्पन्नभक्षिणामालस्यवशवर्तिनाम्। वहुवैरापवादानां तस्मै देया न कन्यका ॥७॥
दूरस्थानामविद्यानां मोक्षमार्गानुकारिणाम्। शूराणां निर्धनानाञ्च न देया कन्यका वुधैः ॥८॥

ततो महेन्द्रराड्यौवनां निजपुत्रीं विलोक्य मन्त्री सुबुद्धिमुखं विलोकयति। भो मन्त्रिन् अञ्जनासुन्दरी कस्य दीयते ? मन्त्रिणोक्तम् राजन्! विद्याधरकुमाराणां रूपाणि पट्ट आलिख्य दर्श्यते यस्य रूपमस्या रोचते तस्यैव दीयते। ततो मन्त्रिणा विद्याधरकुमाराणां रूपाणि पट्ट आलिख्य दर्शितानि। परं कुमार्या नैकोऽपि वरो रोचते। ततः पुनर्मन्त्रिणोक्तं राजन् ? द्वौ वरौ स्तो यथा हिरण्यनामराजस्य पुत्रः सुमनाराज्ञीकुक्ष्युद्भवः विद्युत्प्रभो नाम कुमारोऽस्ति। द्वितीय आदित्यपुराधीशप्रह्लादराजस्य केतुमतीराज्ञीपुत्रः पवनंजयनामा कुमारोऽस्ति। एतौ द्वावपि रूपवन्तौ कुलीनावुद्यौवनौ स्तः। अनयोर्मध्ये यो वरो योग्यो भवति तस्य दीयताम्। पुनर्मन्त्र्यूचे राजन्! अनयोर्मध्ये यो विद्युत्प्रभो नाम कुमारो मारसन्निभः परं सोऽष्टादशवर्षायुः ज्ञानिना कथितः परं केवलज्ञानं लब्ध्वा मोक्षं यास्यति। द्वितीयः प्रह्लादतनयः पवनंजयः कुमारः स योग्यो वरोऽस्ति चिरायुः शूरो वीरः साहसिकश्च। अतः पवनञ्जयस्य दीयतामञ्जनासुन्दरी। अनयोर्योगः प्रशस्यः यथा कामरत्योरीश्वरपार्वत्योः। अत्रान्तरे सर्वे विद्याधराः स्वस्वऋध्या संयुक्ताः स्वे स्वे विमाने स्थित्वा नन्दीश्वरद्वीपं यात्रायै ययुः। तत्र सर्वे मिलिता विद्याधराः। सर्वैर्विद्याधरैर्द्विपञ्चाशत्प्रासादेषु पूजा कृता। ततोऽनन्तरं चैत्यालयबहिःस्थितानां यथास्थानमासीनानां विद्याधराणां मध्ये वार्ता चलिता, तस्यां वार्तायां राज्ञा प्रह्लादेनोक्तं माहेन्द्रं प्रति। हे माहेन्द्र! मम सुताय पवनंजयकुमाराय तव सुता अञ्जनासुन्दरी दीयताम्। तद्वचो माहेन्द्रः प्रतिपेदे प्रह्लादप्रार्थनानिमित्तमात्रमेवा-

सीत्। यतः-पूर्वं दातुकामोऽस्ति ततस्तयोर्द्वयोः पितृभ्यां विचार्य लग्नं प्रतिष्ठितम्। इतस्तृतीये दिनेऽनयोः पवनञ्जयाऽञ्जनासुन्दर्यो विवाहं करिष्यते। मानसाख्यसरोवरे विवाहः कार्यः। इत्युक्त्वा तौ यथास्थानं गतौ। पुनः प्रहर्षितमानसौ माहेन्द्रप्रह्लादौ स्वजनैः सम मानसरोवर आवासं चक्रतुः। पवनञ्जयः प्रहसितं मित्रमुवाच। हे मित्र! प्रहसित! त्वया सा दृष्टाऽस्ति यदि दृष्टाऽस्ति तर्हि ब्रूहि। साऽञ्जनासुंदरी कीदृशी वर्तते। हसित्वा प्रहसितोऽप्योचत्। सा हि रम्भाधिका वर्तते। यतः—

वक्षोजौ कठिनौ न वाग्यरचना मन्दा गतिर्नो मतिः, वक्रं भ्रूयुगलं मनो न जठरं क्षामं नितम्बो न च।
युग्मलोचनचञ्चलं न तु वयः कृष्णा कचा नो गुणाः, निम्नं नाभिसरोवरं न जघनं सा स्त्री कथं प्राप्यते॥१॥

एवंविधां तां रम्भाधिकरूपां श्रुत्वा मनसि हर्षितः पवनञ्जयो मित्रं प्रहसितं प्रत्यूचे। भो मित्र! प्रहसित! उद्वाहवासरो दूरेऽस्ति तद्यावां तत्र गत्वा विलोकयते। यतः—

वल्लभोत्कण्ठितानां हि घटिकाऽपि दिनायते। मासायते दिनमपि किम्पुनस्तद्दिनत्रयम्॥१॥

ततः प्रहसितोऽप्येवं व्याजहार भो मित्र! त्वं स्थिरीभव। आवां निशीथसमये यास्याव एवं स्वस्थीकृतः कुमारो निशायां तावुभावपि तत्र कन्यावलोकनाय गतौ। गगनगामिन्या विद्ययोत्पत्य सप्तमभूमिकावासोपरि मच्छन्नीभूय स्थितौ प्रहसितपवनञ्जयौ। निशायां तयोर्वसन्ततिलकामिश्रकेश्योः कन्यासख्योर्वचनं शुश्रुवतुः। यथा—

धन्याऽसि या हि प्राप त्वं तं पतिं पवनञ्जयम्। सखि वसन्ततिलकेत्युवाचाञ्जनसुंदरीम्॥१॥
हले! मुक्त्वा वरं विद्युत्प्रभं वरमविग्रहम्। को वरः श्लाघ्यत इति मिश्रकेश्यवदत्सखी॥२॥

प्रथमा प्रत्युवाचैवं मुग्धे वेत्सि न किञ्चन। विद्युत्प्रभो हि स्वल्पायुः स्वामिन्या युज्यते कथम् ॥३॥
द्वितीयाऽपीत्यभाषिष्ट वयस्ये मन्दधीरसि। स्तोकमप्यमृतं श्रेयो भारोऽपि न विषस्य तु ॥४॥

इति तयोरालापं श्रुत्वा क्रुद्धः पवनञ्जयोऽचिन्तयत्। अस्या इदं प्रियं तेनैषा न निषेधति। ततः पवनञ्जयोऽसिमाकृष्यान्धकाराद्धावितः कोपारुणलोचनः ययोर्द्वयोरपि हृदि विद्युत्प्रभो वर्तते तयोश्छिरश्छिनद्मीति वदन् रोषाच्चचाल पवनंजयः। ततः प्रहसितेन पवनञ्जयं बाहुदण्डे धृत्वेत्याभाषि। भो मित्र! सापराधाऽपि स्त्री न हन्यते। ततो निरपराधाऽव्यूढा कथं हन्यते। यदि तुभ्यं न रोचते तदोद्वाहैनां त्यजेरिति बोधितः पवनञ्जयः प्रहसितेन समं स्वस्थानं गतः। ततो निर्णीते दिने पवनाञ्जनसुन्दर्योः पाणिग्रहमहोत्सवोऽभवत्। तद्वधूवरमादाय प्रमोदभाक् प्रह्लादमाहेन्द्रेणार्चितः स्वपुरीं ययौ प्रह्लादो राडञ्जनसुन्दर्याः सप्तभूमिकं प्रासादमर्पयामास भूस्थितविमानमिव। तस्मिन्प्रासादे स्थिताञ्जना शुशुभे वसन्ततिलकायुता। पाणिग्रहणकृत्यानन्तरं पवनञ्जयस्तामञ्जनां न सम्भानयामास, मनसा, वचसा किम्पुनः कायेन। यतो मानेनापमानं न विस्मरन्ति पर मान एते दोषाः। यतः—

शमालानं भञ्जन् विमलमतीनाडीं विघटयन्, किरन्दुर्वाक्पांशून्-करमगणयन् नागमसृणिम्।
भ्रमन्नुर्व्यां स्वैरं विनयनयवीथिं विदलयन्, जनः कं नानर्थं जनयति मदान्धो द्विप इव ॥१॥
क्रोधावेशे नदीपूरे प्रवेशे पापकर्मणि। संभुक्तौ सर्वभीस्थाने कालक्षेपः प्रशस्यते ॥२॥
पढमं वा रोसभरे जा बुद्धि होई सा न कायव्वा। जा किज्जइ ता नूणं न सुंदरो होई परिणामो ॥३॥

इमां नीतिं विस्मरता कुमारेण पवनञ्जयेनाञ्जनासुंदरी परिहृता। ततोऽञ्जना चिन्तयति। अहो मम को दोषः, केन हेतुना

परित्यक्ता, किं कस्यापि दृष्टिलेशा, किं पूर्वार्जितं कर्म मे समुपस्थितम्, अहो महदाश्चर्यं निष्कारणमपगुणिताऽहं प्राणप्रियेणेति तस्याः संवत्सरवद्द्राघीयसी निशाऽभवत्।

एवं च काले व्रजति प्रह्लादनृपमन्यदा। दूतो राक्षसराजस्य समुपेत्यैवमब्रवीत्॥१॥

प्रह्लादराजेनोक्तं भो दूत! त्वं किमर्थमागतोऽसि, किम्प्रयोजनं किमागमनकारणम्। दूतेनोक्तं श्रूयताम्। रावणेन राज्ञा प्रेपितोऽस्मि त्वामाह्वातुम्। यतोऽन्यदा रावणेन राज्ञा वरुणं प्रति दूतः प्रेपितः स च दूतस्तत्र गत्वा प्रत्यागतो रावणं प्रति वदति स्म भो स्वामिन्! भवताऽद्य वैरायते वरुणः। तव प्रणामं न करोति। यतोऽहंकारपर्वतः कोपवान् वरुण एवं वदति। अरे! क्व रावणस्तेन किं सिध्यति। अरे नाहमिन्द्रो, नाहं कुबेरो, नाहं नलकूवरो, नाहं मरुत्तराट्, नाहं कैलासशैलोऽस्मि। अहं वरुणोऽस्मि। अस्य दुर्मते रावणस्य देवताधिष्ठितस्य प्रहरणस्य दर्पोऽस्ति तमपि दर्पं स्फोटयिष्यामि चिरं संचितम्। इत्यादि दूतवचनमाकर्ण्य ततः कुपितेन रावणेन स्वसैन्यं प्रेषितं तेन सैन्येन वरुणनगरमरुध्यत तन्नगरान्निःसृत्य वरुणेन सपुत्रेणारुणलोचनेन रावणसैन्यं भग्नम्। वरुणपुत्रैः सैन्यारखरदूषणौ बद्धा स्वसैन्ये निन्याते। ततो जयजयारवपूरितदिगन्तः कृतार्थमानी वरुणो निजां नगरीमविशत्। अथ रावणोऽपि विद्याधरेन्द्रानाह्वातुं दूतान्स्थाने स्थाने प्रैषीत्। अहं त्वामाह्वातुं प्रेपितोऽस्मि ततः शीघ्रं पादावधार्यताम्। तच्छ्रुत्वा राजा प्रह्लादश्चलनोपक्रमं व्यधात्। पवनंजय उवाच।

इहैव तिष्ठ तात! त्वं दशग्रीवमनोरथम्। पूरयिष्याम्यहमपि तवाऽस्मि तनयो ननु॥१॥

इत्युदीर्य सनिर्बन्धं पितरं चानुमान्य सः। लोकं चाशेषमाभाष्य चचाल पवनञ्जयः॥२॥

ततोऽञ्जना पतिं यात्रोत्सुकं जनमुखाच्छ्रुत्वा प्रासादादवरुह्य तं पवनञ्जयमीक्षितुं स्तंभेऽवष्टभ्य पाञ्चालिकेव निर्निमेषेक्षणा तस्थौ । अस्वास्थ्यमथिताशयां द्वारस्तम्भनिषण्णांगां प्रतिपच्चन्द्रवत्कृशां लुलितालकामलकैः संछिन्नललाटाम् निर्विलेपनां नितम्बन्यस्तभुजलतां ताम्बुलरागरहिताधरां धूसराधरपल्लवां बाष्पाम्बुक्षालितमुखीं पुरतः स्थितामञ्जनां खञ्जनदृशीमेवंविधां निजवल्लभां पवनो व्रजन् ददर्श । दृष्ट्वा पवनञ्जयश्चिन्तयति । अहो निर्भीत्वमहो दुर्धीत्वमहोज्ञात्वमहो निर्लज्जत्वं यच्छ्वशुरयोर्लज्जां त्यक्त्वा पुरःस्थिता । ततः साऽञ्जना पत्युः पादयोः पतित्वा विज्ञापयति हे स्वामिन् ! त्वया सर्वोऽपि परिजनः परिभाषितोऽहं तु मनागपि न भाषिता ।

विज्ञप्यसे तथापि त्वं विस्मार्या नाहं त्वया । पुनरागमनेनाशु पन्थानः सन्तु ते शिवाः ॥१॥
इति ब्रुवाणां तां दीनामहीनचरितामपि । पवनञ्जयः ॥२॥ अवगणय्यैव जयाय पवनञ्जयः ॥२॥
अत्ययज्ञावियोगार्त्ता गत्वान्तर्वेश्मभूतले । वारिभिन्नतलासिन्धुतटीव निपपात सा ॥३॥

ततः पवनञ्जयोऽञ्जनासुंदरीमवगणय्य ससैन्य आकाश उत्पत्य मानससरोवरे गतः । तत्र प्रासादं सप्तभौमिकं विकृत्य तमध्यास्त । यतो विद्याधराणां विद्या सर्वसिद्धिषु कामदा भवति । तत्र सरःपरिसरावनौ पर्यङ्कमारूढः सन्ध्यासमये पवनञ्जयः प्रियवियोगार्तां दुःखाक्रान्तां चक्रवाकीं ददर्श । ज्योत्स्नयाऽपि दूयमानाम् क्रन्दन्तीं करुणस्वराम् प्रेक्ष्य पवनञ्जय एवं पर्यचिन्तयत् । किमेषा करुणस्वरं क्रन्दति मित्रं प्रहसितमपृच्छत् । हे मित्र ! एषा चक्रवाकी किं रोदिति । स्वामिन्नेषा चक्रवाकी सकलं दिनं पत्या स सरोवरादिषु रन्त्वा निशायां पत्युर्विरहं सोढुं नेष्टेऽतो रोदिति । यतो निशायां चक्र...

विरहो दुःसहो विशेषतः श्रावणमासे । यतः—

शिखिनि कूजति गर्जति तोयदे, स्फुटितजातिलताकुसुमाकरे ।
अहह पान्थ ! न जीवति ते प्रिया, नभसि मासि न यासि गृहं यदि ॥१॥

हे मित्र ! उद्वाहतोऽपि या त्यक्ता, भाषिता या न जातुचित् । आगच्छताऽप्यवज्ञाता, परनारीव या मया ॥२॥
आक्रान्ता दुःखभारेण, पर्वतेनेव मूलतः । अदृष्टमत्संगसुखा, सा कथं हा भविष्यति ॥३॥
धिग्धिङ्मामविवेकेन म्रियते सा तपस्विनी । तद्धत्यापातकेनाहं क गमिष्यामि दुर्मुखः ॥४॥
इति चिन्तितमात्मीयमाख्यत्प्रहसिताय सः । स्वदुःखाख्यानपात्रं हि नापरः सुहृदं विना ॥५॥

प्रहसितोऽप्येवमूचे । भो मित्र ! तया वराक्याऽञ्जनसुन्दर्या तव किं विनाशितम् । तत्सख्या तु स्वभावेनोक्तम् । त्वया तु तद्वचो गुंफितम् । यतः—

कुटिलगतिः कुटिलमतिः, कुटिलात्मा कुटिलशीलसंपन्नः । सर्वं पश्यति कुटिलं, कुटिलः कुटिलेन भावेन ॥१॥

साम्प्रतम्—

सरलगतिः सरलमतिः सरलात्मा सरलशीलसंपन्नः । सर्वं पश्यति सरलं सरलः सरलेन भावेन ॥२॥

साम्प्रतं सरलभावेन त्वं सर्वं सरलं पश्यसि । प्रहसितो मित्रं प्रोचे । हे मित्र ? त्वया साप्यवज्ञासीच्चिरादपि । यतः सा त्वद्वियोगतो नूनं विपद्यते सारसीव । यतः सा तवाऽऽश्वासयितुं युज्यते । प्रियोक्त्या तामनुज्ञाप्य पुनः स्वार्थाय समागच्छेः । एवं मित्रेण

प्रेरितः पवनञ्जयस्तत्क्षणादेव नभसा व्युत्पत्याञ्जनासुन्दर्या वेश्मनि निशायां मित्रेण सह समागात्। पवनञ्जयः किंचित्तिरोहितो द्वार्येव तस्थौ। ततः प्रहसितोऽग्रे भूत्वा तदौकसि प्राविशत्। प्रहसितेनाञ्जनां दृष्ट्वा चिन्तितम्। कथंभूताम्। अल्पजले शफरीमिवाधिपर्यङ्कं वेल्लन्तीं, चन्द्रज्योत्स्नया ज्वलन्तीमुन्मुक्तदीर्घनिःश्वासामन्तर्दाहेन प्रस्फुटद्धारमौक्तिकां, दुःखावेशवशात्पतितां, दोर्भग्नमणिकङ्कणां, वसन्ततिलकासख्या वारंवारमाश्वास्यमानां, शून्यचित्तां काष्ठघटितामिव प्रहसितो मित्रोऽञ्जनामीक्षांचक्रे। अञ्जनासुन्दर्याऽपि स दृष्टः। यथा—

अकस्माद्व्यन्तर इव को नामेह समाययौ। इति भीताऽपि सा धैर्यमवलम्ब्येदमब्रवीत् ॥१॥

अहो कस्त्वमिहायासीः परपुंसाऽथवा त्वया। अलं ज्ञातेन मेह स्थाः परनारीनिकेतने ॥२॥

वसन्ततिलके! दोष्णा विधृत्यैनं बहिः क्षिप। क्षपाकरविशुद्धाऽस्मि नैनं द्रष्टुमपि क्षमा ॥३॥

पवनञ्जयमुज्झित्वाऽमुष्मिन्मम निकेतने। न प्रवेशाधिकारोऽस्ति कस्यापि किमुदीक्ष्यसे ॥४॥

इति श्रुत्वा प्रहसितोऽवोचत्। हे स्वामिनि! अहं पवनञ्जयमित्रः प्रहसितोऽस्मि मन्मथस्येव माधवः। ततोऽञ्जना जगाद। भो प्रहसित! अयं नर्मणः क्षणो नास्ति। अथवा तव दोषो नाऽस्ति। किन्तु मम कर्मणां दोषोऽन्यथा कुलीनस्तादृशो भर्ता मां कथं त्यजेद्। यतः—

पाणिग्रहात्प्रभृत्येव मुक्तायाः स्वामिना मम। द्वाविंशतिः समा जग्मुर्जीवाम्यद्यापि पापिनी ॥१॥

तद्वचनं श्रुत्वा संक्रान्तदुःखप्राग्भारः पवनञ्जयः सगद्गदवागिदं व्याहार्षीत्। हे सुभ्रु! त्वं मया निर्दोषाऽपि दोषमुत्पाद्यावज्ञा-

ताऽसि निशमानिनाऽविज्ञेन तत्क्षम्यतामित्युक्तवन्तं पवनञ्जयमुपलक्ष्य त्रपावती पर्यंकेऽवष्टभ्य विनम्रमुख्यभ्युत्तस्थौ। ततः पवनञ्जयो लतां हस्तीव हस्तेनालिङ्ग्याधिपर्यंकं न्यपदत्। पवनञ्जयो भूयोभूयोऽवोचत्। निरपराधा यत्त्वं मया खेदिताऽसि तत्सहस्व। तच्छ्रुत्वा हर्षिताऽञ्जनाऽवोचत्। हे नाथ! एवं मास्म ब्रूहि। अहं सदैव तव दासस्मि। अतो ममापराधः क्षम्यताम्। इत्युक्तवन्तौ तौ दम्पती सम्मिलितौ। ततो वसन्ततिलका प्रहसितो जगाद। अत्रावयोः स्थातुं योग्यं न, एवं विचार्य तावपसृतौ।

रेमाते तत्र च स्वैरमञ्जनापवनञ्जयौ। विरराम रसावेशा च्चैकयामेव यामिनी ॥१॥

प्रभातां रात्रिमालोक्य तामूचे पवनञ्जयः। जयाय कान्ते यास्यामि ज्ञास्यन्ति गुरवोऽन्यथा ॥२॥

हे सुन्दरि! अतः परं त्वं खेदं मा कार्षीः। त्वं सखीयुता सुखं तिष्ठ। अहं दशास्यकृत्यं सम्पाद्य स्तोकैरेव दिनैः ममागमिष्यामि। अथ त्वया काचिच्चिन्ता न विधेया। गतं तेऽशुभं कर्म। प्रकटितं पूर्वकृतं पुण्यमित्युक्तवन्तं पतिं प्रत्यञ्जना सुन्दरी बभाषे। हे नाथ! अद्यमयैव ऋतुस्नाताऽस्मि यदि कदाचिद्गर्भस्योत्पत्तिर्भविष्यति तदा किं करिष्यतेऽतोऽहं भवता सह समेष्यामि। ततः पवनञ्जयोऽवादीदहं शीघ्रं समेष्यामि त्वं चिन्तां मा कुरु। तथा मदागमनसूचकं मन्नामाङ्कमङ्गुलीयकं गृहाण। समये तत्प्रकाशयेरित्युक्त्वाऽङ्गुलीयकं दत्त्वा यावद्याति तावताऽञ्जनया प्रोक्तम्। यतः—

तव वर्त्मनि वर्तन्तां शिवं,पुनरस्तु त्वरितं समागमः। अयि साधय साधयेप्सितं, स्मरणीयाः समये वयं वयः ॥१॥

एतद्वचः श्रुत्वा हर्षनिर्भरः पवनञ्जय उत्पत्य मानससरस्तीरस्थे निजे शिविरे तत्क्षणादेवाजगाम। ततोऽपि सैन्येन सह देवराज इव व्योमवर्त्मना लङ्कां नगरीं जगाम। गत्वा रावणं प्रणनाम। रावणोऽपि प्रह्लादतनयं दृष्ट्वा हर्षितमनाश्चमूचक्रपरिवृतः पाता-

ललंकां प्रविश्य वरुणं प्रति ययौ। इतश्चाञ्जनासुन्दरी तस्मिन्नेवदिने मुक्ताशुक्तिरिव गर्भं बभार। तद्गर्भानुभावतः सा सुन्दरी सर्वावयवशालिनी बभूव। यथा—

मुखमापाण्डुगण्डश्रि श्यामवक्त्रौ पयोधरौ। गतिं नितान्तमलसां, नेत्रे च प्रस्नुतोज्वले॥१॥
गर्भलक्ष्माणि चान्यानि,तस्याव्यक्तानि वर्ष्मणि। दृष्ट्वा केतुमती श्वश्रूः साधिक्षेपमदोऽवदत्॥२॥ युग्मम्।
हले! किमिदमाचारि, कुलद्वयकलङ्ककृत्। देशान्तरगते पत्यौ, पापे यदुदरिण्यभूः॥३॥

हे कुलटे! हे पांसुले! एतत्त्वया किं कृतम्। लज्जापिता वयम्। श्वश्र्वैवं निर्भर्त्सिता सत्यञ्जनासुन्दरी पत्युरागमनोदन्तसूचिकां नामाङ्कितां मुद्रिकामदर्शयत्। तां मुद्रिकां दृष्ट्वा भूयः श्वश्र्वैवमुक्ता। रे निर्लज्जे पवनस्तव नामापि नाग्रहीत्तदङ्गुलीयकमात्रेण किमस्मान्विप्रतारयसि?। हे स्वच्छन्दचारिणि! निर्गच्छ मद्गृहात्। गच्छ पितृवेश्मनि। माऽत्र स्थाः। स्थानमेतन्नहीदृशाम्। एवमञ्जनां वर्जयित्वा सा निजनिकेतनान्निष्कास्य यानमारोप्य वसन्ततिलकान्वितां माहेन्द्रनगरोपान्ते सेवकैरत्याजयत्। तेऽपि सेवकास्तथाऽकुर्वन्। तान् मातरमिव नमस्कृत्य क्षमयित्वा च स्वस्थानमाययुः। तस्मिन्समयेऽञ्जनादुःखदुःखित इव रविरस्तमगात्। यतः—सन्तः सतां विपदो विलोकयितुं नेश्वराः। रजनी जाता। यथा—

घूकानां घोर-घूत्कारैः, फेत्कारैः फेरुयोपिताम्। क्रन्दितैर्वृकवृन्दानां, श्वाविधां विविधैः स्वनैः॥१॥
तुमुलैः पिङ्गलानां च, संगीतैरिव रक्षसाम्। स्फुटत्कर्णेव सा कष्टं तां जाग्रत्यनयन्निशाम्॥२॥ युग्मम्।

१ प्रसूने च ते उज्वले चेति समासः। २ शरीरे। ३ गर्भिणी। ४ शाहुडीति भाषायाम्। ५ नकुलायाम्।

एवंविधां निशामतिक्रम्य सा सुन्दरी दीनानना भिक्षुकीव पितृगृहद्वारे ययौ अपरिच्छदा वसन्ततिलकायुता। तां सुन्दरीमेकाकिनीं दृष्ट्वा प्रतीहारो व्यजिज्ञपत्। राजन्! अञ्जनासुन्दरी समागताऽस्ति। तच्छ्रुत्वा राजा चिन्तयति। स्त्रीणां चरित्रमचिन्त्यम् धिग्धिग्विधेर्विलसितम्। यतः—

पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किम्, नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम्।
धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणम्, यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ॥१॥
आरोहतु गिरिशिखरं, समुद्रमुल्लङ्घ्य यातु पातालम्। विधिलिखिताक्षरमालं, फलति कपालं न भूपालः ॥२॥

इत्यादि विचिन्त्य तां कलङ्ककारिणीं ज्ञात्वाऽहिदष्टाङ्गुलीवदनिष्टां मत्वा सापि राजा गृहान्निर्वासयामास। तस्मिन्नवसरे महोत्साहो नाम महामन्त्री भूपतिं प्रत्यूचे। श्वश्रूदुःखे दुहितॄणां शरणं पिता। किञ्च हे प्रभो! केतुमती श्वश्रूर्दुष्टाऽस्ति। अतो निर्दोषामप्येनां दोषमुत्पाद्य निर्वासयति। ततो यावद्दोषादोषयोर्निश्चयो न भवति तावत्स्थाप्यते। प्रच्छन्ना पाल्यते स्वपुत्रीति कृपां कुरु। राजोचे। भो मन्त्रिन्! श्वश्रूः सर्वत्रेदृशी भवति। परं पवनञ्जयस्यैषा पूर्वं द्वेष्याऽभवत्। पवनादेवामुष्याः पुत्र्याः कथं गर्भः सम्भाव्यतेऽतः सदोषा सर्वथाप्येषा। ततो निर्वासिता। अत इतोऽपि निर्वास्यताम्। अस्या मुखमपि न पश्यामि। इत्थं राजाज्ञया द्वाःस्थोऽप्यञ्जनां गृहान्निरासयत्। कथंभूतामञ्जनाम्। क्षुधितां, तृषितां, श्रान्तां, निःश्वासान्मुञ्चन्तीमश्रुवर्षिणीम्, दर्भविद्धपदां, चकितहरिणीं, प्रेक्षणीयां, महीतलं पतन्तीं, पदेपदे प्रस्खलन्तीं, विश्राम्यन्तीं, दैवोपालम्भं ददतीं, रुदतीं, पक्षिणो रोदयन्तीम्। सख्या सह चचाल। परं कुत्राऽपि स्थितिं न लेभे। यतः—पूर्वायातराजपुम्भिर्निषिध्यते। ततोऽञ्जना चिन्तयति। संसारे कस्य कोपि वल्लभो

नास्ति। यतः—

वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः, निर्गन्धं कुसुमं त्यजन्ति मधुपा दग्धं वनान्तं मृगाः।
निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टं नृपं सेवकाः, सर्वः स्वार्थवशाज्जनोऽभिरमते नो कस्य को वल्लभः ॥१॥

माता नास्ति पिता नास्ति नास्ति भ्राता सहोदरः। अर्थेनैव धनेनैव तस्माज्जाग्रत जाग्रत ॥२॥

कामः क्रोधश्च लोभश्च देहे तिष्ठन्ति तस्कराः। ज्ञानरत्नापहारन्ति तस्माज्जाग्रत जाग्रत ॥३॥

आशया बध्यते जन्तुः कर्मणा बहुचिन्तया। आयुःक्षयं न जानन्ति तस्माज्जाग्रत जाग्रत ॥४॥

इत्यादि चिन्तयन्ती महीं भ्रमन्ती काम्प्येका महाटवीं प्राप। कथं भूतामटवीम्। अनेकोत्कटवृक्षमण्डितां, रौद्रघोरभयंकरां, मनुष्योज्झितां, श्वापदसहितां, विविधव्यालशार्दूलकालकंकालवेतालक्षेत्रपालपालितां, शाकिनी–डाकिनी–योगिनीभोगमयंकरां, यक्षराक्षसगन्धर्वविद्याधरखेचरभूचरप्रेतपिशाचप्रेरिता, भिल्लतस्करसरभकासरभासुरां, व्याघ्रसिंहमृगालवृकशूकरादिश्वापदरौद्राकारघूकशिवाफेत्कारडाकिनीडमरद्रात्कारामेवंविधामटवीं प्राप्य रोदिति। अहो! मे मन्दभाग्यत्वमहो! मातृपितृणामविचारित्वमहो! दैवनिर्घृणत्वमहो! ससारासारत्वं यदहं दैवेन पापिना निर्दोषाऽपि विडम्बिता। धिग्रूपं, धिग्यौवनं, धिग्सुकुलत्वं, यदहमीदृशे सुकुले दैवेनेत्थं विडम्बिता। धन्यास्ते मुनिवरा य एवंविधससारस्वरूपं ज्ञात्वा संसारान्निर्गताः। संयमं प्रतिपन्नाः। अहमधन्या। यतो दैवेन विडम्बिता। यतः—

कृतकर्मक्षयो नास्ति कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥१॥

घणदवभयेन नलिनी रणं मुत्तूण सरवरे पत्ता। तत्थवि हिमेण दड्ढा न मुचए पुव्व किइकम्मं ॥२॥

इत्यादि विलपन्त्यञ्जना वसन्ततिलकासख्या मिष्टवाक्यैः सम्बोध्यासन्नां पर्वतगुहां निन्ये। तत्र साञ्जना गुहान्तर्ध्यानस्थममितगतिं मुनिं ददर्श। सोऽपि चारणमुनिस्तां सतीं दृष्ट्वा ध्यानमपारयत्। सापि सती तं साधुं प्रणिपत्य भूमौ पुरो निपसाद। साधुरपि दक्षिणं करमुद्यम्य धर्मलाभाशिषमदात्। वसन्ततिलकाऽपि भक्त्या नमस्कृत्य निपसाद। साधुरपि धर्मदेशनामकरोत्। यतः—

जिनेन्द्रपूजा गुरुपर्युपास्तिः,सत्त्वानुकंपा शुभपात्रदानम्। गुणानुरागः श्रुतिरागमस्य,नृजन्मवृक्षस्य फलान्यमूनि।

इत्यादि देशनां श्रुत्वा वसन्ततिलका मुनिं जगौ। भो मुने! अस्या गर्भे को जीवोऽस्ति? केन हेतुनाऽञ्जनया कलङ्कमाप्तमिति वसन्ततिलकया पृष्टो मुनिरब्रवीत्। अथ हनुमत्पूर्वभवानाह। अस्मिञ्जम्बूद्वीपे भरतक्षेत्रे मन्दरे नगरे प्रियनन्दी नाम्ना वणिगस्ति। तस्य जयानाम्न्यां जायायां दमयन्तो नाम्ना पुत्रोऽभूत्, कलानिधिर्जनप्रियश्च। दमयन्तोऽन्येद्युरुद्याने क्रीडन् स्वाध्यायध्यानतत्परान्साधून्ददर्श। वन्दित्वा मुनिभ्यो धर्मलाभाशिषं श्रुत्वा शुद्धधीर्धर्मं शुश्राव। यतः—

दानं सुपात्रे विशदं च शीलं, तपो विचित्रं शुभभावना च।
भवार्णवोत्तारणयानपात्रं, धर्मं चतुर्धा मुनयो वदन्ति ॥१॥

इति देशनां श्रुत्वा देशनान्ते दमयन्तः शुद्धधर्मं जग्राह। यथा सम्यक्त्वपूर्वं व्रतानि जगृहे। ततो सम्यक्त्वदिनादारभ्य मुनिभ्यो दानं ददौ। विविधाभिग्रहानग्रहीत्। एवं कुर्वतस्तस्य कियान्कालो गतः। आयुरन्ते विपद्येशानकल्पे देवोऽभूत् द्वितीयभवे। तृतीये भवे जम्बूद्वीपे भरतक्षेत्रे मृगाङ्कपुरेशितुर्हरिचन्द्रमहीपतेः प्रियङ्गुलक्ष्म्यां पट्टराज्यां सिंहचन्द्रोनाम्ना पुत्रोऽभूत्। तत्रापि जैनं

धर्मं प्रपद्यायुरन्ते विपद्य तुरीयभवे तुरीयं माहेन्द्रं देवलोकं गतः। पञ्चमे भवेऽत्रैव भरते वैताढ्ये वारुणनगरे सुकण्ठनृपकनकोदरी-पट्टराज्ञ्योः सिंहवाहनो नाम्ना पुत्रोऽभूत्। तत्राऽपि श्रावकत्वं प्राप्य पितृपर्यायागतं राज्यं भुक्त्वा श्रीविमलप्रभुत्रयोदशमजिनशिष्यल-क्ष्मीधरमुनेः पादमूले व्रतमग्रहीत्। तत्र दुस्तपं तपस्तप्त्वाऽऽयुरन्ते मृत्वा षष्ठे भवे लान्तके षष्ठे देवलोके गतः। ततश्च्युत्वा सप्तमे भवे-ऽस्यास्तव सख्या अञ्जनसुन्दर्या उदरे समवातरत्। अयं तव सख्याः पुत्रो गुणानामालयो विद्याधरेश्वरश्चरमदेहोऽनवद्यो दोष्मतां श्रेष्ठो हनुमान् नाम्ना भविष्यति। इति हनूमान्पूर्वभवः॥ अथाञ्जनायाः पूर्वभवः कथ्यते॥ यथाऽस्मिञ्जम्बूद्वीपे भरतक्षेत्रे कनकपुरे नगरे कनकरथो नाम्ना राजाऽभूत्। तस्य कनकरथस्य द्वे पत्न्यौ स्तः। एका कनकोदरी, अपरा लक्ष्मीवती च। तयोर्मध्ये लक्ष्मीवत्यत्यन्त-श्राविकाऽभूत्। सा रत्नमयं जिनबिम्बं विधाय गृहचैत्येऽपूजयत्। द्वयोः कालयोः प्रत्यहमवन्दिष्ट। एकस्मिन्दिने मात्सर्यात्कनको-दर्या तस्याः सपत्न्या अर्हत्प्रतिमां हृत्वा गृहोपान्तेऽवकरके क्षिप्ता। तस्मिन्समये तस्या गृहे जयश्रीनामगणिनी विहरंती तत्राऽऽ-गता। तया साध्व्या कनकोदरी प्रतिमामवकरके क्षिपन्तीं दृष्ट्वा तया साध्व्या कनकोदरी भाषिता। भो भद्रे! त्वया भगवत्प्रति-मामपहरन्त्या सुन्दरं न कृतम्। तच्छ्रुत्वा तया भवभीत्या प्रतिमा समर्पिता। पुनः साध्व्या प्रोक्तं—भो कनकोदरि! त्वयाऽशुचि-भाण्डागारेऽवकरके जिनप्रतिमां क्षिपन्त्याऽऽत्मनोऽनेकदुःखभाजनं कृतः। पुनः पुनः सानुतापा कनकोदरी जिनप्रतिमां गृहित्वा सुग-न्धिवारिणा प्रक्षाल्य चन्दनेनानुलिप्य पुष्पादिभिः प्रपूज्य सिंहासने न्यवेशयत्। पादयोः पतित्वा क्षमितम्। न पुनरेवं करिष्य इति कथयित्वा साध्व्याः समीपे सम्यक्त्वं प्रतिपद्य जैनं धर्मं प्रतिपाल्य काले विपद्य सौधर्मे कल्पे देव्यजायत। ततश्च्युत्वाऽत्रैव भारते दन्तिपर्वते माहेन्द्रराजस्य हृदयसुन्दरी पट्टराज्ञी। तयोः पुत्र्यञ्जनासुन्दरी जाता, तव स्वामिनी। अस्या जिनप्रतिमाया दुःस्थानक्षेप-

जमिदं फलं त्रयोविंशतिघटिका निबद्धं त्रयोविंशतिवर्षभोग्यमथैकवर्षावसानं वर्तते। त्वमपि पूर्वे भवे अस्या भगिन्यासीत्। त्वया तत्कर्मानुमोदितं तेन त्वमप्यनया सह तत्फलं भुंक्ष्व। तच्छ्रुत्वा ताभ्यां श्राद्धधर्मं जगृहे। पुनर्मुनिनोक्तम्–भो सुन्दरि! अत्रैव भवतो मातुलोऽकस्मात्समेष्यति। स त्वां स्ववेश्मनि नेष्यति तत्र मातुलगृहे पत्या सह संगमो भविष्यति। एवमुक्त्वाञ्जनां सखीमार्हते धर्मे स्थापयित्वा स मुनीन्द्रः खगेन्द्रवन्नभसा समुत्पपात। इत्यञ्जनासुन्दरीवसन्ततिलकयोः पूर्वभवौ॥ अथ ते तत्र कन्दर्यां सिंहमपश्यताम्। पुच्छाच्छोटभयंकरं, फुत्कारपूर्णदिग्भागं कुञ्जरासृक्करालितं, दीपायमाननयनं, बालचन्द्राभदंष्ट्रं, ज्वालासोदरकेसरं, लोहाङ्कुशोपमनखं, शीलासध्वगुरुःस्थलमेवंविधं पञ्चाननयुवानं समायातमपश्यताम्। ततस्ते कम्पमानाङ्गे भूतलं विवक्षू इव कान्दिशिके अतिष्ठताम्। एवं तयोस्तत्र स्थितयोर्यज्जातं तन्निशम्यताम्–तस्य शीलमाहात्म्यतस्तद्गुहास्वामी मणिचूलनामा सुरः शारभं रूपं विकृत्य पञ्चाननमनाशयत्। ततः शारभं रूपं संहृत्य स्वं रूपं प्रतिपद्य तयोः प्रमोदायार्हद्गुणस्तुतिं सप्रियो जगौ। ते सुरकृतसान्निध्ये गुहायां सुस्थिते। मुनिसुव्रतदेवप्रतिमां स्थापयित्वा ते अर्चतः स्म। यतः—

दालिद्दं दोहग्गं कुजाइ कुसरीर कुगइ कुमईओ। अवमाणरोगसोगा न हुंति जिणबिंबकारिणं॥१॥
धूपं दहति पापानि दीपो दारिद्र्यनाशनम्। पूजायां विपुलं राज्यं नैवेद्यं मोक्षदायकम्॥२॥
देवस्य दक्षिणे भागे दीपस्य विनिवेशनम्। वामांगे धूपदानं तु अग्रपिंडं तु सन्मुखम्॥३॥
प्रभाते प्रथमं वासपूजा कार्या विचक्षणैः। मध्याह्ने कुसुमैः पूजा सन्ध्यायां धूपदीपयोः॥४॥

एवं पूजां कुर्वत्योः कालो याति। अन्येद्युरञ्जना पूर्णे मासि शुभदिने शुभलग्ने शुभवारे शुभनक्षत्रे शुभांशे शुभग्रहनिरीक्षित-

कल्याणवत्यां वेलायां सिंहस्वप्नोपसूचितं सिंहमिवाञ्जना सुतं सुषुवे। कुलिशांकुशचापचक्रांकपादं शुभलक्षणोपेतं शुभाकारं मातृपितृमनोरथपूरकं सुतं दृष्ट्वाऽञ्जना वसन्ततिलकामूचे। हे सखि! भाग्यं फलितम्, सुतो जातः। वसन्ततिलका तस्य सूतिकर्माण्यकरोत्। अङ्क आरोप्य हर्षदुःखपूरिताऽञ्जना रोदिति। यथाः—

आरोप्य सुतमुत्सङ्गे दुःखिताञ्जनसुन्दरी। उदश्रुवदनाऽरोदीद्रोदयन्ती तरूनपि ॥१॥

महात्मन्नत्र विपिने तव जातस्य कीदृशम्। जन्मोत्सवं करोम्येषा वराकी पुण्यवर्जिता ॥२॥

एवं तां रुदन्तीं प्रतिसूर्यनामा विद्याधराधिपो गगनाऽध्वना गच्छन् प्रेक्ष्य समुपेत्यावादीत्। भो सुन्दरि! सत्यं ब्रूहि किन्ते दुःखस्य कारणम्। ततोऽञ्जनया संज्ञिता वसन्ततिलकाऽप्यूचे। भो महाभाग! शृण्वस्या वृत्तान्तमित्युक्त्वाऽञ्जनाया विवाहादारभ्य पुत्रजन्मपर्यन्तं सर्वमशेषमाचख्यौ। ततो दुःखितः प्रतिसूर्योऽवादीत्। भो भद्रे! शृण्वहं हनुपुरेश्वरस्तव मातुलोऽस्मि। प्रतिसूर्यो नाम्ना चित्रभानुतनयः सुन्दरीमालाकुक्षिजो हृदयसुन्दरीसहोदरस्तव मातुलोऽस्मि। इति श्रुत्वा साऽञ्जनाऽधिकाधिकमरोदीत्। यतः—इष्टावलोकनात्प्रायो दुःखं पुनर्नवीभवेत्। ततो मातुलोऽञ्जनां रुदन्तीं वारयित्वा सहागतान्दैवज्ञान् पप्रच्छ। भो दैवज्ञ! अयं शिशुः कीदृशो भावी। दैवज्ञेनोक्तम्—

भाव्यवश्यं महाराजो भवे चात्रैव सेत्स्यति[1]। शुभग्रहबले लग्ने जातोऽयं पुण्यभाक्शिशुः ॥१॥

तथाहि तिथिरद्येयं चैत्रस्य बहुला[2]ऽष्टमी। नक्षत्रं श्रवणं स्वामी वासरस्य विभावसुः ॥२॥

---

१ सिद्धिमेष्यति। २ कृष्णाऽष्टमी।

आदित्यो वर्तते मेषे भवनं तुंगमाश्रितः। चन्द्रमा मकरे मध्ये भवने समवस्थितः ॥३॥
लोहितांगो वृषे मध्ये मध्ये मीने विधोः सुतः। कुलीरे धीषणोऽत्युच्चैरध्यास्य भवनं स्थितः ॥४॥
मीने दैत्यगुरुस्तुङ्ग तस्मिन्नेव शनैश्वरः। मीनलग्नोदये ब्रह्मयोगे सर्वमिदं शुभम् ॥५॥ चतुर्भिः कलापकम् ॥

एवंविधां जन्मपत्रिकां श्रुत्वा प्रतिसूर्यो भागिनेयीं ससखीं सपुत्रां विमाने आरोप्य स्वपुरीं प्रतस्थे। एवं प्रतिसूर्यस्य नभसि गच्छतो मातुरुत्संगाद्बालको विमाने लम्बमाना रत्नमालम्बकिंकिणी जिघृक्षुरुत्पपात। ततो विमानं दूरे गतं बालको गिरिशिखरमूर्द्धनि न्यपतत्। तत्पातनिर्घातवशात् स गिरिः कणशोऽभवत्। पुत्रं पतितं दृष्ट्वाऽञ्जनासुन्दरी तत्क्षणं रुदती पाणिना हृदयमाजघ्ने। ततः प्रतिसूर्यो विमानादवरुह्य तमर्भकमक्षताङ्गमुपादाय तन्मातुरर्पयन् निधानवत्। ततो मनोवेगेन विमानेन प्रतिसूर्यो हनुपुरे ययौ। अत्राञ्जनां नीत्वा स्ववेश्मन्युत्तारयामास कुलदेवीव। सर्वोऽप्यन्तःपुरीजनोऽप्यपूजयत्। अथ बालो जातमात्रो हनुरुहे पुर आययौ। ततो हनुमानित्यभिधानं मात्रा चक्रे। विमानतः पतितेन शिला चूर्णिता तेन शिलाचूर इत्यप्यभिधानं प्रतिसूर्योऽकरोत्। तत्र हनुमान् क्रीडन् यथासुखमवर्धिष्ट मानसाऽम्भोजिनीवने राजहंसार्भक इव। एकस्मिन्दिनेऽञ्जना चिन्तयत्यहो! श्वश्र्वाऽप्यारोपितो दोषः कथं नामोत्तरिष्यतीतिचिन्तयाऽन्तःशल्येन दोपिता दिनान्निर्गमयति। इतश्च पवनो वरुणेन सन्धिं विधाय वरुणात्खरदूषणौ मोचयित्वा लब्धजयो रावणं तोषयामास। ततः सपरिग्रहो रावणो लङ्कां जगाम। पवनोऽपि रावणसन्मानितो विसर्जितश्च वर्षान्ते स्वपुरमाययौ। राज्ञा महामहश्चक्रे। पवनञ्जयोऽपि पितरौ प्रणम्य पित्रा मानितः पित्रा सह भोजितोऽञ्जनासुन्दरीवासगृहं ययौ। तत्रा-

१ मङ्गलः। २ कर्कराशौ धीषणो बृहस्पतिः।

ञ्जनामपश्यंस्तत्रस्थाञ्जनानपृच्छत् क्वाञ्जना ? । केनचिदुक्तम्—त्वन्मात्रा केतुमत्या गर्भसम्भवदोषतो गृहान्निर्वासिता माहेन्द्रनगरोपान्ते मुक्ता । ततो न ज्ञायते किं जातम् । तच्छ्रुत्वा पवनरंहसा पवनः श्वशुरपत्तनं ययौ । तत्राऽपि प्रियामलब्ध्वा काँश्चिज्जनानपृच्छत् । भो लोका ! वसन्ततिलकायुताऽञ्जना केनचिदिहायाता दृष्टा ? ते लोका इत्यूचुः । भो पवन ! अञ्जनेहायाता, परं माहेन्द्रेण पित्रा राज्ञा दौःशील्यदोषतो निर्वासिता । तच्छ्रुत्वा पवनञ्जयः पविनेवाहतो भूमौ पपात मूर्छितश्च, कथमपि लब्धसंज्ञो विलपति । विलप्य दैवायोपालम्भान् ददाति ।

येन यत्रैव भोक्तव्यं सुखं वा दुःखमेव वा । स तत्र बद्धो रज्ज्वेव बलाद्दैवेन नीयते ॥१॥

यस्मिन्देशे यदा काले यन्मुहूर्ते च यद्दिने । हानिर्वृद्धिर्यशोलाभस्तत्तथैव च नान्यथा ॥२॥

इति विचार्य शैलवनादिषु भृशं प्रियामन्वेष्टुमभ्राम्यत्परं शापभ्रष्टामर इव तत्प्रवृत्तिं न च प्राप । विषण्णमना निजं प्रहसितमित्रमेवं जगाद । भो मित्र ! त्वं मम गृहे गत्वा मातापित्रोः कथय—अद्ययावन्महीं भ्रान्त्वा भ्रान्त्वाऽञ्जना विलोकिता परं क्वापि न लब्धा, पुनर्गवेषयिष्यामि, चेद्द्रक्ष्यामि, तर्हि साधु, नो चेद्द्रक्ष्यामि, तर्हि पावके प्रवेक्ष्यामि । एवमुक्तः प्रहसितो गत्वाऽऽदित्यपुरे द्रुतं प्रह्लादकेतुमत्योस्तद्वाचिकमञ्जनोदन्तसूचकं कथयामास । तच्छ्रुत्वा केतुमती वज्रहतेव मूर्च्छिता भूमौ निपतिता संज्ञां लब्ध्वेत्युवाच । यथा—

लब्धं मयाऽत्रैव साध्व्या दोषारोपणजं फलम् । अत्युग्रपुण्यपापानामिहैव फलमाप्यते ॥१॥

अथवा किं मया साऽपि निर्दोषा परमार्थतः । अविमृश्य विधायिन्या पापिन्या निरवास्यत ॥२॥

एवं रुदतीं प्रह्लादस्तां निवार्य कथंचन। चचाल सबलः सूनुमन्वेष्टुं स इवाञ्जनाम् ॥३॥

राजा प्रह्लादोऽञ्जनापवनान्वेषणहेतव आप्तानां सर्वविद्याधराणामन्तिके स्वान् नरान् प्रैषीत्। स्वयमपि विद्याधरैः सह सूनुं स्नुषां चालोकयन्, भ्राम्यन् भूतवनं वनमागात्। अत्रान्तरे पवनोऽञ्जनां सर्वत्र विलोक्य क्वापि न प्राप्तवान्। तद्दुःखदुःखितस्तस्मिन्नेव वने गत्वा काष्ठचितां विरच्य यावज्ज्वलनं ज्वालयामास, तावद्राजा प्रह्लादस्तं पवनं ददर्शेतिप्रोच्यमानम्। यथाः–हे वनदेवते! अहं प्रह्लादकेतुमत्योः सुतोऽस्मि। मम पत्नी महासत्यञ्जना मया दुर्धिया निर्दोषाऽपि भृशं खेदिता, ततस्तां परित्यज्याहं यात्रायां स्वामिकार्ये चलितो, दैवात्पुनस्तामदोषां ज्ञात्वा, तत उत्पत्य गगनाध्वना पुनरागमनं कृत्वा, तां रमयित्वाऽभिज्ञानमुद्रिकां दत्त्वा, पितृभ्यामपरिज्ञातः पुनः कटक आपतम्। ततः सा मम कान्ता निरपराधाऽपि सापराधेयमिति ज्ञात्वा मम मात्रा गृहान्निर्वासिता, सा क्वाप्यस्तीति न बुध्यते, साऽद्याऽधुना च निर्दोषा, ममाज्ञानदोषेणेदृशं दारुणं दुःखं प्राप्ता, ततो मयाऽखिलां पृथ्वीं भ्रान्त्वा विलोकिताऽपि हि मन्दभाग्येन सा मया न प्राप्ता रत्नाकरे रत्नमिव, तत्कारणादिमां स्वां तनुं हुताशने जुहोमि, यतो यावज्जीवं जीवतो विरहानलो दुःसहो वर्ततेऽतो जीवितं त्यजामीत्युक्त्वा झम्पां प्रदातुं पवनो यावन्नभस्तले प्रोत्पपात। तावत्प्रह्लादः श्रुततद्वचनो बाहुभ्यां धृत्वा वक्षस्यालिङ्ग्य भूमौ संस्थाप्य पुत्रं प्रत्युवाच, हे पुत्र! प्रथमं तव मात्राऽविमृश्य कृतम्, द्वितीयं त्वमप्यविमृश्य मा कृथाः, स्थिरीभव. स्नुषाऽन्वेषणहेतवे मया विद्याधरनराः सहस्रशः प्रेषिताः सन्ति। एवं तौ पितापुत्रौ वार्तां कुरुतस्तावता पूर्वप्रेषिताः केऽपि विद्याधरनरा गवेषयन्तः पवनाञ्जने हनुपुरं ययुः। हनुपुरे गत्वा प्रतिसूर्यं नत्वाऽञ्जनां दृष्ट्वा तयोरेवं मत्ययोचत्। भो राजन्! अञ्जनाविरहे पवनेनाग्निप्रवेशप्रतिज्ञा कृताऽस्ति। तच्छ्रुत्वाऽञ्जना यत्करोति तदाह:—

दुःश्रवं तद्वचः श्रुत्वा पित्वा विषमिवाञ्जना। हा हताऽस्मीति जल्पन्ती पपात भुवि मूर्च्छिता ॥१॥
आसिक्ता चन्दनाम्भोभिस्तालवृन्तैश्च वीजिता। लब्धसंज्ञा समुत्थाय सा रुरोदेति दीनधीः ॥२॥
न मे श्वशुरयोर्दोषो दोषः पित्रोर्न चाप्ययम्। ममैव मन्दभाग्यायाः कर्मदोषोऽयमीदृशः ॥३॥
रुदन्तीं बोधयित्वा तां प्रतिसूर्यः सनन्दनाम्। विमानवरमारोप्य पवनान्वेषणे ययौ ॥४॥
स भ्राम्यन्प्राप तत्रैव वने भूतवनाभिधे। दूरादपि प्रहसितेनेक्षांचक्रे च साश्रुणा ॥५॥

प्रतिसूर्यं विमानस्थं ससुतां चाञ्जनां दृष्ट्वा प्रहसितः प्रह्लादं पवनञ्जयं चावबोधयत्। ततो विमानादुत्तीर्य प्रतिसूर्योऽञ्जनाऽपि दूराद्भून्यस्तमस्तकौ प्रह्लादं नेमतुः। प्रह्लादोऽपि प्रतिसूर्यमालिङ्ग्य पौत्रमङ्के निवेश्य ससंभ्रमः संजाताऽऽह्लाद एवं जगाद। भो प्रतिसूर्य मां व्यसनांभोधौ मज्जन्तं सकुटुम्बकं समुद्धृतवानतस्त्वमेव सम्बन्धिनां धुरि वर्तसे। यतः—एषा स्नुषा त्यक्ता दोषं विना। इयं साध्वी त्वया रक्षिता। एतां रक्षता त्वया मम कुटुम्बं रक्षितं पवनोऽपि दृष्ट्वा प्रशान्तशोकज्वलनो मुदमापन्नः। ससुताञ्जनामीक्षांचक्रे। सर्वेऽपि सम्बन्धिनोऽञ्जनां प्रशंसन्ति। धन्यैषा सुन्दरी ययेदृशे कष्टे शीलं रक्षितमेतच्चित्रम्। यतः—

किं चित्रं यदि शास्त्रवेदनिपुणो विप्रो भवेत्पण्डितः, किं चित्रं यदि नीतिशास्त्रनिपुणो राजा भवेद्धार्मिकः।
तच्चित्रं यदि रूपयौवनवती साध्वी भवेत्कामिनी, तच्चित्रं यदि निर्धनोऽपि पुरुषः पापं न कुर्यात्क्वचित् ॥१॥

सर्वेऽपि विद्याधराः श्वशुरप्रमुखा नीतिनिपुणा अञ्जनां प्रशशंसुः। विद्यासामर्थ्यतः सर्वेऽपि महोत्सवं चक्रुः। महोत्सवं कृत्वा विमानमारुह्य हनुरुहं पुरं समाजग्मुः। माहेन्द्रोऽप्याययौ। केतुमती श्वश्रूरप्यागता। सर्वेऽपि बान्धवा सपरिच्छदा समागत्य पव-

नाञ्जनयोर्मिलित्वा स्वं स्वं पुरं ययुः। अञ्जनाहनुमद्युतः पवनस्तत्रैव सुखमनुभवन्नास्ते। यतः—

हंसा जिहीं गय तिहीं गया महिमण्डना हवंति। छेहु तेह सरोवरह जे हंसे मुचंति ॥१॥

यत्रापि तत्रापि गता भवन्ति हंसा महीमण्डलमण्डनाय।
हानिस्तु तेषां हि सरोवराणां येषां मरालैः सह विप्रयोगः ॥२॥

पितुर्मनोरथैः सह हनुमानपि तत्रैव ववृधे। कलाश्च जगृहे। ताश्चेमाः यथा लेहं (१) गणियं (२) रुवं (३) नट्ट (४) मित्याद्योपपातिकोक्ताः प्रसिद्धाः काव्यकल्पलतादौ त्वेवम्–लक्षण (१) साहित्यनिरीक्षण (२) तर्क (३) सिद्धान्तसम्पर्क (४) लिखित (५) गणित (६) गीत (७) नृत्य (८) वादित्र (९) विनोद (१०) सन्देहपरिच्छेद (११) वास्तुशास्त्र (१२) वैद्यकशास्त्र (१३) नीतिशास्त्र (१४) ज्योतिःशास्त्र (१५) शकुनविचार (१६) स्वप्नविचार (१७) मंत्रवाद (१८) रसवाद (१९) गन्धर्ववाद (२०) तन्त्रवाद (२१) धातुवाद (२२) सत्यवाद (२३) अश्वलक्षण (२४) गजलक्षण (२५) पुरुषस्त्रीलक्षण (२६) रत्नपरीक्षा (२७) बलीवर्दादिनिर्णय (२८) खड्गादिविजय (२९) लेपकर्म (३०) चित्रकर्म (३१) तन्तुवायकर्म (३२) स्नतिकर्म (३३) पलीतकर्म्म (३४) काष्ठोत्करण (३५) दंतघटना (३६) सुवर्णादिघटना (३७) मुष्टिभेद (३८) पत्रच्छेद (३९) ऐंद्रजालज्ञान (४०) क्रियाकालज्ञान (४१) शृंगारकरण (४२) जलतरण (४३) रन्धन (४४) केशबन्धन (४५) कथाकथन (४६) पुष्पग्रथन (४७) युद्ध (४८) नियुद्ध (४९) कृषिकर्म (५०) नियोगकर्म (५१) मर्दनकर्म (५२) आरामरोपण (५३) आकारगोपन (५४) सुरभिवस्तुकरण (५५) अदृश्यसञ्चरण (५६) सकलदेशवेष (५७) अशेषभाषाविशेष (५८) नव्यकाव्यलव (५९) सम्यग्घस्तलाघव (६०) दण्डलक्षण (६१) परिचितोपलक्षण (६२)

दूतभेद (६३) दर्शनप्रतिभेद (६४) रणचर्या (६५) रथचर्या (६६) वस्तुविर (६७) देशाचार (६८) रसायनसंचना (६९) कालवंचना (७०) धर्मध्यान (७१) योगज्ञान (७२) एवंविधद्वासप्ततिकलाकुशलो बभूव। तथा विद्याधरयोग्या विद्याश्चासाधयत् रोहिणीप्रज्ञप्त्यादयः।

नागराजायतभुजः शस्त्रशास्त्रविचक्षणः। क्रमाच्च यौवनं प्राप हनुमान् भानुमाँस्त्विपा ॥१॥

नीतिज्ञो यथाः–चतस्रो राजनीतयः–साम–दाम–भेद–दण्डाश्चेति। पट्त्रिंशदण्डायुधश्रमज्ञो यथाः–चक्र–धनुर्वज्र–अंकुश–खड्ग–छुरिका–तोमर–कुन्त–शूल–त्रिशूल–शक्तिपाश–मुद्गर–कुदाल–दस्फोट–गोफण–गलिका–मुण्ठी–रादा–शङ्ख–फरसी–पट्टि–रिष्ट–कणय–कर्तरि–हल–मुशल–सुहलिक–करपत्र–पङ्क–नालि–मायडचुस–दण्डायुद्धानि [३६] सप्तविंशतिशास्त्राध्येता। तानि नामानि यथाः–शब्द–छन्दःशास्त्र–अलंकार–काव्य–नाटक–निर्घण्टु–धर्मशास्त्र–अर्थशास्त्र–कामशास्त्र–मोक्षशास्त्र–तर्कवाद–वैद्यक वास्तुशास्त्र–वितान–गणित–गान्धर्व–विनोद इति। सम्प्राप्तयौवनो द्वात्रिंशल्लक्षणोपेतो मातापितृमनोरथैः सह वर्धितो गृहारामो–पवनादिषु हनुमान् सुखं क्रीडन्नास्ते।

इतश्चामर्षणो रावण आज्ञापराङ्मुखं वरुणं जेतुं पुनः प्रतस्थे। सर्वेऽपि विद्याधरेश्वरा दूताहूता विमानारूढाः सबलवाहनयुता रावणं प्रति चेलुः। दूतेनाहूतौ पवनप्रतिसूर्यौ तत्र यावत्प्रचेलतुस्तावद्धनुमानूचे। यथाः—

इहैव तिष्ठतम् तातौ, जेष्याम्यहमपि द्विपः। प्रहरेद्बाहुना को हि, तीक्ष्णे प्रहरणे सति ॥१॥

पालत्वान्नानुकम्प्योऽस्मि, युष्मत्कुलजन्मनाम्। पौरुषावसरे प्राप्ते, न प्रमाणं वयः खलु ॥२॥

एवं तावति-निर्बन्धात्, प्रतीक्ष्याप्रृच्छ्य चोच्चकैः। ताभ्यां च चुम्बितो मूर्द्धनि, कृतप्रस्थानमङ्गलः ॥३॥

यतः—

कन्या गौः पूर्णकुम्भो दधिमधुकुसुमं पावको दीप्यमानः, यानं वागोप्रयुक्तं वररथतुरगं छत्र भद्रातिभद्रम्।
उत्खाता चैव भूमिर्जलचरमिथुनं सिद्धमन्नं मुनिर्वा, वेश्या स्त्री मद्यमांसं हितमपि वचनं मंगलं प्रस्थितानाम् ॥४॥

इत्यादि शुभशकुनैः प्रेरितो महासामन्तसेनानीसेनासमाकुलोऽनेकवादित्रनिःस्वाननिनादपूरितदिगन्तो महोत्सवाडम्बरपूरिताम्बरो दुर्वारविक्रमो हनुमान् रावणस्कन्धावारे प्रययौ। रावणोऽपि हनुमन्तं जयश्रियमिव समायान्तं दृष्ट्वा प्रणमन्तं च विलोक्य मुदा स्वांके निदधे, कुशलं च पप्रच्छ। ततश्चलितो रावणो वरुणपुर्या अभ्यर्णे युद्धसज्जो युद्धाय तस्थौ। इतः पातालङ्कातो वरुणपुत्राः शतशो दोष्मन्तो निधावन्तो गर्वपर्वता निर्ययुः। निर्गत्य वरुणात्मजा रावणमभ्येत्य योधयामासुः। वरुणोऽपि सुग्रीवाद्यैर्वीरैः समं युयुधे। ते महौजसो वरुणपुत्रा अरुणादयः संग्रामे रावणं खेदयामासुर्वराहं जात्यश्वान इव। अत्रान्तरे पवनपुत्रो हनुमान् क्रोधदुर्धरो दारुणान् वरुणात्मजान् कुंजरान् केसरीवायोधयत्। अथ हनुमान् रावणान्तरे नीत्वा वरुणपुत्रान्विद्यासामर्थ्यतो जित्वा तान् सर्वान्बबन्ध। ततो वरुणः स्वान्पुत्रान् दृष्ट्वा क्रोधारुणो हनुमतेऽभ्यधाविष्ट। ततो रावणः सुग्रीवाद्यैः परिवृतो वरुणं हनुमदुपरि गच्छन्तं दृष्ट्वाऽन्तरारुणं स्खलयामास। वरुणो विशिखघोरणीर्वर्षन् शुशुभे। यथाः—

वृषभो वृषभेणेव कुंजरेणेव कुंजरः। वरुणो रावणेनोच्चैः क्रोधान्धो युयुधे चिरम् ॥१॥
सर्वौजसाऽऽकुलीकृत्य वरुणं रावणश्छली। उत्पत्त्येन्द्रमिवाबध्नात् सर्वत्र बलवच्छलम् ॥२॥

ततो जयजयारावैर्मुखरीकृतदिङ्मुखः। स्कंधावारं पृथुस्कंधो जगाम दशकन्धरः ॥२॥

रावणः सपुत्रं वरुणं प्रणामतत्परं स्ववशवर्तिनम् दुःखभारभराक्रान्तं म्लानमुखं दीनवचनं दृष्ट्वा करुणापरो रावणो वरुणाय राज्यं दत्त्वा मुमोच। यतो महात्मनां कोपः प्रणिपातान्तो वर्तते। यतः—

क्रमेण भूमिः सलिलेन भिद्यते, क्रमेण कार्यं विनयेन सिध्यति।
क्रमेण शत्रुः कपटेन हन्यते, क्रमेण मोक्षः सुकृतेन लभ्यते ॥१॥

मुक्तो वरुणो हर्षितो हनुमते स्वां पुत्रीं सत्यवतीं नाम्नीं ददौ। यतो निश्चितमीदृग्जामाता दुर्लभो वर्तते। यतः—

कुलं च शीलं च सनाथता च, विद्या च वित्तं च वपुर्वयश्च।
वरे परं सप्तगुणा विलोक्या, ततः परं भाग्यवशा हि कन्यका ॥१॥

एवं ज्ञात्वा रावणेनापि चन्द्रणखापुत्र्यनङ्गकुसुमा हनुमते ददे। ततो रावणः सबलवाहनो लङ्कामागात्। तत्रापि सुग्रीवेण हरिमालिनी निजपुत्री हनुमते दत्ता। अन्यैर्विद्याधरसहस्रैः कन्यकासहस्राणि हनुमते दत्तानि। हनुमानपि तासां पाणिग्रहणं कृत्वा रावणेनालिङ्गितो मानितः पूजितो विसृष्टो दोष्मानिति सर्वैर्विद्याधरैः प्रशंसितो हनुमान्हनुपुर आजगाम। हर्षितैर्मातापितरैर्महामहश्चक्रे। अन्येऽपि विद्याधराः सुग्रीवप्रमुखा रावणेन विसृष्टाः प्रहृष्टमनसो निजं निजं नगरं प्रजग्मुः।

इति श्रीमत्तपागच्छभट्टारकश्रीहीरविजयसूरिराज्ये आचार्यश्रीविजयसेनसूरियौवराज्ये पण्डितदेवविजयगणिविरचिते श्रीरामचरित्रे गद्यबन्धे हनुमदुत्पत्तिवरुणसाधनो नाम तृतीयः सर्गः ॥

# चतुर्थः सर्गः ।

इतश्च मिथिलायां नगर्यां हरिवंशे वासवकेत्वाख्यो महीपतिरासीत् । तस्य प्रिया विपुला नाम । तयोः सूनुरनूनश्रीर्बभूव भुवि विश्रुतः प्रजानां पालनाज्जनक इव जनको नाम राजाऽऽसीत् ।

इतश्चायोध्या नाम नगर्यस्ति । कीदृशी नगरी पृथ्वीतिलकायमाना, सर्वसौन्दर्यनिधाना, उज्ज्वलदेवकुलसहस्रैर्मण्डिता, परचक्रैरखण्डिता, अतुलधवलगृहैर्विभूषिता, कुरूप्यदूषिता, उत्तुंगपृथुप्राकारपरिवेष्टिता, अगाधपरिखावलयवेष्टिता, सर्वाश्चर्यनिलया, वापीकूपमण्डितपरिसरा, चतुर्दिक्षु विराजमानसरोवरा, उद्यानवाटिकाभिरामा, मनोज्ञ दृश्यमानविविधारामा, जनितदुर्जनक्षोभा, सज्जनैर्जनितशोभा, पुष्कररत्नोत्पत्तिरत्नाचला, कुलवधूकल्पलता, कनकाचला । यस्यां नगर्यां देवगृहाणि मेरुशिखरोपमानानि, धवलगृहाणि सुरविमानसमानानि, गजेन्द्रैरावणानुकारिणः । अश्वा उच्चैःश्रवोऽनुसारिणो, वृषभाः शिववाहनानुयायिनो, रथाः सूर्यरथानुपातिनः । यस्यां नगर्यां चतुरशीतिश्चतुष्पथानि यथा गान्धिक-कुत्रिकापण-सौवर्णहट्टी-दोशीहट्टी-कर्पास-धान्य-घृत-तैल-मणिकार-कान्दविक-लड्डुकारकप्रभृतीनि । इत्यादिनगरवर्णनम् ॥ यथा—

यत्राऽस्ति व्यसनी लोको दाने लुब्धो यशोऽर्जने । अकृत्य करणे भीरुरसन्तुष्टो गुणग्रहे ॥१॥

परस्वहरणे पङ्गुः परस्त्रीदर्शनेऽन्धकः । मूकश्च परदोषोक्तावशस्तु परयाचने ॥२॥

छत्रेषु दण्डश्चिकुरेषु बन्धः शारेषु मारिश्रवणं जनानाम् ।
हारेषु छिद्रत्वविलोकनानि यस्यां विवाहे करपीडितानि ॥३॥

एवं विधायामयोध्यायां श्रीऋषभस्वामिराज्यादनन्तरं भरता-दित्ययशो-महायशोऽतिबल-बलवीर्य-दण्डवीर्य-जलवीर्य-कार्तवीर्यादि ष्वसंख्येषु गतेषु केषुचिन्मोक्षं केषुचित्स्वर्गं गतेषु मुनिसुव्रतस्वामितीर्थे विजयो नाम राजा बभूव । तस्य राज्ञो हिमचूलानाम पट्टराज्ञी । तयोर्द्वौपुत्रावभूताम् । वज्रबाहुपुरन्दरनामानौ । इतश्च नागपुरेनगरे इभवाहनराजस्य चूडामणिराज्ञ्याः कुक्षौ मनोरमानाम पुत्र्यभूत् । एकस्मिन्दिने वज्रबाहुकुमारो मनोरमां परिणेतुं नागपुरे गतः । तत्र गत्वा मनोरमां परिणीय पश्चाद्वलितः श्यालेन सहोदयसुन्दरेणानुगामिना मनोरमामादाय स्वपुरीमयोध्यां प्रतस्थे । मार्गे गच्छन्वज्रबाहुकुमारः कायोत्सर्गे आतापनापरं तपस्तेजोभिरीश्वरं गुणसागरनामानं मुनिं ददर्श । दृष्ट्वा चिन्तयति–

अहो महात्मा कोप्येष धन्य एव महामुनिः । चिन्तामणिरिव मया दृष्टः पुण्येन भूयसा ॥१॥
उवाचैवमुदयसुन्दरोऽथ कुमार किम् । आदित्ससि परिव्रज्यां सोऽवदच्चित्तमस्ति मे ॥२॥
उदयो नर्मणा भूयः प्रोचे यद्यस्ति ते मनः । तदद्य मा विलम्बस्व सहायोऽहमपीह ते ॥३॥

वज्रबाहुकुमार उदयं श्यालकमेवं व्याजहार । भो मित्र ! समुद्रमिवेमां स्वां प्रतिज्ञां मात्याक्षीः । ततो वज्रबाहुकुमारो वाहनान्मोहगजाच समुत्तीर्य गुणसागरं मुनिं प्रतिययौ । भो उदय ? सज्जोभव । संयमो गृह्यते । उदयो वक्ति-भो कुमार ! मया हास्येनोक्तं, त्वया किं सत्यं ज्ञातं नर्मोक्तिव्यतिक्रमे कश्चिद्दोषो नास्ति । आवयो नर्मोक्तिरसत्या भवतु धवलगीतवत् । कुमारेणोक्तम्—

अलसायंते णविसज्जणेण जे अक्खरा समुल्लविआ। ते पत्थरटंकुक्किरिअव्व न हु अण्णहा हुंति ॥१॥

अहं तु दीक्षामादास्ये त्वं मम मनोरथान्मामांक्षीः। एते दश पुरुषा धर्मं न जानन्ति। यतः—

दश धर्मं न जानन्ति धृतराष्ट्रनिबोधनात्। मत्तः प्रमत्त उन्मत्तः क्रुद्धः श्रान्तो बुभुक्षितः ॥१॥

त्वरमाणश्च रक्तश्च लुब्धः कामी च ते दश।

त्वं तु धर्मजानतः सज्जो भव धर्मविघ्नं मा कार्षीः। उदयश्यालकेनोक्तम्—भो कुमार! तव हस्तादिदमद्यापि मांगल्यकंकणमपि न छुटितमस्ति अतो विवाहफलं भुंक्ष्व। तथेमां मनोरमां मद्भगिनीं नवोढां सांसारिकसुखास्वादात्कथं वञ्चयसि, तृणवत्कथं त्यजसि, अनुरक्तामविरक्तामेनामात्याक्षीः। तावता वज्रबाहुकुमारेणोक्तम्—हे मित्र! एषा तव स्वसा भर्तुरनुगामिनी भवतु चेन्न तर्हि पितृगृहे यातु परमस्माकं भोगैरलमतस्त्वं मां व्रतायानुमन्यस्व। त्वमपि क्षत्रियत्वात्स्वां प्रतिज्ञां पालय। यथा—

सकृदपि यत्प्रतिपन्नं तत्कथमपि न त्यजन्ति सत्पुरुषाः। नेन्दुस्त्यजति कलंकं नोज्झति वडवानलं सिन्धुः॥

एवमुदयं श्यालकं प्रतिबोध्य वज्रबाहुकुमारो मनोरमाराज्ञीपञ्चविंशतिकुमारसहितो गुणसागरमुनिपादान्ते प्रवव्राज। ततो विजयराजो वज्रबाहुं कुमारं सपरिकरं प्रव्रजितं श्रुत्वा मनसि चिन्तयति, धन्य एष बालो वज्रबाहुर्येन बालेनापि दीक्षा गृहीता। एवं भावनां भावयित्वा पुरन्दरंपुत्रं राज्ये न्यस्य निर्वाणमोहमुनिपार्श्वे व्रतमुपाददे। पुरन्दरोऽपि राजा कतिचिद्वर्षाणि राज्यं भुक्त्वा राज्ये पृथ्वीराज्ञ्याः कुक्षिजं निजपुत्रं कीर्तिधरं संस्थाप्य क्षेमंकरमुनिसमीपे दीक्षां जग्राह। अथ कीर्तिधरो राजा सह देव्या पत्न्या सममिन्द्र इन्द्राण्येव वैषयिकं सुखं भुंक्त्वा वैराग्यवान् प्रव्रजितुकामो मन्त्रिणमपृच्छत्। भो मन्त्रिन्! अहं दीक्षामादास्ये। मन्त्रिणो-

क्तम्–हे राजन् ! तवानुत्पन्नपुत्रस्य व्रतादानं नार्हति । अतः स्वामिन् ! अनुत्पन्ने पुत्रे राज्यं याति । गते राज्ये निर्नाथा वसुंधरा पीड्यते । ततः स्वामिन् ! यावत्पुत्रो न भवति तावत्प्रतीक्षस्व । इति कथयित्वा गृहे स्थापितः क्रमेण सहदेव्या राज्याः सुकोसलनामा पुत्रो जातः । राज्ञा व्रतभिया गोपितः । तं गुप्तमपि बालकं कीर्तिधरमेदिनीनाथो विवेद । यतः–प्राप्तोदयं तरणिं गोपयितुं कः समर्थो भवेत् । ततो राज्या बालं सुकोसलं राज्ये न्यस्य व्रतमुपाददे । स कीर्तिधरो मुनिरेकादशाङ्गान्यधीत्य श्रुतपारगो गुर्वनुज्ञात एकाकित्वे विहरमाणः पृथिव्यां विहरति स्म। सुकोसलः क्रमेण राज्यं पालयमानो ववृधे । यौवनं प्राप्तः । सहदेव्या राज्या पाणिग्रहणं कारापितो देव इव देव्या समं रेमे । एकस्मिन्दिने कीर्तिधरो मुनिर्मासोपवासपारणके भिक्षार्थमयोध्यायां भ्रमन्सुकोसलगृहासन्न आजगाम । तस्मिन्समये सौधाग्रस्थया सहदेव्या पत्न्या पतिं कीर्तिधरमुनिं दृष्ट्वा चिन्तितम् । अहो ! अनेन प्रव्रजता पूर्वं पतिहीनाऽभवम् , साम्प्रतं सुकोसलोऽप्येनं दृष्ट्वा प्रव्रजिष्यति तदाहं निर्वीरा स्यामत एनं निरपराधं व्रतस्थितं भर्तारमपि नगरात्सेवकेन निर्वासयामि पुत्रराज्यचिकीर्षयेति चिन्तयित्वा तथाऽकरोत् । अहो ! संसारे लोभाभिभूतो जनः किं किं न करोति । यतः–

यद्दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरम्, गाहन्ते गहनं समुद्रमतनुक्लेशां कृषिं कुर्वते।
सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसंचरं, सर्पन्ति प्रधनं धनाऽन्धितधियस्तल्लोभविस्फूर्जितम् ॥१॥
यौवनं जरया ग्रस्तं शरीरं व्याधिपीडितम्। मृत्युराकांक्षते प्राणान्तृष्णैकानिरुपद्रवा ॥२॥

लोभाभिभूतया विवेकरहितया सहदेव्या सुकोसलमात्रा निर्वासितो मुनिः सुकोसलधात्र्या दृष्टः । दृष्ट्वा च रुदितम्। सुकोसलेन च पृष्टम् । भो मातः ! किं रोदिषि ? धात्र्योक्तम्–पुत्र ! तव पिता कीर्तिधरमुनिर्मासोपवासान्ते भिक्षार्थमत्रागतस्तव मात्रा सह-

देव्या नगरान्निर्वासितोऽनेन दुःखेन रोदिमि। सुकोसलस्तच्छ्रुत्वा पितुः पादौ नत्वा बद्धाञ्जलिर्विरक्तात्मा व्रतमयाचत। तस्मिन्समये सुकोसलपत्नी चित्रमाला गर्भवती मन्त्रिभिः सह परिवृता सुकोसलं स्वामिनमेवमुवाच। भो स्वामिन्! अस्वामिकं राज्यं त्यक्त्वा दीक्षां गृहीतुं नार्हसि। अस्माकं निर्नाथानां का गतिः यतः—

दुर्बलानामनाथानां बालवृद्धतपस्विनाम्। अन्यायैः परिभूतानां सर्वेषां पार्थिवो गतिः ॥१॥

सुकोसलेनोक्तम्—हे सुन्दरि! तव गर्भस्थोऽपि मम पुत्रो मया राज्ये स्थापितो भाविनि भूतोपचारादिति न्यायात्। गर्भस्थोऽप्येष तत्र राजा भवतु। इत्युक्त्वा सकलं लोकं सम्भाष्य पितुः समीपे सुकोसलः प्रवव्राज। दुस्तपं तपस्तेपे। यथा—

निर्ममौ निष्कषायौ तौ पितापुत्रौ महामुनी। विजहतुर्युतावेव पावयन्तौ महीतलम् ॥१॥

तनयस्य वियोगेन खेदभाक्सहदेव्यपि। आर्तध्यानपरा मृत्वा व्याघ्रयभूद्गिरिगह्वरे ॥२॥

यतः—अट्टेणय तिरियगइ रुद्दज्झाणेण गमइ नरयम्मि। धम्मेण देवलोए सिद्धिगई सुक्कज्झाणेणं ॥३॥

इतश्च तौ कीर्तिधरसुकोसलमहामुनी पितापुत्रौ चतुर्मासककरणार्थमेकस्य गिरे गुहायां तस्थतुः। कथंभूतौ, निःस्पृहौ, स्वशरीरेऽपि निर्ममौ, स्वाध्यायतत्परौ, ध्यानपरायणौ। चतुर्मासादनन्तरं कार्तिके मासि पारणाय तौ प्रयातौ। मार्गे तया व्याघ्रया यमभगिन्या तौ दृष्टौ। सा दुष्टा स्फारिताननां शीघ्रं तावभिदधाव। साधू अपि तां व्याघ्रीमापतन्तीं दृष्ट्वा धर्मध्यानं प्रपेदानौ कायोत्सर्गेण तस्थतुः। यतः—

प्राणान्तेऽपि न भङ्क्तव्यं गुरुसाक्षिकृतं व्रतम्। व्रतभंगो हि दुःखाय प्राणा जन्मनि जन्मनि ॥१॥

क्तम्-हे राजन्! तवानुत्पन्नपुत्रस्य व्रतादानं नार्हति। अतः स्वामिन्! अनुत्पन्ने पुत्रे राज्यं याति। गते राज्ये निर्नाथा वसुंधरा पीड्यते। ततः स्वामिन्! यावत्पुत्रो न भवति तावत्प्रतीक्षस्व। इति कथयित्वा गृहे स्थापितः क्रमेण सहदेव्या राज्याः सुकोसलनामा पुत्रो जातः। राज्ञा व्रतभिया गोपितः। तं गुप्तमपि बालकं कीर्तिधरमेदिनीनाथो विवेद। यतः-प्राप्तोदयं तरणिं गोपयितुं कः समर्थो भवेत्। ततो राज्या बालं सुकोसलं राज्ये न्यस्य व्रतमुपाददे। स कीर्तिधरो मुनिरेकादशाङ्गान्यधीत्य श्रुतपारगो गुर्वनुज्ञात एकाकित्वे विहरमाणः पृथिव्यां विहरति स्म। सुकोसलः क्रमेण राज्यं पालयमानो ववृधे। यौवनं प्राप्तः। सहदेव्या राज्या पाणिग्रहणं कारापितो देव इव देव्या समं रेमे। एकस्मिन्दिने कीर्तिधरो मुनिर्मासोपवासपारणके भिक्षार्थमयोध्यायां भ्रमन्सुकोसलगृहासन्न आजगाम। तस्मिन्समये सौधाग्रस्थया सहदेव्या पत्न्या पतिं कीर्तिधरमुनिं दृष्ट्वा चिन्तितम्। अहो! अनेन प्रव्रजता पूर्वं पतिहीनाऽभवम्, साम्प्रतं सुकोसलोऽप्येनं दृष्ट्वा प्रव्रजिष्यति तदाहं निर्वीरा स्यामत एनं निरपराधं व्रतस्थितं भर्तारमपि नगरात्सेवकेन निर्वासयामि पुत्रराज्यचिकीर्षयेति चिन्तयित्वा तथाऽकरोत्। अहो! संसारे लोभाभिभूतो जनः किं किं न करोति। यतः-

यद्दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरम्, गाहन्ते गहनं समुद्रमतनुक्लेशां कृषिं कुर्वते।
सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसंचरं, सर्पन्ति प्रधनं धनाऽन्धितधियस्तल्लोभविस्फूर्जितम् ॥१॥
यौवनं जरया ग्रस्तं शरीरं व्याधिपीडितम्। मृत्युराकांक्षते प्राणान्तृष्णैकानिरुपद्रवा ॥२॥

लोभाभिभूतया विवेकरहितया सहदेव्या सुकोसलमात्रा निर्वासितो मुनिः सुकोसलधात्र्या दृष्टः। दृष्ट्वा च रुदितम्। सुकोसलेन च पृष्टम्। भो मातः! किं रोदिषि? धात्र्योक्तम्-पुत्र! तव पिता कीर्तिधरमुनिर्मासोपवासान्ते भिक्षार्थमत्रागतस्तव मात्रा सह-

देव्या नगरान्निर्वासितोऽनेन दुःखेन रोदिमि । सुकोसलस्तच्छ्रुत्वा पितुः पादौ नत्वा बद्धाञ्जलिर्विरक्तात्मा व्रतमयाचत । तस्मिन्समये सुकोसलपत्नी चित्रमाला गर्भवती मन्त्रिभिः सह परिवृता सुकोसलं स्वामिनमेवमुवाच । भो स्वामिन् ! अस्वामिकं राज्यं त्यक्त्वा दीक्षां गृहीतुं नार्हसि । अस्माकं निर्नाथानां का गतिः यतः–

दुर्बलानामनाथानां बालवृद्धतपस्विनाम् । अन्यायैः परिभूतानां सर्वेषां पार्थिवो गतिः ॥१॥

सुकोसलेनोक्तम्–हे सुन्दरि ! तव गर्भस्थोऽपि मम पुत्रो मया राज्ये स्थापितो भाविनि भूतोपचारादिति न्यायात् । गर्भस्थोऽप्येष तव राजा भवतु । इत्युक्त्वा सकलं लोकं सम्भाष्य पितुः समीपे सुकोसलः प्रवव्राज । दुस्तपं तपस्तेपे । यथा—

निर्ममौ निष्कषायौ तौ पितापुत्रौ महामुनी । विजहतुर्युतावेव पावयन्तौ महीतलम् ॥१॥

तनयस्य वियोगेन खेदभाक्सहदेव्यपि । आर्तध्यानपरा मृत्वा व्याघ्र्यभूद्गिरिगह्वरे ॥२॥

यतः–अट्टेणय तिरियगइ रुद्दज्झाणेण गमइ नरयम्मि । धम्मेण देवलोए सिद्धिगई सुक्कज्झाणेणं ॥३॥

इतश्च तौ कीर्तिधरसुकोसलमहामुनी पितापुत्रौ चतुर्मासककरणार्थमेकस्य गिरे गुहायां तस्थतुः । कथंभूतौ, निःस्पृहौ, स्वशरीरेऽपि निर्ममौ, स्वाध्यायतत्परौ, ध्यानपरायणौ । चतुर्मासादनन्तरं कार्तिके मासि पारणाय तौ प्रयातौ । मार्गे तया व्याघ्र्या यमभगिन्या तौ दृष्टौ । सा दुष्टा स्फारिताननना शीघ्रं तावभिदधाव । साधू अपि तां व्याघ्रीमापतन्तीं दृष्ट्वा धर्मध्यानं प्रपेदानौ कायोत्सर्गेण तस्थतुः । यतः—

प्राणान्तेऽपि न भङ्क्तव्यं गुरुसाक्षिकृतं व्रतम् । व्रतभंगो हि दुःखाय प्राणा जन्मनि जन्मनि ॥१॥

सा व्याघ्री तौ मुनीं दृष्ट्वा धाविता सुकोसलमुनिं पादप्रहारेण पृथिव्यामपातयत् । पातयित्वा भक्षयति । यथाः—

चटचटिति तच्चर्म, दारं दारं नखाङ्कुशैः । पापा साऽपादतृप्तास्रं, चारीव मरुपान्थिका ॥१॥

त्रोटयित्वा त्रोटयित्वा, त्रटत्रटिति सा रदैः । जग्रसे मांसमपि हि, चालुंकमिव रंकिका ॥२॥

दन्तयन्त्रातिथीचक्रे, कर्कशाकीकसान्यपि । कटत्कटिति कुर्वन्ती, सेक्षूनिव मतङ्गजी ॥३॥

सुकोसलोऽपि मुनिश्चिन्तयति । एषा व्याघ्री मम कर्मक्षयसहायिका शरीरक्षयकारिका, नतु जीवक्षयकारिका । अतो मनागपि न मन्ले । स्ववशेन सहनं लाभाय भवति । यथा—

सहकलेवरखेदमचिन्तय, स्ववशता हि पुनस्तव दुर्लभा ।
परवशे तु सहिष्यसि जीव ! हे, परवशे न च तत्र गुणोऽस्ति ते ॥१॥

व्याघ्र्यैवं खाद्यमानः शुक्लध्यानेन तत्क्षणोत्पन्नकेवलो मुनिः सुकोसलो मोक्षं ययौ । व्याघ्र्यपि सुकोसलं खादयन्ती यावता मुखं तावता मुखे सुवर्णरेखां दृष्ट्वा जातिस्मृत्या पुत्रं ज्ञात्वाऽऽत्मानं निन्दति । यथा–अहो मया पापिन्या किं कृतं, पुत्रमांसं भक्षितं, धिग्धिग्माम् देवदूषितां, पुत्रमारिकामथ मे किं भविष्यतीत्यादि चिन्तयन्ती भूमौ शिरः स्फालयन्ती कीर्तिधरेण मुनिना बोधिताऽनशनं च कारिता देवलोकं जगौ । कीर्तिधरोऽपि मुनिः समुत्पादितकेवलः सुखाद्वैतास्पदं क्रमादासादयामास ।

॥ इति सुकोसलमहामुनिकथानकं समाप्तम् ॥

इतश्च सुकोसलनृपप्रिया चित्रमाला कुलनन्दनं नन्दनं हिरण्यगर्भं सुषुवे । महामहेन जातमात्रो राज्ये स्थापितः । क्रमेण

सम्प्राप्तयौवनो मृगावतीप्रभृतिबहुराजकन्याः परिणायितः। ताभिः सह सुखं रेमे। हिरण्यगर्भराजस्य मृगावत्या पट्टराज्या नघुषो नाम नन्दनोऽभूत्। एकस्मिन्दिने मृगावत्या राज्या हिरण्यगर्भराजस्य मस्तकं विलोकयन्त्या राज्ञो मस्तके पलितं दृष्टम्, राज्ञो दर्शितम्। राजा चिन्तयति, धिग्माम् जराग्रस्तमेतावन्ति दिनानि मया किमपि सुकृतं न कृतम्। अथ किं करिष्ये जराग्रस्तः किमपि कर्तुं न शक्नोमीति ध्यायन्तं राजानं राज्यूचे। यथा—

अलंकरोति हि जरा राजामात्यभिषग्गुरून्। विडम्बयति पण्यस्त्रीमल्लगायनसेवकान्॥१॥

अतो दुःखं मा विधेहि राज्ञो जरा मण्डनं करोति। राज्ञोक्तमलं राज्येन, अलं भोगेन तदैव नघुषं सुतं स्वस्मिन् राज्ये न्यस्य निमलमुनिपादान्ते व्रतं लात्वा संयमं प्रपाल्य शिवमगमत्। नघुषस्य राज्ञः सिंहिकानाम पत्न्यभूत्। तया सह रममाणः पैतृकं राज्यमन्वशात्। अथान्यदा नघुषो राट् सिंहिकादेवीं स्वस्मिन्राज्ये स्थाप्योत्तरापथभूपालाञ्जेतुं जगाम। तदा दक्षिणापथभूभुज आगत्यायोध्यां रुरुधुः। यतः-छलनिष्ठा हि वैरिणः। सिंहिकाऽपि सज्जीभूय दक्षिणापथभूभुजः सिंहीद्विपानिव वित्रासयामास।

अन्यदा राजा नघुष उत्तरापथराजान् जित्वाऽऽगतः पत्न्या जयोदन्तं श्रुत्वेदं दध्यौ। ईदृशं धाष्टर्यं महिलानां महाकुलप्रसूतानां न युज्यते तदेषाऽसतीति कृत्वा राजा सिंहिकां परिजहार। नघुषस्यान्यदा दाहज्वरसमुदपद्यत। परमुपचारशतैरपि न शशाम। तदा सिंहिकापट्टराज्या राज्ञोऽग्रे सतीत्वश्रावणं कृतम्। यथा हे नाथ! मयाऽन्यो मनस्यपि न ध्यातो भवति तदा ते ज्वरो यातु। इति कथयित्वा पाथदम्भसा निजं पतिं सिषेच तदैव राजा सुधाधौत इव ज्वरान्मुक्तः। सिंहिकाया उपरि देवाः पुष्पवृष्टिं व्यधुः। शीलं सर्वत्र कामधुक्। यतः—

व्याघ्रव्यालजलानलादिविपदस्तेषां व्रजंति क्षयं, कल्याणानि समुल्लसन्ति विबुधाः सान्निध्यमध्यासते।
कीर्तिः स्फुर्तिमियर्ति यात्युपचयं धर्मः प्रणश्यत्यघं, स्वर्निर्वाणसुखानि सन्निदधते ये शीलमाबिभ्रते ॥१॥

तद् दृष्ट्वा राजा सिंहिकां बहु मेने। पूर्ववद् राज्ञा सह सुखमनुबभूव। नघुषस्य राज्ञः सिंहिकापत्न्यां सुखमनुभवतः कालेन सोदासो नाम नन्दनोऽभवत्। नघुषराद् सोदासे राज्यमारोप्य दीक्षामुपाददे। सोदासे राज्यं कुर्वाणेऽष्टाह्निकोत्सवे मन्त्रिणोऽमारिमुद्घोषयामासुः पूर्वराज्यवत्। ते सोदासमपि प्रोचुः। अर्हदष्टाह्निकोत्सवे त्वत्पूर्वैर्मांसं नाखाद्यतस्त्वमपि मा स्म खादीः। सोदासेन मन्त्रिवचः प्रतिपन्नम्। मन्त्रिणः स्वस्थानं जग्मुः। सोदासोऽपि सूपकारमवदत्। भो सूपकार! त्वयाऽतःपरं मम कार्येऽवश्यं प्रच्छन्नं मांसमानेतव्यम्। सूदो व्यचिन्तयत्। किं करोम्यमार्यामुद्घुष्टायां मांसं कथं लभ्यते। इति चिन्ताप्रपन्नस्य तस्य बुद्धिरुत्पन्ना, श्मशाने गत्वा मृतार्भकमादाय तस्य मांसं संस्कृत्य सोदासाय ददौ। सोऽपि तन्मांसं भुक्त्वा भुक्त्वैवमवर्णयत्। यथा—अहो! अमुष्य मांसस्य कोऽप्यतिप्रीणको रसः। राजा सूपकारं पप्रच्छ। भो सूपकार! सत्यमाख्याहि कस्येदं मांसं सूपकारेण यथातथोक्ते राजा प्रत्यहं नृमांसं याचते। सूदोऽपि लोकडिम्भान्हत्वा संस्कृत्य राज्ञो ददाति। लोके कोलाहलो जातस्तत्स्वरूपं मन्त्रिणा ज्ञातम्। मन्त्रिणाऽपि सोदासं पापिनं ज्ञात्वाऽरण्यानीमत्यजत् गृहोत्पन्नमुरगमिव। धिग्व्यसनानि। यतः—

मांसास्वादनलुब्धस्य, देहिनं देहिनं प्रति। हन्तुं प्रवर्तते बुद्धिः, शाकिन्या इव दुर्धियः ॥१॥

द्यूताद्राज्यविनाशनं नलनृपो प्राप्तोऽथवा पाण्डवाः, मद्यात्कृष्णहरिः स राघवपिता पापर्द्धितो दूषितः।
मांसाच्छ्रेणिकभूपतिश्च नरके चौर्यान्मृतः खर्परो, वेश्यायां निधनं गतो वररुचिः स्त्रीभावतो रावणः ॥१॥

तैर्मन्त्रिभिः सोदासपुत्रः सिंहरथो राज्ये स्थापितः । सोदासोऽटव्यां मुक्तो निरर्गलो मांसं खादन्दक्षिणापथे गतः । तत्र तस्य भ्रमतः कश्चिन्मुनिरेको मिलितः । तत्समीपे धर्ममपृच्छत् । मुनिनाऽपि योग्यं ज्ञात्वा आर्हतो धर्मो मद्यमांसपरिहारप्रधान उपदिष्टः । तं धर्मं श्रुत्वा भवाद्भीतः प्रसन्नहृदयः श्रावको भूत्वा धर्ममपालयत् । महापुरे गतस्तत्राऽपुत्रो राजा मृतः । पञ्चदिव्यानि प्रकटितानि । यथा गजा (१) श्व (२) कलश (३) च्छत्र (४) चामराणि (५) । यत्र सोदासस्तत्र सपरिकरितेन गजेनाऽऽगतम् । शौण्डाग्रस्थकलशेनाभिषिच्य गर्जितम्, अश्वेन हेषितम् , छत्रेण विकसितम् , चामरेण वीजितम् सोदासस्य राज्यं जातम् । महापुरे नगरे सोदासो राजा राज्यं करोति स्म । सोदासः सिंहरथे पुत्रे दूतं प्राहिणोत् । भो सिंहरथ! सोदासस्याज्ञां मन्यस्वेति दूतोऽपि तं जगाद ।

दूतः सिंहरथेनोच्चैस्तिरस्कृत्य व्यसृज्यत । आगत्याख्यच्च सोदासभूभुजे स यथातथम् ॥१॥

अथ सोदासः तमभ्यषेणयत् सिंहरथोऽपि सोदासम् । मिथः तौ युयुधाते । सिंहरथं जित्वा वक्षसि पुत्रं चालिंग्य तस्मै राज्यद्वयं दत्त्वा स्वयं प्रवव्राज । इति सोदासकथा ।

सोदासपुत्रः सिंहरथस्तत्पुत्रो ब्रह्मरथस्तत्पुत्रश्चतुर्मुखस्तत्पुत्रो हेमरथस्तत्पुत्रः शतरथस्तत्पुत्र उदयस्तत्पुत्रो वारिरथस्तत्पुत्र इन्दुरयस्तत्पुत्र आदित्यरथस्तत्पुत्रो मान्धाता तत्पुत्रो वीरसेनस्तत्पुत्रः प्रतिमन्युनृपस्तत्पुत्रः प्रतिबन्धुनृपस्तत्पुत्रो रविमन्युनृपस्तत्पुत्रो वसन्ततिलको नृपस्तत्पुत्रः कुबेरदत्तो नृपस्तत्पुत्रः कुन्थु नृपस्तत्पुत्रः शरभो नृपस्तत्पुत्रो द्विरदो नृपस्तत्पुत्रो सिंहदशनस्तत्पुत्रो हिरण्यकशिपुस्तत्पुत्रः पुञ्जस्थलस्तत्पुत्रः ककुत्स्थस्तत्पुत्रो रघुनृपः । तेषु केषुचिन्मोक्षं प्राप्तेषु केषुचित्स्वर्गं प्राप्तेषु रघुपुत्रोऽनरण्योऽभूत् प्रणयीनामानृण्यकृत् साकेतपुरे नगरेऽयोध्याऽपरपर्याये ।

तस्याभूतामुभौ पुत्रौ, पृथ्वीदेव्याश्च कुक्षिजौ । एकोऽनन्तरथो नाम्ना, तथा दशरथो परः ॥१॥

तस्यानरण्यस्य मित्रं सहस्रकिरणो यो रावणेन जितो वैराग्याद्व्रतं भेजे । तत्सख्यादनरण्योऽपि वृद्धपुत्रानन्तरथसहितो मास जाते लघुपुत्रे दशरथे राज्यं न्यस्य व्रतमाददे । निर्मलं संयमं प्रपाल्यानरण्यराजर्षिर्मोक्षमगमत् । अनन्तरथो मुनिस्तपस्तप्यमानो वसुंधरां निजहार । बाल्येऽपि राजा दशरथो वयसा विक्रमेणाऽपि क्रमाद्वृद्धिमासादयत् । दशरथेन राज्यं शुशुभे । यथा रजनी चन्द्रेण, नभः सूर्येण, प्रासादो देवेन, पुष्पं भ्रमरेण, युवतिर्यौवनेन, वल्ली कुसुमेन, कुलं पुरुषेण, मुखं ताम्बुलेन, राजा छत्रेण, नगरं दुर्गेण, काननं कल्पवृक्षेण, योगी ध्यानेन, धनी दानेन, राजा राज्येन, राज्यं गजेन तथा दशरथेन राज्यं शुशुभे । दशरथे राज्यं कुर्वाणे स्वचक्रपरचक्रादिभयमदृष्टपूर्वमेवासीत् खपुष्पवत् । तस्य राज्ञो दानं ददतो राज्यं पालयतो लोकस्थितिं कुर्वतो दिनानि यान्ति । यथा—

करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणमनं, मुखे सत्या वाणी विजयिभुजयोर्वीर्यमतुलम् ।
हृदि स्वच्छा वृत्तिः श्रुतमधिगतं च श्रवणयोर्विनाऽप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥१॥

दाक्षिण्यं सुजने दया परजने शाठ्यं जने दुर्जने, प्रीतिः साधुजने स्मयः खलजने विद्वज्जनेष्वार्जवम् ।
शौर्यं शत्रुजने क्षमा गुरुजने नारीजने धूर्तता, यश्चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥२॥

दशरथः साम्राज्यमिव निजवंशक्रमायातं श्राद्धधर्ममर्हत्प्रणीतं दधौ । इतश्च दर्भस्थलपुरेशराजस्य सुकोशलस्यामृतप्रभाकुक्षिजामपराजितां पुत्रीं लावण्यशालिनीं चारुलोचनां दशरथ उदवाहयत् संग्रामे जयश्रियमिव । अथ कमलसंकुले पुरे सुबन्धुतिलकस्य

राज्ञो मित्राकुक्षिजां केकयीं सुमित्रेत्यपरनाम्नीं द्वितीयां पत्नीं दशरथ उपयेमे। सुप्रभाभिधामन्यामपि राजपुत्रीमुपयेमे। ताभिः समं दशरथो वैषयिकं सुखं बुभुजे धर्मार्थकाममोक्षाणामबाधया। इतश्च दशकन्धरो भरतार्धं भुञ्जानः सभायामास्थितो नैमित्तिकोत्तममपृच्छत्। भो नैमित्तिकोत्तम! शृणु–अमरा अपि मृत्युमाप्नुवन्त्यतः सर्वसाधारणो मृत्युः, संसारेऽतः परं भयं नास्ति। यतः—

पन्थसमा नत्थि जरा दारिद्दसमो परिभवो नत्थि। मरणसमं नत्थि भयं खुहा समा वेअणा नत्थि ॥१॥

अतः पृच्छ्यते मम मृत्युः स्वतो वा परतो वा भविष्यतीति ज्ञानेन ज्ञात्वा याथातथ्यं ममाख्याहि। नैमित्तिकोऽप्याचख्यौ-भो रावणराजेन्द्र! जनकपुत्र्याः कारणेन दशरथपुत्राद्भविष्यति मृत्युः। तावता विभीषणो बभाषे, भो बान्धव! चिन्तां मा विधेहि, अहं जनकं दशरथं च हनिष्यामि। यथा—

उत्पत्तिरेव हि तयोर्निषिद्धा बीजनाशतः। वचो नैमित्तिकस्यातो मिथ्यैव हि भविष्यति ॥१॥

ओमित्युक्तो रावणेन स्ववेश्मागाद्विभीषणः। तत्रस्थो नारदस्तच्छ्रुत्वा दशरथं ययौ। दशरथो देवमुनिं दृष्ट्वाऽभ्युत्तस्थौ। नमस्कारं कृत्वाऽऽसने निमन्त्र्य पृच्छति स्म, भो देवर्षे! त्वं कुतः स्थानात्समागत इति पृष्टो नारदो जगौ, भो दशरथ! पूर्वविदेहेषु पुण्डरीकिणीनगरीं गतस्तत्र सुरासुरै विंहितं श्रीसिमन्धरनाथस्य निष्क्रमणोत्सवं दृष्ट्वा मेरुपर्वतं गतस्तत्र तीर्थंशाश्वत्या लङ्कायामहं गतवान्। तत्र शान्तिजिनं नत्वा रावणालयं गतः। रावणेन नैमित्तिकः पृष्टो मम मृत्युः कुतो भविष्यति? नैमित्तिकेनोक्तम्–जनकपुत्रीनिमित्तेन दशरथपुत्राद्भविष्यति। तद्वचो विभीषणः श्रुत्वा त्वां जनकं च हन्तुं साम्प्रतं समेष्यति। एतत्सर्वं दृष्टं, कर्णाभ्यां श्रुतं, श्रुत्वा साधर्मिकत्वात्प्रीत्या तव कथयितुं समागतोऽस्मि। तच्छ्रुत्वा राज्ञाऽभ्यर्च्य विसृष्टो नारदो गत्वा जनकाय तथैव कथया-

माग। कथयित्वा नारदोऽन्यत्र गतः। इदं दशरथेन राज्ञा तत्स्वरूपं मन्त्रिणे प्रोक्तम्। मन्त्रिणो दाशरथिं मूर्तिं लेप्यमयीं कृत्वा ध्वान्ते मुक्त्वा सेवन्ते स्म विद्विषन्मोहहेतवे। एवं कृत्वा मन्त्रिणे राज्यं समर्प्य स्वयं कालवञ्चनां कर्तुं नगरान्निर्ययौ। तथैव जनकोऽप्यकरोत्। कालक्षेपं कर्तुं द्वावपि देशान्तरं ययौ। यतः—

अशुभस्य कालहरणं कालेन क्षीयते शुभम्। चिन्तां मा वहसि तात कालः कालो भविष्यति ॥१॥

अग्निना पच्यते धान्यं फलं कालेन पच्यते। वयसा पच्यते देहः पापी पापेन पच्यते ॥२॥

इति ज्ञात्वा देशान्तरं भ्रेमतुः। इतश्च विभीषणो दशरथगृहे समागतो मन्त्रिणमपृच्छत्, कुत्राऽस्ति दशरथः, मन्त्रिणा दर्शितो लेप्यमयो दशरथो ध्वान्ते स्थितः। क्रोधान्धेन विभीषणेन खड्गेन हत्वा निपातितः। तद् दृष्ट्वा मन्त्रिणा कलकलश्चक्रे। नगरेऽन्तःपुरे देशे ग्रामे चाक्रन्दध्वनिरुत्तस्थौ। मन्त्रिणो दशरथस्य राज्ञो मृतकार्याणि कृत्वा देशरक्षार्थं सन्नद्धबद्धा बभ्रमुः। यतो गूढमन्त्रा मन्त्रिणो भवन्ति। दशरथं हत्वा जनकं मिथिलेश्वरमकिञ्चित्करं ज्ञात्वा विभीषणः स्वस्थानं गतः। गत्वा रावणाय निवेद्य दशमुखं स्वस्थं विधाय विभीषणः सुखमनुभवन्नास्ते। इतश्च तौ जनकदशरथौ उत्तरापथे भ्राम्यन्तौ कौतुकमंगलपुरे नगरे शुभमते राज्ञः पृथ्वीराज्ञीकुक्षिजातायाः द्रोणमेघसोदरायाः कैकेय्या नाम्न्या दुहितुः स्वयंवरमाकर्ण्य तन्मण्डपमुपेयतुः। तत्र मण्डपे सा कन्या वस्त्रालंकारविभूषिता सखीपरिवृता लक्ष्मीरिवाऽभ्यागात्। सा कैकेयी स्वयंवरमण्डपे सर्वान्नृपान्नमस्कुर्वन्ती सख्यादत्तहस्ता सर्वान्नृपान्विलोकयन्ती हरिवाहनप्रमुखान्नृपान्परित्यजन्ती दशरथं प्राप्य कण्ठे वरमालामक्षिपत् निजां भुजलतामिव। दशरथं कैकेय्या वृतं दृष्ट्वाऽन्ये राजानो मानिनो जज्वलुः। प्रोचुश्च अहो! अनया कैकेय्या वराकया नृपान्मुक्त्वाऽज्ञानादेकाकी कार्पटिको वृतः। अत

आच्छिद्य कन्यारत्नमन्येषां दास्यते वलात् । एवं विमृश्य सर्वे राजानः स्वबलगर्विताः संवर्मयामासुः । कैकेयीपिता शुभमतिर्दशरथपक्षे सोत्साहश्चतुरङ्गया सेनया सज्जितो युद्धाय सज्जोऽभूत् । दशरथेन कैकेय्यभाणि, भो प्रिये ! त्वं सारथित्वं कुरु, यथैकोऽप्यहमनेकान् द्विषो हन्मि, कैकेय्या प्रोक्तम्–देव ! सज्जो भव, अहं सारथित्वं करिष्य इत्युक्त्वा कैकयी द्वासप्तति कलाकुशला रश्मिमादाय महारथेऽध्यारुरोह । दशरथोऽपि षट्त्रिंशद्दण्डायुधानि सज्जीकृत्य रथेऽध्यारुरोह । आयुधनामानि यथा–तरवारि–त्रिशूल–नाराच–कौशल–कृपाण–चक्र–कुन्त–शल्य–गाण्डीव–सुहा–पट्टी–मुसण्टी–गदा–मुशल–लकुट–मुद्गर–छुरिका–शस्त्री–कस–अर्धचन्द्र–करपत्र–बाण–यष्टि–असिपत्र–क्षुरप्रमुखी–अर्धमुखी–भिन्दमाल–तोमर–भल्ली–लाङ्गल–पाश–परशु–क्षुरप्र–विस्फोट–वज्र–शक्ति–शूल–भल्ल–सेल्लप्रभृतीनि शस्त्राणि । तैः सम्भृतं रथं दशरथोऽध्यारोहत् । कथंभूतो धन्वी निषङ्गी सन्नाही सर्वशस्त्रविशारदः । कैकेय्याऽधिष्ठितं रथं दशरथोऽध्यारोहत् । शुभमतिना राज्ञा परिवृतो दशरथो राजा युद्धाय ढुढौके । तेऽपि हरिवाहनप्रमुखा नरेन्द्रा दशरथेन सह युयुधिरे । यथा—

शीघ्रवेधी दशरथोऽप्येकैकमपि तान् रथान् । अखण्डयदखण्डौजा आखण्डल इवापरः ॥१॥

इत्थं विद्रावयामास सर्वानपि स भूपतीन् । उपयेमे च कैकेयीं जगतीमिव जंगमाम् ॥२॥

उवाच च नवोढां तां राजा दशरथो रथी । वरं याचस्व देवि त्वत्सारथ्येनाऽस्मि रञ्जितः ॥३॥

कैकेय्या प्रोक्तम्–स्वामिन् ! वरं याचिष्ये, साम्प्रतं न्यासीभवतु । तद्वचो राज्ञा प्रतिपन्नम् । ततो राजा दशरथोऽसंख्यपरिवारपरिवृतः कैकेय्या राज्या समं राजगृहं ययौ । जनकोऽप्यात्मीयां नगरीं जगाम । यतो राजानः समयज्ञा धीमन्तो यथा तथा न तिष्ठ-

न्ति । राजा दशरथो मगधेश्वरं जित्वाऽयोध्यातोऽन्तःपुरं समानाय्य राजगृहमतिष्ठत् । राजानो यत्रैव तिष्ठन्ति तत्रैव राज्यम् । दशरथो राजा राज्ञीभी रममाणोऽस्थात् । विशेषतोऽपराजिता देव्या पट्टराज्ञ्या समं वैषयिकं सुखं भेजे । एकस्मिन्दिने कश्चिद्देवो महर्धिकोऽपराजिताकुक्षावयावतरत् । तस्मिन्समयेऽपराजिता राज्ञी निशाशेषे चतुरो महास्वप्नानद्राक्षीत् । दृष्ट्वा जागरिता । राज्ञे दशरथाय शशंस । दशरथोऽपि स्वबुद्ध्या स्वप्नविचारं विचार्यापराजितां प्रोवाच । भो राज्ञि! तव पुत्रो भावी । तत्प्रभृति सा राज्ञी प्रसन्नदोहदा सम्पूर्णदोहदा सम्मानितदोहदा वसुधानिधानमिव पुत्रं बभार । क्रमेण शुभदिने, शुभवारे, शुभनक्षत्रे, शुभग्रहे, शुभलग्ने, शुभमुहूर्ते, शुभग्रहनिरीक्षितकल्याणवद्वेलायां निशाशेषेऽपराजितापट्टराज्ञी प्रथमं पुत्रं सुषुवे । सुवर्णवर्णं, सम्पूर्णलक्षणं, पुण्डरीकाक्षं, मातृपितृप्रमोदं दृष्ट्वा दशरथश्चिन्तामणिरिव दानं ददौ । पुत्रे जाते पिता दानं ददातीति लोकस्थितिः । यतः—

वसुधाभरणं पुरुषाः, पुरुषाभरणं प्रधानतरलक्ष्मीः । लक्ष्म्याभरणं दानं, दानाभरणं सुपात्रं च ॥१॥

दानेन भूतानि वशीभवन्ति, दानेन वैराण्यपि यान्ति नाशम् ।
परोऽपि बन्धुत्वमुपैति दानात्ततः पृथिव्यां प्रवरं हि दानम् ॥२॥

एवं राजा दशरथो दानं ददानो लोके धवलमङ्गलगायनभट्टयाचकप्रभृतिभिर्विहितबहुमानस्तोरणश्रेणिसंशोभितमन्दिरः समस्तराजमण्डलीसमुपवोभुज्यमानचरणो महीपत्युपनीतप्राभृतैर्विहितसन्मानो राजा दशरथः सुखमनुभवन्नास्ते । प्रथमे दिवसे तस्य कुलोचितां स्थितिपतिकां राजा करोति । तृतीये दिवसे चन्द्रसूर्ययोर्दर्शनं कारापयति । षष्ठे दिवसे षष्ठीजागरणं करोति । सम्प्राप्ते द्वादशे दिवसे निवर्तितेऽशुचिजातकर्मकरणे नृपतिर्नामस्थापनां करोति । यथा—

पद्मानिवासपद्मस्य पद्म इत्यभिधां नृपः। सूनोस्तस्याकरोत्सोऽभूत् प्रथितो राम इत्यपि ॥१॥
गजसिंहार्कचन्द्राग्निश्रीसमुद्रान् निशात्यये। स्वप्ने पश्यत्सुमित्राऽपि विष्णुजन्माभिसूचकान् ॥२॥
देवलोकात् परिच्युत्य त्रिदशः परमर्द्धिकः। तदा देव्याः सुमित्राया उदरे समवातरत् ॥३॥

पूर्णमासे शुभे दोहदे देवीसुमित्रांभोदरुणे संपूर्णलक्षणं जगन्मित्रं पुत्ररत्नमजीजनत्। पुरचैत्येषु सर्वेषु राजा दशरथः पूजामकारयत्। राजा धृवान् वंदीन् मोचयामास। रामजन्मवत् दशरथो महोत्सवं कृत्वाऽभिरामं नारायण इत्यभिधानं विदधे पिता लक्ष्मण इत्यपरं नाम प्रमथे। दशरथपुत्रौ द्वावपि पितुः कूर्चाकर्षणतत्परौ धात्रीभिर्लाल्यमानौ, क्षीरपायिनौ, क्रमेण बाल्यं वयो निर्गमय्य यौवनं प्रापतुः। द्वावपि कथंभूतौ, नीलपीताम्बरौ, महीतलं पादघातैः कम्पयन्तौ, साक्षिकृतकलाचार्यौ, गिरिरिव महोजसौ, सकलाः कलाः शिक्षमाणौ, द्वात्रिंशल्लक्षणोपेतौ। तानि लक्षणान्यमूनि यथा—

इह भवति सप्तरक्तः षडुन्नतः पञ्चसूक्ष्मदीर्घोऽपि। त्रिविपुलस्त्रिलघुस्त्रिगम्भीरो द्वात्रिंशल्लक्षणः स पुमान् ॥१॥
नखचरणपाणिरसना दशनच्छदतालुलोचनांतेषु। रक्तः सप्तस्वाथं सप्तांगं स लभते लक्ष्मीम् ॥२॥
पदूर्क कक्षा १ वक्षः २ कृकाटिका ३ नासिका ४ नखास्यमिति। यस्येदमुन्नतं स्यादुन्नतयस्तस्य जायन्ते ॥३॥
सूक्ष्माण्यङ्गुलिपर्वाणि दन्ताः केशा नखास्त्वचा। पञ्च सूक्ष्माण्येषां च ते नरा दीर्घजीविनः ॥४॥
नयनकुचान्तरनासाङ्गुलिभुजमिति पञ्चकं दीर्घम्। दीर्घायुर्भवति नरः पराक्रमी जायते स पुमान् ॥५॥
ललाटमुरोवदनमितित्रितयं भूमीश्वरस्य विपुलं स्यात्। ग्रीवाजङ्घामेहनमिति त्रिकं लघु महेशस्य ॥६॥

यस्य स्वरोऽथ नाभिः सत्त्वमितीदं त्रयं गभीरं स्यात्। सप्ताम्बुधिपर्यन्तं भूमेः स परिग्रहं कुर्यात् ॥७॥

इति द्वात्रिंशल्लक्षणानि। इति द्वात्रिंशल्लक्षणोपेतौ षट्त्रिंशद्दण्डायुधज्ञौ महायोधौ सकलशस्त्रशास्त्रपारीणौ राज्ञो दशरथस्याभिनवौ भुजाविव वर्द्धितौ। एकस्मिन्दिने राज्ञा चिन्तितम्। किं ममात्र स्थितेन। पुत्रपौत्रैः परिवृतः स्वदेशे स्वां नगरीमयोध्यां यामि। यद्भावि तद्भवतु। यतः—

मज्जत्वंभसि यातु मेरुशिखरं शत्रुञ्जयत्वाहवे, वाणिज्यं कृषिसेवनादिसकलं शिक्षन्तु सर्वाः कलाः।
आकाशं विपुलं प्रयातु खगवत् कृत्वा प्रयत्नं परं, नाभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ॥१॥

भीमं वनं भवति तस्य पुरं प्रधानं सर्वो जनः सुजनतामुपयाति तस्य।
कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥२॥

एवं ध्यात्वाऽयोध्यायामागतो दशरथ ईक्ष्वाकूणां राजधानीति मत्वा। राजा राज्यं पालयामास। तत्रान्येद्युर्दशरथपत्नी कैकेयी गजस्वप्नेन सूचितं भरतभूषणं भरतनामसुतमसूत। चतुर्थपत्नी सुप्रभाऽपि सुस्वप्नसूचितं शत्रुघ्नभुजाविक्रमं शत्रुघ्ननामानं पुत्रं प्रसूता। स्नेहाद्रामलक्ष्मणावविमुक्तौ तथा भरतशत्रुघ्नावप्यवियुक्तौ क्रीडापरौ वर्तन्ते। तैश्चतुर्भिः पुत्रैः परिवृतो दशरथः शुशुभे गजदन्तैरिव मेरुगिरिः।

## ॥ अथ सीताभामण्डलयोः पूर्वभवानाह ॥

इतश्चास्मिन्जम्बूद्वीपे भरतक्षेत्रे दारुग्रामे वसुभूतिनामा द्विजोऽभूत्। तस्यानुकोशा नाम पत्नी। तयोः पुत्रोऽतिभूतिः। तस्य

पत्नी सरसा नाम तया सह सुखमनुभवन्नास्ते। एकस्मिन्दिनेऽतिभूतेः प्रिया सरसा नाम्ना केनचित्कपोतनाम्ना विप्रेण जातरागेणापजह्रे। स्मरातुरः पुमान् किं न करोति ? यतः—

विकलयति कलाकुशलं हसति शुचिं पण्डितं विडम्बयति। अधरयति धीरपुरुषं क्षणेन मकरध्वजो देवः ॥१॥

स्त्रीइं धाध्युं सयलजग सुरनरइसर देव। अकह कहाणि मयणनी सहुअमनाव्युं सेव ॥२॥

स विप्रः सरसा विप्रपत्नीं हृत्वा देशान्तरं गतस्तया सह सुखमनुभवन्नास्ते। तद्वियोगार्दितोऽतिभूतिभर्ता प्रियाविलोकनाय सोऽपि देशान्तरं गतः। सुतस्नुषाविलोकनकृते मातापितरावपि विचेरतुः। तौ मातापितरौ सुतस्नुषे अपश्यन्तौ ग्रामाद्ग्रामं पर्यटन्तौ तावेकं मुनिवरं ददृशतुः। तदन्तिके धर्मं श्रुत्वा वैराग्याच्चारित्र्यधर्मं प्रपेदाते। तौ द्वौ संयमं प्रपाल्य ततो विपद्य सौधर्मे कल्पे देवौ बभूवतुः। एकदिनपालितेऽपि व्रते देवलोकादन्यत्रगतिर्नास्ति यतः—

एगदिवसं पि जीवो पवज्जमुवागओ अणण्णमणो। जइवि न पावइ मोक्खं अवस्स वेमाणिओ होई ॥१॥

वसुभूति ततश्च्युत्वाऽत्रैव वैताढ्यपर्वते चन्द्रगतिनाम्ना रथनूपुरनाथोऽभूत्। अनुकोशाऽपि देवभवाच्च्युत्वा विद्याधरपुत्री पुष्पवती नाम्ना भूत्वा चन्द्रगते रथनूपुरनाथस्य पत्न्यभूत्। सरसा विप्रवधूः कामपि साध्वीं प्रेक्ष्य तदन्तिके धर्मं श्रुत्वा प्रव्रज्यां लात्वेशानदेवलोके देवीत्वेनोत्पद्य सुखमनुबभूव। सरसापतिरतिभूतिविप्रः पत्न्या विरहे देशान्तरं भ्रममाणः पत्नीं क्वापि न प्राप्ता ततो विरहविधुरो मृत्वा चिरं संसारं भ्रान्त्वा हंसपोतो जातः। श्येनेन भक्ष्यमाणः कण्ठगतप्राणः साधुसमीपे गतः। साधुना नमस्कारदानेन स्वस्थीकृतो मृत्वा नमस्कारप्रभावेण ऋद्धिमान्दशवर्षसहस्रायुः किन्नरेषु सुरोऽभवत्। इतश्च चक्रपुरे नगरे चक्रध्वजराजस्य पुरोहितो

धूमकेशो नाम्ना तस्य स्वाहा नाम पत्नी। तयोः पुत्रत्वेनातिभूतिविप्रजीवः किन्नरदेवभवाच्च्युत्वा स्वाहाकुक्षाववातरत्। क्रमाज्जातः पिङ्गलेति नाम दत्त्वा वर्धितः। वर्धमानोऽष्टवार्षिकः पण्डितपार्श्वे राजपुत्र्या सुन्दरीनाम्न्या सह पपाठ। कालेन गच्छता सुन्दरीपिङ्गलौ स्नेहपरायणावेकगुरुशाठितौ परस्परं स्नेहरागवर्तिनौ। पिङ्गलो विप्रपुत्रः सुन्दरीं राजपुत्रीं हृत्वा विदग्धनगरे ययौ। पिङ्गलो विज्ञानरहितो राजपुत्र्या सहितस्तृणकाष्ठादिविक्रयं कुर्वन् महाकष्टेन दिनान् निर्गमयामास। निर्गुणोचितं ह्येतत्। यतः—

मित्तकुलालिपरिग्गिह सामिकिय अवराह। महिला एह परिक्खडी निद्धण हुंतई नाह ॥१॥

जे सुरा जे पंडिया जे गिरुआ गुणधीर। नारी तेह नचाविआ जे नर बावनवीर ॥२॥

हुंति मोटी आस सोना गिह्रिरेयातणी। सामिलीलविलास भोजनना सांसा पडया ॥३॥

इत्यादि विचार्य देवोपालम्भान् ददाना पिंगलेन सह काष्ठतृणभारं वहन्ती दिनानि गमयामास। एकस्मिन्दिने सुन्दरीं पिङ्गलपत्नीं काष्ठभारेण सहितां तन्नगरराजपुत्रः कुण्डलमण्डितोऽद्राक्षीत्। तद्रूपमोहितः कुण्डलमण्डितः सुन्दरीमपजह्रे। हृत्वा पितुर्भिया दुर्गदेशे गत्वा तत्र स्थितः। सापि सुन्दरी तेन सह रमते। धिक् स्त्रीलक्षणम्। यतः—

सुरूपं पुरुषं दृष्ट्वा पितरं भ्रातरं सुतम्। मनश्चलति नारीणामेतत्सत्यं हि नारद! ॥१॥

रहो नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः। तेन नारद! नारीणां सतीत्वमुपजायते ॥२॥

अथ तद्वार्तां पिङ्गलः सुन्दरीविरहादुन्मत्त इवेतस्ततो भ्रमन्नार्यगुप्ताख्यमाचार्यमद्राक्षीत्। धर्मं श्रुत्वा तदन्तिके व्रतं जग्राह पिङ्गलः। परं सुन्दर्याः प्रेमातिरेकं न मुमोच। अहो! कान्ताविरहः। यतः—

कान्तावियोगः स्वजनापमानं, ऋणस्य शेषः कुजनस्य सेवा ।
दरिद्रभावाद्विमुखत्वसंगो, विनाऽग्निना पञ्च दहन्ति देहम् ॥१॥
भिक्षुर्विलासी ह्यधनश्च कामी, वृद्धो विटः प्रव्रजितश्च मूर्खः ।
पण्याङ्गना रूपविलासहीना, प्रजापतेर्दुश्चरितानि पञ्च ॥२॥

एवं पिङ्गलो मुनिः संयमं पालयन् कान्ताविरहजं दुःखं हृदयान्न मुमोच । इतश्च कुण्डलमंडितः पल्लिस्थितो दशरथभुवं लुंटयामास । राज्ञो दशरथस्याग्रे लोकै रावश्चक्रे । दशरथेनापि बालचन्द्राख्यः सामन्त आज्ञां दत्त्वा प्रेषितो गत्वा तं कुंडलमंडितं पल्लीपतिं सुप्तं बद्ध्वा दशरथराजस्याग्रेऽनैषीत् । दशरथेन कारायां क्षिप्तः कुण्डलमण्डितः कतिचिद्दिनान्ते पुनर्मुक्तो गतः स्वदेशम् । पितृराज्याय भ्राम्यन्कुण्डलमण्डितो मुनिचन्द्रमुनेर्धर्ममाकर्ण्य महाश्रावकोऽभवत् । राज्येच्छुः श्रावकत्वं प्रपाल्य स्वायुःपर्यन्ते मृत्वा मिथिलायां राज्ञो जनकस्य विदेहाभार्यायाः कुक्षौ पुत्रत्वेनावातरत् । सरसाऽपि भवं भ्रान्त्वा पुरोहितपुत्री वेगवती नाम्ना भूत्वा दीक्षां लात्वा ब्रह्मलोके गता । ततोऽपि च्युत्वा विदेहायाः कुक्षौ कुण्डलमण्डितजीवयुग्मत्वेन सुताऽभवत् । जनकपत्नी विदेहा समये पुत्रपुत्रीयुग्ममजीजनत् । इतश्च पिङ्गलर्षिः संयमं प्रपाल्य आयुरन्ते मृत्वा सौधर्मदेवलोके गतस्तत्र ज्ञानेन निजपूर्वभवसम्बन्धं ज्ञात्वा कुण्डल मण्डितजीवं निजवैरिणं मत्वा तं बालं गृहीत्वैकान्ते गत्वा चिन्तयति । किमेनं बालं हन्मि ? । पुनश्चिन्तितं किं बालहत्यां करोमि ? बालहत्यां कृत्वा भवं भ्रमामि इति कृत्वा कुण्डलादिभिर्भूषणैर्भूषयित्वा वैताढ्यदक्षिणश्रेणिरथनूपुरपत्तननन्दनवने शिलायां मुक्त्वा देवः स्वस्थानं गतः । रथनूपुरनाथस्य चन्द्रगतिनामविद्याधरस्य यात्रार्थं गच्छतो नन्दनोद्याने विमानं स्खलितम् । विमानदुत्तीर्य

यावद्विलोकयति तावता तं बालं दिव्यालङ्कारभूषितं दृष्ट्वा चिन्तितं, भो ममापुत्रस्य दैवेन पुत्रो दत्तः, मम भाग्यं फलितमिति कृत्वा तं बालं गृहीत्वा स्वपट्टराज्ञ्याः पुष्पवत्या अर्पयामास। देव्या गूढगर्भाया पुत्रो जात, इति कथयित्वा राज्ञा महामहश्चक्रे पुत्रजन्मजन्महोत्सवं कृत्वा प्रभामण्डलेन भासुरत्वाद्भामण्डल इति नाम दत्त्वा पुष्पवतीचन्द्रवत्योर्हर्षो बभूव। भामण्डलोऽपि धात्रीभिः खेचरीभिर्लाल्यमानः क्रमेण ववृधे।

इतश्चापहृते पुत्रे विदेहाकरुणस्वरं रुदन्ती स्वान्बन्धून्रोदयन्ती शोकार्णवे पातयामास। जनकोऽपि स्वान्नरान्प्रतिदिशं प्रेष्य विलोकयामास परं क्वापि पुत्रशुद्धिं न प्राप। ततः पिता जनकः पुत्र्याः सीता इति नाम विदधे। कालेन राजराज्ञ्योः शोको मन्दीबभूव। यतः संसारे लोकानां शोको हर्षश्चायाति याति च।

अथ क्रमेण सीता प्रवर्धमानाऽष्टवार्षिकी जाता, पित्रा पाठिता, यौवनोन्मुखी रूपलावण्यसंपद्भ्यां प्रवर्धमानेन्दुलेखेव ववृधे द्वात्रिंशन्नायिकागुणोपेता जाता। यथा–कुलिना–सुरूपा–सुभगा–सुस्वरा–प्रसन्नशुभानना–पीनस्तनी–रसिका–लज्जान्विता लक्षणसंयुता–शकुनज्ञा–गीतज्ञा–वाद्यज्ञा–नृत्यज्ञा–कोमलशरीरा–सुगन्धप्रिया–मतिमानिनी–मधुरवचना–स्नेहवती–विनयवती–सत्यवती–शीलवती–प्रज्ञावती–गुणान्विताश्चेति क्रमायौवनं प्राप्ता। तां सीतां निजपुत्रीं विलोक्य जनकश्चिन्तयति, अस्यानुरूपो वरः कः स्यादिति चरैर्विलोकयति, परं नैकोऽपि वरो रुरुचे।

इतश्च आतरंगतमादिम्लेच्छपार्थिवैर्दैत्यकल्पैर्जनकस्य राज्ञो राज्यमुपदुद्रुवे। तेषां रोधाय मिथिलेश्वरो दशरथाहूत्यै दूतं प्राहिणोत्। दशरथो जनकदूतं दृष्ट्वा सप्रसादं सहर्षमग्रे निषाद्य दूतमेवं जगाद, दूत! किमर्थमागतोऽसि? मिथिलेश्वरस्य कुशलमस्ति?

दूतोऽपि दशरथं नत्वाऽवादीत्, भो राजेन्द्र ! मद्भर्तुः साम्प्रतं कुशलमस्ति परमातरंगतमादि म्लेच्छपार्थिवै रुद्धोऽस्ति। स त्वां कुलदेवतावत्स्मरति, अतः स्वामिन् जनकस्य साहाय्यं कुरु। वैताढ्याद्दक्षिणतः कैलासस्योत्तरेण च भूयांसोऽनार्यदेशाः सन्ति। तेषु देशेष्वर्धवर्बरो नाम देशोऽस्ति तत्र मयूरसालनगरे तद्देशभूषण आतरङ्गतमनामा राजाऽस्ति। तस्य सहस्रशस्तनयाः शुकमङ्कन–काम्बोजप्रभृतीन् विषयान् नृपीभूय भुञ्जते। इदानीमातरङ्गतमो म्लेच्छाधिपतिः पुत्रादिसैन्यपरिवृतोऽक्षय्याक्षौहिणीनाथैः परिवारितो जनकक्षितिमभांक्षीत्। तद्दुराशया प्रतिग्रामं चैत्यानि बभंजुः, जनानुपद्रुद्रुवुः। ततस्त्वं जनकस्य प्राणभूत प्रियोऽस्ति, अतो हे राजेन्द्र। निजमित्रस्य जनकस्य परित्राणं साहाय्यं च कुरु। तदर्थं प्रेषितोऽस्मि। सज्जो भव। यतः–सन्तः सतां परित्राणे विलम्बं न कुर्वते। यतः—

विणये सिस परिक्खा सुहडपरिक्खाय होई संगामे। वसणे मित्तपरिक्खा दाणपरिक्खाय दुक्काले॥१॥

दशरथं गन्तुकामं रामोऽवादीत्। हे तात ! त्वं तत्र किं यास्यसि मयि पुत्रे सानुजे सति, अतो ममाज्ञां देहि, अहं सानुजो गत्वा म्लेच्छान्धृत्वेहानयिष्यामि, त्वमपि स्वजन्मनो जयवार्ता श्रोष्यसि, इत्थं कथंचिद्दशरथपित्राऽनुज्ञातो रामः सहानुजः सेनापरिवृतो मिथिलानगरीं जगाम। मिथिलापरिसरे गतो रामश्चित्रकसिंहशार्दूलसन्निभान्म्लेच्छसुभटानद्राक्षीत्। तेऽपि राममागतं दृष्ट्वा महौजसो म्लेच्छा राममुपद्रोतुं प्रावर्तन्त। रामोऽपि म्लेच्छसेनया सह युध्यमानोऽधिज्यं धनुः कुर्वाणो म्लेच्छसैन्यमहनत्। मृगानिव बाणैर्विध्यन् बाणैर्दिश आच्छादयन् रामो राजते। यथा—

आतरङ्गादयो म्लेच्छाधिपाः कुपितविस्मिताः। वर्षन्तोऽस्त्राणि युगपत्प्रतिरामं ढुढौकिरे॥१॥

दूरापाती दृढाघाती, शीघ्रवेधी च राघवः । तान्म्लेच्छान्हेलयाऽभांक्षीच्छरभः कुंजरानिव ॥२॥

म्लेच्छाः प्रणश्य ते जग्मुः, काका इव दिशोदिशि । बभूव स्वस्थो जनको जनैर्जानपदैः समम् ॥३॥

अथ हृष्टो राजा जनको रामाय स्वसुतां ददौ । रामागमे जनकस्य द्वयमभूदेको जयो द्वितीया वरप्राप्तिः ।

तदा नारदो जानकीरूपं जनादाकर्ण्य कौतुकाद्द्रष्टुं कन्यावेश्म विवेश । पिङ्गनेत्रं तुन्दिलं विषमाधरं दण्डपाणिं सकोपिनम पीनाङ्गं भीषणमेवंविधं नारदं दृष्ट्वा सीता भीता कम्पमाना तात मातरिति ब्रुवाणा गर्भागारान्तरेऽविशत् । ततो दासिकाभिः तुमुलकारिभिः स नारदः कण्ठे शिखायां बाह्वोश्च धृत्वा द्वारपालाद्यै रुरुधे । शस्त्रधारिभिः सुभटैरपि निष्कासितो नारदः कुपितः कथंचित् तेभ्य आत्मानं विमोच्य गगनगामिन्या विद्यया वैताढ्य दक्षिणश्रेण्यां रथनूपुरपत्तने चन्द्रगतिनाम्नो विद्याधरस्य पुत्रभामण्डलोपान्ते गतः । तत्र गत्वा भामण्डलकुमारस्य सीतारूपं पटे लिखित्वा दर्शितम् । यतः—एष एनां दृष्ट्वा रूपं व्यामोहितो हरिष्यतीति बुध्वा पुनः पुनारूपवर्णनकुर्वाणो नारदश्चमत्कारं दर्शयित्वा स्वस्थानं गतः । तत्प्रभृति स भामण्डलो भोज्यानि नहि बुभुजे । पेयान्यपि न पपौ । तत्प्रभृति योगीव ध्यानतत्परो मौनेनावतस्थे । तं तथाविधं दृष्ट्वा चन्द्रगतिविद्याधरोऽवोचत् । भो पुत्र ! तव किंचिद्रोचते तद्ब्रूहि । यथा तस्य दुःखस्य पारं गम्यते । भामण्डलं लज्जयाऽधोमुखं दृष्ट्वा तन्मित्रेण सज्जनेन सर्वोऽपि वृत्तान्तः कथितः । तच्छ्रुत्वा चन्द्रगतिना चिन्तितम् । का सीता कथं सा उपलक्षिष्यते । एवं चिन्ताप्रपन्ने चन्द्रगतिनाम्नि विद्याधरे पुनर्नारदोऽप्यागात् । बहुमानपुरस्सरं चन्द्रगतिनाऽभाणि । भो नारद ! का सीता? कस्य पुत्री? नारदेनोक्तम्—विदेहाजनकात्मजा सीता या मया पट्टे लिखिताऽस्ति । परं यादृग्सीतारूपमस्ति तादृग्लिखितुं नाऽभिज्ञः । तथापि किंचिन्मया पट्टे आलिख्य दर्शितम् । यथा—

नामरीषु न नारीषु, न गांधर्वीषु तादृशम्। सीताया यादृशं रूपं, का कथा मानुषीषु तु ॥१॥

तादृग्रूपं यथावस्थं, विकर्तुं नेश्वराः सुराः। नानुकर्तुं सुरनरा, न च कर्तुं प्रजापतिः ॥२॥

अथवा तां यथावस्थां, यथा नालेखितुं क्षमः। नालं तथा वक्तुमपि, वच्म्यतः परमार्थतः ॥३॥

योग्या भामंडलस्येति, विचार्य मनसा मया। यथाप्रज्ञं समालिख्य, दर्शितेयं पटे नृप ॥४॥

भो पुत्र! एषा सीता तव पत्नी भविष्यति, त्वं चिन्तां मा विधेहि, इत्युक्त्वा पुत्रमाश्वास्य नारदं मुनिं विसृज्य चपलगतिं विद्याधरमित्यादिदेश। भो चपलगते! त्वं गच्छ, गत्वा मिथिलाधिपतिं राजानं जनकं द्रुतमपहृत्य अत्राऽऽनय। इत्यादेशं श्रुत्वा गतश्चपलगतिः सुप्तं निद्रावशगतं जनकं समानीय चन्द्रगतेरर्पयामास। चन्द्रगतिर्जनकमालिंग्य बहुमानपुरःसरं भामण्डलपुत्रार्थं सीतां याचयामास। जनकोऽवादीत् भो चन्द्रगते! मया दशरथपुत्राय रामचन्द्राय दत्ता, अन्यस्य कथं दीयते। यतः—

सकृज्जल्पन्ति राजानः, सकृज्जल्पन्ति पण्डिताः। सकृत्कन्याः प्रदीयन्ते, त्रीण्येतानि सकृत्सकृत् ॥१॥

पुनश्चन्द्रगतिः प्रोचे। भो जनक! त्वं मया स्नेहवृद्धिकृते आनीय याचितोऽसि। अतो मम याचनां सफलीकुरु। तव पुत्रीं मम पुत्राय भामण्डलाय देहि। यदि न ददासि तदाऽन्यदपि किञ्चिच्छृणु। मम गृहे वज्रावर्तार्णवावर्ते द्वे धनुषी देवताज्ञया यक्ष-सहस्राधिष्ठिते वर्तेते। मम गृहे गोत्रदेवतावत् प्रत्यहं पूज्येते। एते द्वे धनुषी गृहाण। गृहीत्वा च स्वगृहं याहि। यतः एते धनुषी आरोपयिष्यति रामो वा भामण्डलो वा स सीतां परिणेष्यति। इति प्रतिज्ञां बलात्कारेण संग्राह्य धनुर्द्वयसहितं जनकं चन्द्रगति-र्मिथिलां मुमोच। एतद् वृत्तान्तं सर्वं राजा जनको महादेव्या विदेहाया आचख्यौ। विदेहापि तद्धनुर्वृत्तान्तं श्रुत्वा दैवोपालंभं

ददाना जनान्रोदयन्त्येवं रुरोद। रे दैव! पुत्रं हृत्वा न सन्तुष्टो यत्त्वं कन्यामन्यस्य दास्यति? जनकोऽवोचत्—मा भैषी, राघवो मया दृष्टपूर्वः। एतद्धनुद्वये लतावद्वालयिष्यति। अतः खेदं मा विधेहि। इति कथयित्वा विदेहा तोषिता। अथ सुमुहूर्ते राज्ञा जनकेन स्वयंवरमण्डपः कारितः। तस्मिन्स्वयंवरमण्डपेऽनेके राजान आगता उच्चैः स्थानेपूच्चमंचेपूपविष्टाः शुशुभिरे। दूताहूतो दशरथोऽप्यागाच्चतुःपुत्रपरिवृतो धर्म इव। चन्द्रगतिविद्याधरो भामण्डलसहितः सोप्यागात्। एवमनेके राजानः समागता जनकेनाहूता उच्चोच्चरमण्डपेपूपविष्टाः पालके विमाने देवा इव शुशुभिरे।

जनकेन वै चापरत्ने, मंडपे मंचमण्डिते। भ्राजमाने वज्रमये यक्षसङ्घसमाश्रिते ॥१॥

देवदत्ते वेन्द्रचापे स्थापिते शोभिते च ते।

ततः सीता तत्र मण्डपे समागता। कथंभूता सीता—सखीपरिवृता देवाङ्गनानुकारिणी दिव्यालङ्कारधारिणी। धनुःपूजां कृत्वा रामचन्द्रं मनसि कृत्य सीता धनुःसमीपेऽतिष्ठत्। भामण्डलः स्वयंवरमण्डपं धनुर्द्विकं सीतां च विलोक्य मारमार्गणेन मरणात्मको बभूव। तस्मिन्समये सर्वेषु राजसूच्चमञ्चेपूपविष्टेषु जनको वादस्वरेणावादीत् भो भो लोकाः! खेचराः! भूचराः! महीधरा राजानो माण्डलिका मद्वचः शृण्वन्तु। यथा—

आरोपयति यः कश्चिदनयोश्चापदण्डयोः। अप्येकतरमद्यैव स उद्वहतु नः सुताम् ॥१॥

इत्युक्त्वा निर्वर्तिते जनके ते राजानः किं कुर्युः? केचिद्धनुःपन्नगवेष्टितं ददृशुः। एवं केचित्पन्नगं केचिद्वह्निसमूहं केचिद्भस्मराशिं केचिज्ज्वालामालितमेवंविधं धनुर्दृष्ट्वा न्यस्ता अधोमुखा राजानो यथास्थितास्तथैवोपविष्टाः स्वस्थानम्। अथ दाशरथिः श्रीरा

मचन्द्रो राजगत्या चलन् चत्रलकुण्डलविराजमानगण्डो धनुरुपान्त उपासरत्। चन्द्रगत्यादिभिर्विद्याधरैः सोपहासं वीक्ष्यमाणो जनकेन सहर्षं निरीक्ष्यमाणः श्रीरामचन्द्रो वज्रपाणिर्वज्रावर्तं महाधनुः सद्यः पाणिना पस्पर्श। महीपीठे स्थापयित्वा जानुना वेत्रवन्नामयित्वा धन्विनां वरो रामचन्द्रो धन्वधिज्यं विदधे। यथा—

आकर्णान्तं तदाकृष्य रोदः कुक्षिम्भरिध्वनि। धनुरास्फालयामास, स्वयशःपटहोपमम् ॥१॥
स्वयंवरस्रजं रामे, स्वयं चिक्षेप मैथिली। चापाच्चोत्तारयामास, रामभद्रोऽपि शिञ्जिनीम् ॥२॥
लक्ष्मणोऽप्यर्णवावर्तं, कार्मुकं रामशासनात्। अधिज्यं विदधे सद्यः, प्रेक्षितो विस्मितैर्जनैः ॥३॥
आस्फालयच्च तन्नादबधिरीकृतदिङ्मुखम्। उत्तार्य मौर्वीं सौमित्रः पुनः स्थाने मुमोच च ॥४॥

तत्स्वरूपं दृष्ट्वा विद्याधरराजाः सौमित्रये लक्ष्मणाय सुरकन्या इवाद्भुता अष्टादश कन्यका ददुः। अन्ये राजानो विद्याधराश्च जनकेन मानिताः पूजिताः स्वं स्वं स्थानं ययुः। चन्द्रगतिविद्याधरो भामण्डलान्वितो विलक्ष्यवदनो निजे पुरे ययौ। इति सीताभामण्डलयोः पूर्वभवसम्बन्धः ॥

अथ राजा जनको तथा दशरथश्च महामहेन रामसीतयोर्विवाहश्चक्रे। तदा जनकभ्राता कनकोऽपि निजां पुत्रीं सुप्रभाकुक्षिजां भद्रानाम्नीं भरताय ददौ। एवं विवाहं कृत्वा पुत्रैः स्नुषाभिश्च परिवृतो दशरथोऽयोध्यां प्रकृतोत्सवां ययौ। अन्येद्यू राजा दशरथो महत्या ऋध्या श्रीशान्तिनाथप्रासादे शान्तिकृते स्नात्रं चक्रे। तत्स्नात्रनीरं प्रथमं दशरथो वृद्धकञ्चुकिपुरुषेणापराजिताकृते प्राहिणोत्पश्चादपरपत्नीभ्यो दासीहस्ते प्राहिणोत्। ता दास्यो यौवनमदोन्मत्ता उत्कूर्दन्त्यः प्रथममेव राज्ञीनामर्पयामासुः। ता राज्यः

शान्तिजलं शिरसा वरन्दिरे। वृद्धत्वान्मन्दगामिनि सौविदल्लेऽसंप्राप्ते शान्तिजले महादेव्यपराजिताऽचिन्तयत्। अहो! सर्वासां राज्ञीनां जिनेन्द्रस्नानवारिणा राज्ञा प्रमादो विहितः, परमस्माकं राज्ञा न प्रेषितं स्नात्रजलमतोऽहं निर्भाग्या ध्वस्ते माने किं जीवितेनेति विचिन्त्य यावन्मरणोद्यता भवति, तावता नरेन्द्र आगात्। तां तथावस्थां ददर्श। मृत्युभीतो राजा राज्ञीं स्वोत्संगे निवेश्यैवमब्रवीत् हे देवि! त्वयेदं साहसं किमारब्धं? तव किं मयाऽपमानं विदधे? येन त्वं मरणसाहसं करोषि? राज्ञ्योचे–हे राजन्! त्वया सर्वासां राज्ञीनां स्नात्रजलं प्रेषितं मदर्थे न प्रेषितमतः किं जीवितेन, एवं प्रोच्यमाने स एव पुरुषः कञ्चुकी स्नात्रजलं गृहीत्वा समागतः। तन्नीरं वन्दित्वा राज्ञ्या पृष्टम्, भो कञ्चुकिन्! त्वं विलम्बेन किमागाः? हे स्वामिन्! धिग्वार्धक्यं, सर्वकार्याक्षमं वार्धक्यं मेऽपराध्यति। कथंभूतं कञ्चुकिनं, मुमूर्षुं पदे पदे प्रस्खलन्तं घण्टान्तर्लोलिकालोलदशनं श्वेतसर्वाङ्गरोमाणं श्वेतभ्रूरोमलोचनं शुष्कलोहितं कम्पमानाङ्गमेवंविधं कञ्चुकिनं दृष्ट्वा राजा दशरथो चिन्तयति। अहो! जरा पुरुषं विडम्बयति। यतः—

गात्रं संकुचितं गतिर्विगलिता दन्ताश्च नाशं गताः, दृष्टिर्भ्रश्यति रूपमेव हसते वक्त्रं च लालायते।
वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते। धिक् कष्टं जरयाभिभूतपुरुषं पुत्रोऽप्यवज्ञायते ॥१॥

इत्यादि विचिन्तयन् वैराग्यवान् विषयपराङ्मुखः कमपि समयमनैषीत्। इतश्च तस्यां नगर्यामयोध्यायामन्येद्युर्महामुनिः सत्यभूतिनामा चतुर्ज्ञानी संघप्रावृतः समवासरत्। उद्यानपालेन गुर्वागमनवर्धापनेन वर्धितो राजा दशरथ। उद्यानपालकाय दानं दत्त्वा सपुत्रादिपरिवारपरिवृतो दशरथो गुरुसमीपं गत्वा गुरुं वन्दित्वा स्तुत्वा देशनां शुश्रूषुः पुरतो निषसाद। तदानीमेव चन्द्रगतिविद्याधरः सीताभिलाषसन्तप्तो भामण्डलसहितो रथावर्ताचलेऽर्हतो वन्दित्वा विनिवृत्तस्तत्राऽऽयातो नभःस्थितस्तं मुनिं समवसृतं वीक्षांचक्रे।

ततोऽम्बरादवतीर्य साधुं वन्दित्वा सोऽपि निषसाद। साधुरपि देशनां पापविनाशनीं चक्रे, देशनां कृत्वा स्थिते मुनौ चन्द्रगतिविद्याधरेण सीतायां भामण्डलस्य प्रेमकारणे पृष्टे मुनिश्चन्द्रगतिपुष्पवत्योर्भामण्डलसीतयोः पूर्वभवान् समाचख्यौ पापनिवृत्तये। भामण्डलकुमारोऽपि श्रुत्वा युग्मजाततां भामण्डलापहारतां मुनेश्चाकर्ण्य सञ्जातजातिस्मरणो भामण्डलो मूर्च्छितः पृथिव्यां न्यपतत्। पुनः शीतोपचारैर्लब्धसंज्ञो भामण्डलः सुधीः सीतां नमश्चक्रे। सीताऽपि महासती जातमात्रमपहृतं निजसहोदरं भामण्डलं ज्ञात्वाऽऽशीर्षं ददौ सञ्जातसौहृदो विनयवान् भामण्डलो ललाटस्पृष्टभूतलो रामचन्द्रं नमश्चकार। चन्द्रगतिविद्याधरो मिथिलां गत्वा जनकं विदेहया देव्या समं विमान आरुह्य साधुसमीप आनैषीत्। सप्रियो जनको विमानान्निर्गत्य साधुं नत्वोपाविशत्। गुरुणा तथैव पूर्वभवादिकं शंसितम्। पितरौ पुत्रं भामण्डलं ज्ञात्वा हर्षितौ बभूवतुः। ततो जनन्याः स्तन्यमक्षरत्। पुत्रप्रेम्णाऽऽलिलिङ्ग। जनकोऽप्युत्संगे निवेश्य पुत्रमूर्द्धनि चुचुम्ब। अश्रुवारिभिः सिक्तश्चन्द्रगतिना दृष्टस्तत्स्वरूपं दृष्ट्वा वैराग्याद्भामण्डले तनये राज्यं न्यस्य भवोद्विग्नः सत्यभूतिमुनिपार्श्वे चन्द्रगतिः प्रवव्राज। भामण्डलः सत्यभूतिं मुनिं चन्द्रगतिं राजर्षिं जनकविदेहे सीतारामौ च नत्वा निजां पुरीं गतः।

इतश्च दशरथो राजा सत्यभूतिं मुनिं नत्वाऽऽत्मपूर्वभवमपृच्छत्। मुनिरपि दशरथराजस्य पूर्वभवानाह। सेनापुरे नगरे भावनो नाम वणिक्। तस्य पत्नी दीपिका। तयोः पुत्री उपास्तिर्नाम त्वमभवत्। परं साधुप्रत्यनीका। साधूद्वेगकारिणी। तेन पापेन तिर्यग्योनिषु बभ्राम। एवं भवं भ्रान्त्वा चन्द्रपुरे नगरे धन्यस्य वणिजः पत्न्यां सुन्दर्यां जातो वरुणो नाम पुत्रोऽभूत्। परं धर्मवान् साधुभक्तो दानी विवेकवान्। काले मृत्वा धातकीखण्ड उत्तरकुरुषु युगलत्वेनोत्पन्नस्ततो मृत्वा देवो जातः। देवलोकाच्च्युतः पुष्क-

लावत्यां विजये पुष्कलायां नगर्यां नन्दीघोषस्य राज्ञः पृथ्वीदेव्या नन्दीवर्धनो नाम पुत्रो जातः। नन्दीघोषो राजा पुत्रं नन्दीवर्धनं राज्ये न्यस्य यशोधरमुनेः पार्श्वे श्रावकत्वं लात्वा चिरकालं पालयित्वा नन्दीवर्धनो दशरथजीवो मृत्वा ब्रह्मलोके गतः। ब्रह्मलोकात्परिच्युत्य प्रत्यग्विदेहे वैताढ्य उत्तरश्रेण्यां शशिपुरे रत्नमालिविद्याधरनरेशितुः विद्युल्लतापट्टराज्ञ्याः कुक्षौ पुत्रत्वेनोत्पन्नः। सूर्यंजय इति नाम पितृभ्यां दत्तम् दशरथपूर्वभवजीवस्य। अन्यदा रत्नमाली राट् दृप्तं विद्याधरेश्वरं वज्रनयनं विजेतुं सिंहपुरं नगरं ययौ। तत्र गत्वा वज्रनयनं संग्रामे जित्वा सिंहपुरं नगरं रत्नमाली ज्वालयितुमारेभे। कथंभूतं नगरम्–सबालवृद्धं–सस्त्रैणं–सपशु–हठात् रत्नमाली राट् ज्वालयन्नुपमन्युनाम्ना पूर्वभवपुरोहितदेवेन सहस्रारदेवलोकादागतेनैवं विज्ञप्य पापान्निवर्तित। एवं किं, भो रत्नमालिराट्! त्वमतिलोभात्पापमुत्कटं मा कृथाः। त्वं पूर्वजन्मनि भूरिनन्दनो नाम राजाऽभूत्। तत्र त्वया मांसनिवृत्तिः कृता। उपमन्युपुरोहितेन तव मांसनिवृत्तिर्भाजिता। त्वं पुनर्मांसास्वादनलुब्धोऽभूत्। एकस्मिन्दिने उपमन्युपुरोहितः स्कन्धनाम्ना सेवकेन मारितः। उपमन्युर्मृत्वा हस्ती जातः। स हस्ती भूरिनन्दनराजेन गृहीतः। स हस्ती रणे हतो मृतः। मृत्वा भूरिनन्दनराजस्य गान्धारायां पत्न्यां पुत्रो जातोऽरिसूदननामा। सञ्जातजातिस्मरणः प्रव्रज्य संयमं प्रपाल्य मृत्वा सहस्रारे देवो जातः। सोऽहं देवः। ततो भूरिनन्दनराजो मृत्वा वनेऽजगरो जातः। सोऽजगरो दावानलेन मृत्वा द्वितीयं नरकं गतः। तत्रापि मया प्रतिबोधितो नरकादुद्धृत्य रत्नमाली राजा जातः। स त्वं मांसप्रत्याख्यानभङ्गान्नरके गतोऽतो राजन्! अनन्तदुःखोत्पादकं नरदाहं मास्म कृथाः। तद्देववचोयुक्त्या रत्नमाली नन्दने नन्दननाम्नि राज्यं न्यस्य वृद्धपुत्रेण सूर्यंजयेन दशरथजीवेन सह व्रतमादद्दे तिलकसुन्दराचार्यसन्निधौ। तौ द्वौ पितापुत्रौ संयमं प्रपाल्य महाशुक्रेऽमरोत्तमावभूताम्। ततश्च्युत्वा सूर्यंजयो राजा त्वं दश-

रथो जातः। रत्नमाली प्रच्युत्यायं राजा जनको जातः। उपमन्युस्तु राजजनकलघुभ्राता कनको जातः। नन्दीवर्धनजन्मनि यो नन्दीघोषपिताऽभूत् स नन्दीघोषः संयमं प्रपाल्य ग्रैवेयके गतस्ततो ग्रैवेयकाच्च्युत्वा सत्यभूतिनामा मुनिर्जातः। सोऽहमिति सत्यभूतिमुनिनोक्ते जातसंवेगो राजा दशरथोऽयोध्यायां निजमालयं जगाम।

॥ इति दशरथजनकसत्यभूतिमुनिपूर्वभवकथानकम्॥

अथ संसारपराङ्मुखो दशरथो राज्ञीः, सुतान्, मन्त्रिणो, महामन्त्रिण आहूय सुधामधुरया गिरा सर्वान्सम्भाष्य दीक्षाग्रहणायाऽऽपप्रच्छे–भो मन्त्रिन्! अहं संसारविमुखो दीक्षां ग्रहीष्ये, रामचन्द्राय राज्यं भवतु। तावता भरतो नत्वा बभाषे। हे तात! अहं त्वया सह सर्वविरतिं समुपादास्ये त्वां विना गृहे नह्यवस्थास्ये। हे स्वामिन्! त्वां विना मम द्वे कष्टे स्याताम्। एकं त्वत्पादविरहोऽपरं संसारतर्पणम्। तच्छ्रुत्वा कैकेयीति चिन्तयति। अहो! अतः परं निश्चितं निर्वीरा स्याम्। इति विचिन्त्य दशरथं नृपं प्रत्यूचे–स्वामिन्! स्मरसि यस्त्वया स्वयंवरोत्सवे सारथ्यकर्मणि मह्यं वरो दत्तः, मया न्यासीकृतः। सोऽधुना दीयतां देव!। दशरथोऽवोचद्याचस्व यद्रोचते। तया याचितं यदि याचितं ददासि तर्हि मम पुत्राय भरतायायोध्याराज्यं देहि राज्यं दत्त्वा ऋणरहितो भव। ऋणार्तस्य दीक्षा न कल्पते। यतः—

बालवुड्ढे नपुंसे अ जडे कीडे अ वाहिए। तेणे रायावगारिआ उम्मत्ते अ अदंसणे ॥१॥
दासे दुट्ठे अ मूढे अ आणत्ते जुंगिए इअ। बद्धए अ भयइए सेहनिप्फेडिआ इय ॥२॥

अनयोर्व्याख्या—बालो गर्भाष्टमवर्षान्तरवर्ती १। वृद्धस्तपोयोगक्रियादिष्वसमर्थः २। नपुंसको जात्यः ३। जडो मूर्खो यस्य

पठनं नायाति ४। किडेत्ति–यः स्त्रीमिर्भोगे निमन्त्रितोऽसंवृतायाः स्त्रियोऽङ्गोपाङ्गानि दृष्ट्वा शब्दं च मन्मनोल्लापादिकं श्रुत्वा समुद्भूतकामाभिलापमधिसहितुं न शक्नोति ५। व्याधितः ६। स्तेनश्चौरः ७। श्रीगृहान्तःपुरनृपतिशरीरतत्पुत्रादिद्रोहविधायको राजापकारीत्यक्षादिना प्रबलमोहोदयेन वा परवशं नीतः ९। अलोचनो बीभत्सो वा १०। दासः परायत्तः ११। कषायविषयदुष्टश्च १२। मूढो ग्रहीलः १३। ऋणार्त्तः १४। कोलिकादिजात्या वागुरिकनापितसौकरिकादिनिन्द्यकर्मकुर्वाणः पङ्गुकुब्जवामनादि शरीरेण च त्रिधा जुंगिए इअत्ति १५। वद्धएत्ति–परायत्तः खुसरो वा १६। रूपकादिभृत्या धनिगृहादेशकारी १७। दिक्षितमिष्टस्य निष्फेटिकाऽपस्तरणम् १८।

इअ अट्ठारस भेआ पुरीसस्स इत्थिआई ते चैव। गुव्वीणी सबालवच्छा दुन्नी इमे हुन्ति अन्नेवि ॥१॥

अतो भरते राज्यं दत्त्वा ऋणरहितो भव। ततो दीक्षां गृहाण। केकय्यैवं कथिते दशरथोऽवादीत्–हे प्रिये! राज्यं रामचन्द्राय भवतु। त्वमन्यं किमपि याचस्व। पुनः कैकेय्या तथैवोक्तम्। पुनर्दशरथेनोक्तम्–हे प्रिये! यदि तुभ्यं रोचते तर्हि रामाय राज्यं ददामि तव सौराष्ट्रं ददामि। कैकेय्या प्रोक्तम्–किं करोमि सौराष्ट्रेण।

नास्ति त्रिपुरुपी विद्या नास्ति त्रिपुरुषं धनम्। न तेन रोचते मह्यं सौराष्ट्रे बन्धुविग्रहः ॥१॥

अंगवंगकलिंगेषु सौराष्ट्रे मगधेपि च। विना यात्रां न गन्तव्यं यदि कार्यशतं भवेत् ॥२॥

अतः सौराष्ट्रेण मम कार्यं नास्ति। मह्यमयोध्याराज्यं देहि। रामाय वनवासं देहि तदा ऋणरहितो नान्यथा। तच्छ्रुत्वा दशरथोऽवदत्।

अल्पोदके सस्यवती दुर्भिक्षे चापलायनी। सौराष्ट्रं तव दास्यामि मा मे रामो वनं व्रजेत् ॥१॥

एवं युक्तिप्रयुक्त्या बोधिताऽपि न बुबोध। ततो दशरथो रामं प्रत्यूचे-भो पुत्र! अस्याः कैकेय्याः सारथ्यतुष्टेन मया पूर्वं वरो दत्तः, सोऽधुनाऽयाचिष्ट। भरतस्य राज्यं तव वनवासोऽनया याचितोऽधुना। रामोऽभाषिष्ट हे तात! अनया सुन्दरं याचितं यतो मम भरते किञ्चिदन्तरं नास्ति। यादृशोऽहं तादृशो भरतोऽतो भरताय राज्यं देहि। दत्त्वा त्वमृणरहितो भव। दीक्षां च गृहाण। पुना रामो दशरथं प्रति प्रोचे। यस्मै च कस्मैचन राज्यमेवचात प्रसादीकुर्वर्थिनेऽपि। कश्चिन्निषेधेऽनुमतौ च तत्र त्वत्पत्तिमात्रस्य न मेऽधिकारः।

सुतावभूतां भरतोऽप्यहं च, दृशाविवावां तुलितावुभावपि।
निवेश्यतां तद्भरतोऽत्र राज्ये, सुखेन तिष्ठामि च राज्यलीलया ॥१॥
भरतोऽप्यहमेवास्मि निर्विशेषावुभावपि। अतोऽभिषिच्यतां राज्ये भरतः परया मुदा ॥२॥
इति रामवचः श्रुत्वा भूपतिः प्रीतिविस्मितः। आदिक्षन्मन्त्रिणो यावद्भरतस्तावदब्रवीत् ॥३॥

स्वामिन्! सह व्रतादानमादावप्यर्थितं मया। तात! तन्नान्यथा कर्तुं कस्याऽपि वचसाऽर्हसि।
ततो राजा दशरथ उवाच। हे वत्स! मत्प्रतिज्ञां मा मृषा कुरु। त्वन्मातुः कैकेय्या मया वरो न्यासीकृतस्तेन वरेण तव माता राज्यं याचते। अतो ममाज्ञां मातुराज्ञां चान्यथा कर्तुं नार्हसि। अथ रामो भरतमूचे। भो भरत! यद्यपि तव गर्वो नास्ति। तथापि तातमातृवचः कर्तुं राज्यमुद्वह। अथ भरतो रामपादयोः पतित्वा साश्रुनयनः कृताञ्जलिरेवमुवाच। हे बान्धव! अहं तातस्य सूनुः

किं न? किं वा तवानुजो न? किंवाऽहं मातृमुखोऽस्मि? यदेवंविधं गर्ह्यं कर्म करोमि। एतद्भरतोक्तं श्रुत्वा रामो दशरथं प्रत्यूचे। भो तात! मयि राज्ये सति भरतो राज्यं नादास्यतेऽतो राज्यं त्यक्त्वा वनवासाय याम्यहम्।

इत्यनुज्ञाप्य राजानं रामो नत्वा च भक्तितः। भरते च रुदत्युच्चैर्निर्ययौ चापतूणभृत् ॥१॥

लक्ष्मण उवाच–

आर्योऽथवाऽयं तृणवद्विमुच्य, नादास्यते राज्यमिदं ससत्त्वः।
तातस्य दुःखं भविता च तस्मात्, पदातिवद्राममनुव्रजामि ॥१॥

हन्यां यदीह कैकेयीं पापिनीं पतिदुःखदाम्। पापात्मानं तु श्रीरामो त्यजेन्मां मातृघातकम् ॥२॥

लक्ष्मणः सुमित्रां नत्वोचे–'हे मातः! राममनुव्रजामि। सुमित्रयोक्तम्—

रामं दशरथं मन्ये मन्ये मां जनकात्मजाम्। अयोध्यामटवीं मन्ये वत्स! गच्छ यथासुखम् ॥१॥

दशरथं नत्वा रामं वनवासाय गच्छन्तं ईदृशं ददृशुः।

आहूतस्याभिषेकाय प्रस्थितस्य वनाय च। ददृशुर्विस्मितास्तस्य मुखरङ्गं समं प्रजाः ॥१॥

वनवासाय गच्छन्तं दृष्ट्वा दशरथः सुतम्। भूयोभूय ययौ मुर्च्छामतुच्छां स्नेहकातरः ॥२॥

अथापराजितां देवीं नत्वा रामोऽभ्यधादिति। मातर्यथाहं तनयो भरतोऽपि तथैव ते ॥३॥

म्यां प्रतिज्ञां सत्यापयितुं पिता भरताय राज्यमदात्। मयि सत्येव भरतो राज्यं नादत्तेऽतो मया वने गन्तव्यम्। हे मातः! त्वं

भरतं मम सदृशं जानीहि, यथाहं तथा भरत इत्युक्त्वा पादौ पतित्वा मातुःसमीपान्निर्गतः। रामं वनाय निर्गतं ज्ञात्वाऽपराजिता यत्करोति तदाह।

तमाकर्ण्य गिरं देवी पपात भुवि मुर्च्छिता। चेटीभिश्चन्दनांभोभिः सिक्तोत्तस्थावुवाच च ॥१॥
आः केन जीविताऽस्म्येषा मुर्च्छा हि सुखमृत्यवे। सहिष्ये रामविरहदुःखं जीवन्त्यहं कथम् ॥२॥
वनं व्रजिष्यति सुतः पतिश्च प्रव्रजिष्यति। श्रुत्वाऽप्येतन्न यद्दीर्णा कौशल्ये। वज्रमय्यसि ॥३॥
रामो जगाद भूयोऽपि मातः! पत्न्यसि मत्पितुः। ततः किमिदमारब्धं कातरस्त्रीजनोचितम् ॥४॥
वनान्यटितुमेकाकी याति केसरिणीसुतः। स्वस्था तु केसरिण्यास्ते न ताम्यति मनागपि ॥५॥
तातस्य ऋणमस्त्युच्चैः प्रतिपन्नवरो ह्ययम्। अत्र स्थिते च मय्यम्ब! तस्यानृण्यं भवेत्कथम् ॥६॥

इत्यादि युक्तवचनैरपराजितां बोधयित्वाऽम्बां नत्वा रामो वनाय निर्ययौ। सीताऽपि दशरथमपराजितां नत्वा रामानुगमनं ययाचे। अपराजिता सीतां बभाषे। हे वत्से!

देवीव लालिताऽसि त्वमाजन्मोत्तमवाहनैः। सहिष्यसे कथं वत्से पादचङ्क्रमणव्यथाम् ॥१॥
तवाङ्गं सौकुमार्येण कमलोदरसोदरम्। क्लिष्टं तापादिना कुर्यात्क्लेशं दाशरथेरपि ॥२॥
स्वभर्तुरनुयानेनानिष्टकष्टागमेन च। न निषेधं न चानुज्ञां यान्त्यास्ते कर्तुमुत्सहे ॥३॥

सीताऽपराजितां नत्वा राममनुययौ। लोकोऽप्युवाच। धन्यैषा सीता महासती। या राममनुयाति। अहो! एषा महासती

सतीमुख्या महता शीलेन स्वं कुलद्वयं पुनाति । इति लोकैर्व्यावर्ण्यमाना राममनुययौ। अथ लक्ष्मणः संधुक्षितक्रोधवह्निरिदं दध्यौ। तातेन राज्यं भरताय दत्तम्। अथ भरतं सकैकेयीं हत्वा रामे राज्यं न्यस्यामि। अथवा रामो राज्यं नादास्यते, तातस्यापि महद्दुःखं स्यादिति विचिन्त्य लक्ष्मणः सुमित्रामपराजितां नत्वा कार्मुकतूणभृदनुधाव्यागमद्रामं मिलितः। ततस्ते त्रयोऽपि विकस्वरमुखाम्बुजाः पुर्या निर्ययुः। मैथिलीरामलक्ष्मणैर्नगर्या निर्यद्भिस्तन्नगरवासिनरा नार्यश्च कष्टां दशां लेभिरे। अयोध्यानगरवासिलोकाः सपरिवारा राममनुययुः। बाष्पायमाणो राजा दशरथोऽपि सान्तःपुरपरिच्छदः स्नेहरज्ज्वाकृष्टो राममनुसरत्। रामलक्ष्मणयोर्नगरान्निर्गतयोरयोध्योद्वसेव समभूत्। अयोध्याबहिरुद्याने गत्वा रामो मातापितरौ न्यवर्तयत्। तथोचितालापैः पौरलोकानपि रामो विससर्ज। ततो रामः सीतालक्ष्मणसहितो देशान्तरं ययौ। ग्रामे ग्रामे लोकैः पूज्यमानो महेभ्यैः स्तूयमानो धनकनकादिभिर्निमन्त्र्यमाणः सामन्तादिभिः राज्यपदे प्रार्थ्यमानः क्वाप्यवस्थातुं नोपापद्यत। दशरथश्चिन्तयति—

हे प्राणाः! क्व गतो रामस्तमनुव्रजताधुना। जरसा जर्जरैरङ्गैः शक्तिर्दशरथस्य का ॥१॥

मार्गे श्रीरामचिन्ता—

तत्तातस्य कृतादरस्य रभसादाह्वानकं दूरत-स्तचाङ्के विनिवेश्य बाहुयुगले नाश्लिष्य सम्भाषणम्।
ताम्बूलं च तदर्धचर्वितमिति प्रेम्णा मुखे नार्पितम्, पापाणोचित! हा कृतघ्नहृदय! स्मृत्वा न किं दीर्यसे॥१॥

इतश्च दशरथो राजा भरतं राज्यदानायाऽऽह्वास्त। परं भरतो राज्यं दशरथेन दीयमानं नाददे। परं स्वभ्रातृविरहासहः स्वां मातरं कैकेयीं चुक्रोश। कैकेय्याज्ञया दशरथः परिव्रज्योत्सुकः सलक्ष्मणं राममानेतुं सचिवान्सामन्तान्प्राहिणोत्। ते मन्त्रिणो

यानारूढा त्वरितं गत्वा रामचन्द्रं पश्चिमयायिनं मिलित्वा पादौ पतित्वा कथयन्ति । स्वामिन् ! दशरथो त्वां राज्यदानाय कैकेय्यानुज्ञया प्रत्याह्वयति । अतः स्वामिन्निवर्तस्व । दशरथः सभरतस्तव विरहं सोढुं न शक्नोति । प्रत्यावर्तस्व राज्यं गृहाण । तैर्दीनवचनैः प्रार्थ्यमानोऽपि राघवो न न्यवर्तत । यतो महतां प्रतिज्ञाऽद्रिपादवन्न चलति । मन्त्रिणो राघवेण विसृज्यमाना वारंवारं कथयन्तोऽपि तन्निवर्तनकृताशया सहैव चेलुः । अथ ते उग्रश्वापदपदाङ्कितां निर्मानुषां घनद्रुमां व्यालभयंकरां जानकीरामलक्ष्मणा अटवीं प्रापुः । अग्रे गच्छन्तस्ते त्रयो गम्भीरावर्तभीषणां पृथुप्रवाहां नाम्ना गम्भीरां नदीमीक्षांचक्रिरे। तत्र स्थित्वा रामः सामन्तादीनित्युवाच । यूयमितो निवर्तध्वम् । नाहं समेष्यामि । अग्रे गच्छतां युष्माकं कष्टं भविष्यति । अस्माकं कुशलोदन्तं गत्वा तातस्य यूयं शंसत । अस्माकं जनन्योर्भरतस्यापि कुशलोदन्तं वाच्यम् । इति कथयित्वा ससीतालक्ष्मणो रामो दुस्तरां गम्भीरां तरङ्गिणीमुत्ततार । तैर्मन्त्रिभिस्तटस्थितैर्दृष्टो रामो वनमाश्रितः । दृष्ट्वा मन्त्रिणो बाष्पाम्भस्तिमितांशुका रुदन्तो न्यवर्तन्त । निवर्तिता मन्त्रिणः क्षेमेणायोध्यां नगरीमगुः । दशरथं नत्वा मन्त्रिण ऊचुः । स्वामिन् ! नायातौ रामलक्ष्मणौ । दशरथस्तद्वचः श्रुत्वा भरतं प्रत्याह । भो भरत ! राज्यं गृहाण दीक्षाविघ्नाय मा स्म भूः । भरतोऽप्यवदत् , अहं राज्यं नादास्ये । किन्तु स्वयं गत्वा ममाग्रजं रामचन्द्रं कथंचनानेष्यामि । तदा कैकेय्यप्यागात् । राजानं विज्ञपयति । स्वामिन् ! त्वया भरताय राज्यं दत्तं परं भरतो विनयी राज्यं नादत्ते । अन्यासामपि राज्ञीनां ममापि च महद्दुःखाय जायते । मयाऽविमृश्यकारिण्याऽशुभं कृतं ततो रामाय राज्यं देहि । यथा—

कौशल्यायाः सुमित्रायाः सुप्रभायाश्च दुःश्रवम् । रुदितं मम शृण्वन्त्या हृदयं भवति द्विधा ॥१॥
भरतेन समं गत्वा तौ वत्सौ रामलक्ष्मणौ । अनुनीय समानेष्याम्यनुजानीहि नाथ माम् ॥२॥

अथादिष्टा प्रहृष्टेन राज्ञा दशरथेन सा। ययौ सभरतामात्या प्रतिरामं कृतत्वरा ॥३॥

कैकेयी जानकीरामलक्ष्मणान्पश्यन्ति षड्भिर्दिनैस्तद्वनं प्राप। कैकेयी रामं दृष्ट्वा रथादुत्तीर्य वत्स ! वत्सेति भाषिणी प्रणमन्तं रामचन्द्रं मूर्द्धनि चुचुम्ब। वैदेहीलक्ष्मणावपि कैकेयीपादाम्बुजं प्रणमन्तौ कैकेय्या बाहुभ्यामालिङ्गयात्यर्थं रुरुदे । भरतोऽपि रामपादौ नमश्चक्रे । साश्रुदृशं भरतं रामो बाहुभ्यां धृत्वाऽऽलिलिङ्ग। सर्वेऽपि रामभरताद्याः कस्यचिद् वटवृक्षस्याधो विशश्रमुः। कैकेय्युवाच–हे वत्स ! हे रामचन्द्र ! निवर्तस्व, अयोध्याराज्यं गृहाण, भरतो राज्यं नादत्तेऽतस्त्वमेव मे भरतः। एषः सौमित्रिस्तवाऽमात्यो भविष्यति, भरतस्तव प्रतिहारः, शत्रुघ्नस्त्वातपत्रभृद्भविष्यति। कैकेय्यैवं प्रोक्ते भरतेनाऽपि तथैवोक्ते राम उवाच–हे भ्रातः ! हे मातः ! तातस्य दशरथस्य पुत्रो भूत्वाऽहं स्वां प्रतिज्ञां किं त्यजामि ?। तातेन भरतस्य राज्यं दत्तं मया ह्यनुमतम् । अथ पुनः कथं तद्राज्यं गृह्णामि । तदस्तु भरतो राजा द्वयोरपि निदेशत इत्युक्त्वा सीतानीतैर्जलैः श्रीरामचन्द्रः सर्वसामन्तमन्त्रिसाक्षिकमुत्थाय भरतं राज्येऽभिषिच्य कैकेयीं बहु संभाष्य भरतं समातृकं विससर्ज । स्वयं दक्षिणां दिशं प्रतस्थे । भरतः कैकेय्या सममयोध्यां ययौ। तत्र राज्यभारं दशरथार्पितं भरतः भ्रातृशासनाद्दुरीचक्रे । दशरथः सत्यभूतिमहामुनेः पार्श्वे भूयसा परिवारेण समं दीक्षामुपाददे । भरतो भ्रातृवनवासेन हृदि शल्यतोऽर्हत्पूजोद्यतो रामोपानहौ सिंहासने संस्थाप्य स्वय यामिकवत्सेवातत्परो राज्यं पालयामास। रामोऽपि सौमित्रिमैथिलिसुतासहितो मार्गे गच्छंश्चित्रकूटमतीत्यावन्तीदेशैकदेशमासादयत् ।

इति श्रीमत्तपागच्छभट्टारकश्रीहीरविजयसूरिराज्ये आचार्यश्रीविजयसेनसूरियौवराज्ये पण्डितदेवविजयगणिविरचिते श्रीरामचरिते गद्यबन्धे रामलक्ष्मणोत्पत्तिपरिणयनवनगमनो नाम चतुर्थः सर्गः ॥

# पञ्चमः सर्गः ।

श्रीरामो विश्रमितुमध्वनि वटस्य मूले न्यपदत् यक्षेश्वरवत् । रामस्तं देशं वीक्ष्य सौमित्रिमभ्यधात् । भो सौमित्रे ! अयं देशः कस्यापि भित्याऽधुनैवोद्वसोऽभवत् ।

अशुष्ककुल्यान्युद्यानानीक्षुवाटाश्च सेक्षवः । साज्ञानि च खलान्याहुर्नूतनोद्वसतामिह ॥१॥
तदा च रामः पप्रच्छ गच्छन्तं जनमेककम् । किमुच्चालदेशोऽयं क्व यासि चलितोऽनघ ! ॥२॥

स ऊचे–एषोऽवन्तीदेशस्तत्रावन्ती नाम नगरी, तस्यां सिंहोदरो नाम राजा द्विषां सिंहवद्दुःसहो वर्तते । अवन्तीदेशस्यैकदेशे दशाङ्गपुरं नाम नगरमस्ति । सिंहोदरसामन्तो वज्रकर्णो नाम राजाऽस्ति । सोऽन्येद्युः पापर्द्धिं कर्तुं वने गतः । तत्र प्रीतिवर्धनं नामतो महामुनिं कायोत्सर्गस्थमैक्षिष्ट । तं महामुनिं नत्वा राजाऽवोचत् भो महामुने ! त्वमेकाकी वने द्रुम इव किं तिष्ठसि ? । मुनिनोक्तमात्महितार्थं वने वसामि । वज्रकर्णोऽराद् भूयोऽप्यूचे । भो साधो ! अत्र खाद्यपेयादिवर्जिते वने तव किमात्महितम् ? मुनिस्तं योग्यं ज्ञात्वाऽऽत्महितमार्हतं धर्ममाख्यत् । राजाऽप्यर्हद्धर्मं श्रुत्वा सुधीः साधुपुरतः श्रावकत्वं प्रपेदे । यथा—

या देवे देवता बुद्धिर्गुरौ च गुरुतामतिः । धर्मे च धर्मधीः शुद्धा सम्यक्त्वमिदमुच्यते ॥१॥
पिधानं दुर्गतिद्वारे निधानं सर्वसम्पदाम् । विधानं मोक्षसौख्यानां पुण्यैः सम्यक्त्वमाप्यते ॥२॥

अन्तोमुहुत्तमित्तंपि फासिअं जेहिं हुज्ज सम्मत्तं। तेसिं अवड्ढपुग्गलपरियट्टो चेव संसारो ॥३॥

इति सम्यक्त्वं श्रुत्वा राज्ञाऽभिग्रहो गृहीतः। यथा—

विना च देवमर्हन्तं विना साधूंश्च नापरम्। नंस्यामीति तदग्रे स जग्राहाभिग्रहं दृढम् ॥१॥

स वज्रकर्णो राजा सम्यक्त्वमूलं द्वादशव्रतं श्रावकधर्मं प्रतिपद्यैवंविधमभिग्रहं गृहीत्वा साधुं नमस्कृत्य नगरमध्ये समागश्चिन्तयति। यथा–मम नायकः सिंहोदरो राजा, स मां नमस्कारविमुखं दृष्ट्वा वैरी भविष्यतीति मत्वा मणिमयीं मुनिसुव्रतस्वामिप्रतिमां कारयित्वा स्वाङ्गुलीये न्यवीविशत्। यदाऽवन्त्यां सिंहोदरनृपं नमस्कर्तुं याति तदा तदंगुलीयकं करे कृत्वा कराग्रे विधाय राजानं नमस्करोति। तं वज्रकर्णवृत्तान्तं कश्चिद्दुर्जनो मतिमन्दः सिंहोदरमहीपतेः सर्वमेकान्त आचख्यौ। खलाः सर्वंकषाः खलु। यतः—

तन्नत्थि घरं तन्नत्थि देउलं, राउलंपि तन्नत्थि। जत्थ अकारणकुविआ, दोतिन्नि खला न दीसंति ॥१॥

मृगमीनसज्जनानां, तृणजलसन्तोषचित्तवृत्तीनाम्। लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥२॥

सहजांधदृशः स्वदुर्नये, परदोपेक्षणदिव्यचक्षुषः। स्वगुणोच्चगिरो मुनिव्रताः, परवर्णग्रहणेष्वसाधवः ॥३॥

एवंविधं दुर्जनस्य वचनं श्रुत्वा तुच्छाकर्णः सिंहोदरो महीपतिर्महाहिरिव निःश्वसन्नास्ते। तत्स्वरूपं केनापि पुरुषेण ज्ञात्वा कर्णाभ्यां श्रुत्वा वज्रकर्णकर्णे कथितम्। तच्छ्रुत्वा वज्रकर्णेनोक्तम्–भो महापुरुष! त्वया कथं ज्ञातम्?। सिंहोदरस्य मयि कोपः केन हेतुना?। तेन पुरुषेणोक्तम्–श्रूयताम्। कुंडदपुरे समुद्रसंगमो नाम वणिगस्ति। यमुना नाम्ना तत्पत्नी। तयोः पुत्रोऽहमस्मि

विद्युदंगो नाम्ना। क्रमाद्यौवनं प्राप्तो भाण्डमादायाहं क्रयविक्रयहेतव उज्जयिन्यां पुर्यामागमम्। तत्रोज्जयिन्यां क्रयविक्रयं कुर्वाणस्य मम यौवनोन्मत्ततयेन्द्रियदुर्जयतया कामलता नाम्नया वेश्यया सार्धं रममाणस्य कालो याति। एवं काले गच्छति षड्भिर्मासैः सर्वं धनं विनाशितम्। आजन्मपर्यन्तेन यदर्जितं तत्स्तोकैरेव दिनैर्निष्ठितम् धिग्व्यसनम्। यतः–

घूतं च १ मांसं च २ सुरा च ३ वेश्या ४ पापर्द्धि ५ चोरी ६ परदारसेवा ७।
एतानि सप्त व्यसनानि लोके घोरातिघोरं नरकं नयन्ति॥१॥

अथ वेश्या–नटविटभटभुक्तां सत्यशौचादिमुक्ताम्, कपटशतनिधानं शिष्टनिन्दानिदानम्।
धननिधनविधानं सद्गुणानां पिधानं, परभवपदमेकं कः पणस्त्रीं भजेत ॥२॥

धणपुन्नसुहरसिआ नेहविहुणा विलग्ग एकं। पच्छा करइ विआरं बलहडसारिच्छिआ वेसा ॥३॥
अभ्रच्छाया तृणादग्निः खले प्रीतिः स्थले जलम्। वेश्यारागः कुमित्रं च षडेते बुद्बुदोपमाः ॥४॥

एवंविधया पण्याङ्गनया सार्धं भोगान्भुंजानस्य कालो याति। एकस्मिन्दिने तया कामलतया वेश्यया सिंहोदरराजस्य पट्टराज्ञी दृष्टा, तस्याः कुण्डलयुगलं विलोक्य मोहितया वेश्यया मम पार्श्वे कुण्डलयुगलं याचितम्। भो विद्युदंग! राज्ञ्याः कुण्डलयुगलं चौर्येण हृत्वाऽऽनय, मह्यं देहि। विना कुण्डलयुगलं मम गृहे नागन्तव्यम्। मयोक्तम्–एवम्। ततोऽहं मरणभयमविचिन्त्य काममोहितः कुण्डलार्थं रात्रौ खात्रेण तत्र गतो नृपौकस्येकत्रस्थितशय्यायां राजाराज्ञ्यौ वार्तां कुर्वाणे मया शुश्रुवाते। श्रीधरापट्टराज्ञ्या पृष्टम्–भो राजन्! अद्य किं निद्रा नायाति? उद्विग्न इव दृश्यसे, तत् किं कारणं? सत्यं ब्रूहि। सिंहोदरोऽवददेवि! तावन्निद्रा कुतो

मम ? प्रणामविमुखो यावद्वज्रकर्णो न मार्यते।

अमुं प्रातर्हनिष्यामि ससुहृत्पुत्रबान्धवम्। यात्वियं रजनी यावद्विनिद्रस्यापि मे प्रिये ॥१॥

एतद्वचनं श्रुत्वा कुण्डलचौरिकां त्यक्त्वा त्वां साधर्मिकवात्सल्यात् इह त्वरितमागमम्। तच्छ्रुत्वा वज्रकर्णः स्वं नगरं दुर्गखातिका धान्यतृणकाष्ठादिभिः सज्जीकृत्य स्वयमपि सज्जो बभूव। विद्युदंगश्च प्रचुरं धनं दत्त्वा विसर्जितः स्वस्थानं गतः। तत्क्षणं समागतः सिंहोदरः सबलवाहनो दशाङ्गपुरं नगरं जम्बूद्वीपं समुद्रवदावेष्टय स्थितो वक्ति। सिंहोदरो राजा दूतमुखेन वज्रकर्णमदोऽवदत्। भो वज्रकर्ण ! यदि जीवितेन कार्यं, यदि राज्येन कार्यं, यदि सुखेन कार्यं तदाऽङ्गुलीं मुक्त्वा प्रणामं कुरु। अन्यथा सकुटुंबं त्वां हनिष्यामि। इति दूतेनोक्ते दूतं प्रति वज्रकर्णोऽवादीत्–भो दूत ! तव राजा मूढो वर्तते, यो मम प्रणामं वाञ्छति। मयाऽभिग्रहो गृहीतः। यतः—

न पौरुषाभिमानोऽत्र किन्तु धर्माभिमानिता। विनाऽर्हन्तं विना साधुं प्रणमाम्यपरं नहि ॥१॥

धर्म ! द्वारं देहि मह्यं, यथा धर्माय कुत्रचित्। अहमन्यत्र गच्छामि, धर्म एवास्तु मे धनम् ॥२॥

इत्युक्तं दूतेन गत्वोक्तम्। परं सिंहोदरो राजा न मन्यते। यतो मानिनः कदाचिद्धर्मं न गणयन्ति। अतः परं तं वज्रकर्णं रुद्ध्वा सिंहोदरो बहिः स्थितोऽस्ति। तत्सैनिका देशं मुष्णन्ति। तद्भियैते ग्रामा उद्वसा जाता, अहं सकुटुम्बो नष्टोऽस्मि, प्रत्यासन्नग्रामे स्थितोऽस्मि, मद्गेहिन्या क्रूरकर्मया किञ्चिदानेतुं पुनः प्रेषितोऽस्मि, अथ तत्कार्यं कृत्वा तवाज्ञया यास्यामि। एवमुक्त्वा यावदाज्ञां मार्गयित्वा याति, तावता रामेण रत्नस्वर्णमयं कटिसूत्रं दत्त्वा विसर्जितः। तं विसृज्य सीतारामलक्ष्मणा दशाङ्गपुरमीयुः।

तत्र नगराद्बहिश्चन्द्रप्रभचैत्ये जिनान्नत्वा तन्मण्डपे सीतासहितो रामस्तस्थिवान्। रामादेशात् सौमित्रिस्तत्र गतः। तन्नगरं प्रविश्य वज्रकर्णान्तिके गत्वा तत्संसदि स्थितः तारामध्ये चन्द्र इव शुशुभे। सदाकारं लक्ष्मणं दृष्ट्वा वज्रकर्णोऽभ्यधात्–भो महाभाग! त्वं मम भोजनातिथिर्भव। लक्ष्मणोऽप्युवाच–मम प्रभुः सकलत्रो नगराद्बहिरुद्याने स्थितस्तमादौ भोजयित्वा ततोऽहं भोक्ष्ये नान्यथेति। ततो वज्रकर्णो राजा सौमित्रिणा सार्द्धं भूयिष्ठभोज्यं सव्यंजनमुपरामं निनाय। तेन भोज्येन भोजितौ रामलक्ष्मणौ सीतासहितौ सन्तुष्टौ। यतः—

देहस्नेहस्वरमधुरताबुद्धिलावण्यलज्जाः, प्राणोऽनङ्गः पवनसमता क्रोधहानिर्विलासः।
धर्मः शास्त्रं सुरगुरुनतिः शौचमाचारचिन्ता, कुक्ष्यापूर्णे जठरपिठरे प्राणिनां सम्भवन्ति ॥१॥

भुक्त्वाऽनन्तरमनुशिष्य रामेण लक्ष्मणोऽवन्तिनृपतिं प्रति प्रेषितः। लक्ष्मणः सिंहोदरं प्रति गत्वोचे–भो सिंहोदर! वज्रकर्णेन सह विरोधं मा कार्षीः। सकलमहीभर्ता भरतो निषेधति। सिंहकर्णोऽवोचत्–अयं वज्रकर्णो मत्सेवको मम सामन्तो मन्नमस्कारं न कुरुते, ममाज्ञां न मन्यते, तर्हि कथमस्माभिर्न हन्यते। भूयोऽपि लक्ष्मणोऽवोचत्–भो सिंहोदर! असौ त्वयि नाविनयी, किन्तु प्रणामसन्धाऽस्य धर्मानुगा, धर्मरक्षिका, अत एनं वज्रकर्णं मा कुप्य, इदं भरतेनोक्तं मन्यस्व, आसमुद्रान्तमेदिन्यां भरतः शासिता। अतः सिंहोदरो लक्ष्मणं स्माह–भो पुरुष! को भरतः? किमहं भरतसेवकः? किं वा भरतो मम स्वामी? यो मां वज्रकर्णं शिक्षयन्तं निषेधयति। तच्छ्रुत्वा कोपारुणो लक्ष्मणः स्फुरदधरोष्ठदलोऽवोचत्–रे सिंहोदर! तं न जानासि? भरतं नोपलक्षसे? उपलक्षयामि, युद्धाय सज्जो भव, द्रुतमुत्तिष्ठ, संवर्मितो भव, रे त्वं न भवसि, एष मद्भुजाशनिताडितो गोधेव क्षयं यास्यसि। सिंहोदरः ससैन्यो

लक्ष्मणं हन्तुमुद्यतोऽभवत्। तावता लक्ष्मणो गजालानमुन्मूल्य शत्रून् ताडयामास। पुनः सौमित्रिरुत्पत्य सिंहोदरेभं मुष्टिनाऽऽहत्य सिंहोदरं केशेषु धृत्वा रामसन्निधौ रज्जुबद्धाङ्गमिव निन्ये। सिंहोदरो रामं दृष्ट्वा नन्वेदमभाषत–हे राजेन्द्र! हे रघुकुलोद्भव! हे श्रीरामचन्द्र! त्वमिहायातो मया न ज्ञातः, हे नाथ! ममाज्ञानदोषं क्षमस्व, निजाज्ञां देहि, अहं किंकरोऽस्मि, भृत्ये कोपः शिक्षामात्र एव स्यात्, सा तु मया प्राप्ता, शिष्ये गुरोरिव। रामेणोक्तम्–हे सिंहोदर! वज्रकर्णेन सह सन्धेहि। सिंहोदरोऽपि तं तथेति प्रत्यपद्यत। वज्रकर्णोऽपि रामभद्रस्य शासनात् तत्रागात्। विनयेन रामपुरो भूत्वा कृताञ्जलिरित्युवाच। यथा—

स्वामिनो वृषभस्वामिवंशजो रामशार्ङ्गिणौ। युवां दृष्टौ मया दिष्ट्या किन्तु ज्ञातौ चिरादिह ॥१॥

भरतार्धस्य सर्वस्य युवां नाथौ महाभुजौ। अहमन्ये च राजानो युवयोरेव किंकराः ॥२॥

वज्रकर्ण उवाच–हे रामचन्द्र! एनं मत्स्वामिनं सिंहोदरं मुञ्च। रामचन्द्रेणोभयोः सन्धानं विधाय मित्रत्वं चक्रे। वज्रकर्णो निजां प्रतिज्ञां पालयन्नास्ते। यथा—

विनाऽर्हन्तं विना साधुं नमस्यो नापरो मया। इति स्वभिग्रहोऽग्राहि महर्षेः प्रीतिवर्धनात् ॥१॥

सिंहोदरोऽपि परया प्रीत्या राघवसाक्षिकं राज्यार्द्धं वज्रकर्णाय सोदरायेव दत्तवान्।

श्रीधराकुण्डले ते च याचित्वाऽवंतिपार्थिवात्। अदत्त विद्युदंगाय दशांगपुरपार्थिवः ॥१॥

वज्रकर्णो राट् प्रीतयेऽष्टौ सकन्यका लक्ष्मणाय ददौ। सिंहोदरः ससामन्तो लक्ष्मणाय कन्याशतत्रयमदात्। समये परिणेष्यामि

भवतोः सुता, इदानीं तु वयं मलयाचले स्थास्याम इत्युक्त्वा रामलक्ष्मणाभ्यां विसृष्टौ सिंहोदरवज्रकर्णौ निजनिजं पुरं ययतुः। रामलक्ष्मणौ सीतान्वितौ तां निशां तत्र स्थित्वा प्रगे चलितौ, गच्छन्तौ क्रमेण निर्जलं कमपि देशं सम्प्रापतुः॥

## ॥ इति सिंहोदरकथा ॥

तत्र निर्जले देशे रामलक्ष्मणौ सीतासहितौ कस्यचित्तरोस्तले विश्रान्तौ। पिपासिता सीता जलं मार्गयति। रामाज्ञया सौमित्रिर्जलमानेतुमगात्। इतस्ततो वने भ्रमन्नेकं सरोवरं दृष्ट्वा हृष्टः। कीदृशं सरः? यथा—निंबचंपकवटाम्बरपाटललिंबुजम्बूमचकुन्दपिप्पलीदाडिमीकदलीचन्दनाम्बुजैः शाखिभिश्च कलितं महासरः।

गम्भीरं सरसं स्वच्छं, सद्वृत्तं सत्त्वशालितम्। दृष्टं सरोवरं तेन तत्रैकं साधुचित्तवत्॥१॥

दृष्टं सरोवरं रम्यमनेकाम्भोजमण्डितम्। दूरादानन्दजननं वयस्यमिव वल्लभम्॥२॥

तत्सरो दृष्ट्वा हर्षितो लक्ष्मणो यावत्सरोवरमध्ये याति, तावता कूबरपुराधीशः कल्याणमालो नाम राजा लक्ष्मणेन दृष्टः, तेन लक्ष्मणो दृष्टः। लक्ष्मणं दृष्ट्वा स्त्रीवत्कामचेष्टां कुर्वाणो राजोचे—कामचेष्टा यथा—द्वाविंशती रामानां विकारेंगितानि। यथा—उच्चैर्निष्ठीवनम्, सानुरागनिरीक्षणम्, श्रवणसंयमनम्, आलस्यमोटनम्, मुद्रिकाकर्षणम्, गुप्ताङ्गदर्शनम्, प्रजल्पने हसनम्, स्तनमपीडनम्, भूषणोत्पाटनम्, नूपुरोत्कर्षणम्, कर्णकण्डूयनम्, केशप्रसारणम्, चरणसंयमनम्, नखविलेखनम्, परिधानसंयमनम्, निःश्वासोच्छ्वासनम्, प्राग्विजृम्भणम्, बालालिङ्गनम्, बालमुखचुम्बनम्, प्रियाश्लेषणम्, अतिक्रान्तप्रेक्षणम्, पश्चात्कामस्मरणम्। अथ काव्ये—

स्निग्धं दृष्टिपथं विभूषितवपुः कर्णस्य कण्डूयनम्, केशानां च मुहुर्मुहुर्विचरणं बालस्य चालिंगनम्।

नाभेर्दर्शनमग्रतश्च गमनं वार्ता सखीभिः सह, कुर्युः प्रीतिवशात्स्त्रियोऽपि सततं दृष्ट्वा नरं वाञ्छितम् ॥१॥
स्त्री कांतं वीक्ष्य नाभिं प्रकटयति मुहुर्विक्षिपन्ती कटाक्षान्, दोर्मूलं दर्शयन्ती रचयति कुसुमापीडमुत्क्षिप्य पाणिम्।
निःश्वासस्वेदजृम्भाः श्रयति कुचतटं स्रंसि वस्त्रं विधत्ते, सोत्कण्ठं वक्ति नीवीं श्लथयति दशत्योष्ठमंगं भिनत्ति॥

इत्यादिविकारान्दर्शयन्कर्णमालो राजा लक्ष्मणं भोजनाय निमन्त्रयति। लक्ष्मणो राज्ञो मान्मथं विकारं दृष्ट्वा पुनर्देहलक्ष्मणानि च निरीक्ष्य दध्यौ, एषा पुंवेषाकारधारिणी नारी दृश्यते, इति ध्यात्वा लक्ष्मणोऽवोचत्–मत्प्रभुः सभार्य इतो दूरदेशेऽस्ति, तेन विनाऽहं न भुंजे। कल्याणमालराजेन स्वप्रधानपुरुषा रामं सप्रियमाह्वातुं प्रेषिताः, तेऽपि गत्वा प्रियवाक्यैः श्रीरामचन्द्रं कल्याणमालराजस्य समीपे आनिन्यिरे। कल्याणमालोऽपि रामचन्द्रं नत्वा सीतां नत्वा च तयोः कृते पटकुटीं तत्कालं कारयित्वा सपरिच्छदः सेवां चक्रे। तत्र कृतस्नानभोजनं श्रीरामं लक्ष्मणं चोपविष्टं दृष्ट्वा कल्याणमालो राजा सहैकमन्त्रिणा स्त्रीवेषेण भूत्वा रामचन्द्रं प्रणनाम। राम उवाच–हे भद्रे! पुरुषीभूय स्त्रीभावं किं निह्नुषे? कूबरपतिः कल्याणमालोऽप्यूचे–हे स्वामिन्! रामचन्द्र! अस्मिन्कूबरपुरे महानगरे वालिखिल्यो नाम राजा, तस्य पृथ्वी नाम पट्टराज्ञी, साऽऽपन्नसत्त्वाऽभूत्। इतश्च म्लेच्छसैन्यैरागत्य वालिखिल्येन सह संग्रामं विधाय वालिखिल्यं बद्ध्वा देशग्रामादिकं भङ्क्त्वा स्वस्थानं प्राप्तः। इतश्च वालिखिल्यपत्न्या पुत्री प्रसूता। मन्त्रिभिः सुबुद्धिप्रमुखैः पुत्रो जात इति पुरे नगरे ग्रामे च आघोषितम्। तत्प्रभृति पुरुषवेषेणाद्ययावद्राज्यं रक्षितं, मातृमन्त्रिजनं मुक्त्वाऽन्यैर्नोपलक्षिता। म्लेच्छानां भूरि द्रव्यं यच्छामि परं ते म्लेच्छा मत्पितरं न मुञ्चन्ति। अद्यप्रभृति त्वच्छरणे समागताऽस्मि। यथा युष्माभिः सिंहोदराद्वज्रकर्णो मोचितस्तथा तेभ्यो मत्तातमपि मोचय। रामोऽप्युवाच–भो कल्याणमाल! यावत्तव पितरं म्लेच्छेभ्यो मोचयामस्तावत्त्वं पुंवेषेणास्थाः।

कल्याणमालोऽपि महाप्रसाद इत्युक्त्वा पुनः पुंवेषमकरोत्। मन्त्रिणोक्तम्–हे स्वामिन्! हे रामचन्द्र! भवदाज्ञयाऽस्या वरो लक्ष्मणो भवतु। रामचन्द्र उवाच–साम्प्रतं तातादेशाद्देशाद्देशान्तरं यामो वलमानो लक्ष्मण एनां परिणेष्यति। रामस्तद्वचनं प्रतिपद्य तत्र दिनत्रयं स्थित्वा निशाशेषे रामलक्ष्मणौ सीतासहितौ केनाप्यज्ञातौ निर्ययौ। कल्याणमालोऽपि प्रातरपश्यन्रामलक्ष्मणौ जानकीसहितौ विमनस्कः स्वं पुरमगात्। तथैव राज्यं चक्रे। क्रमेण रामोऽपि नर्मदां नदीमुत्तीर्य पथि चचाल। अग्रे पथिकैर्वार्यमाणोऽपि स विन्ध्याटवीं विवेश। कथंभूतामटवीम्? रौद्रां, भयंकरां, घोरां, बीभत्सां, मानुषोज्झितां, दुष्प्राप्योदकां, दुर्लङ्घ्यां, शिवाफूत्कारसम्पूर्णां, घूकघूत्कारां, सिंहनादसम्पूर्णामनेकश्वापदसंकीर्णां, वेतालकिलकिलां, दावानलदीप्तां, पुलिन्दगीतमण्डितां, कातरजनभयंकरामेवंविधां विन्ध्याटवीं सीतारामलक्ष्मणा विविशुः। तत्रादौ दक्षिणदिशि कण्टकिवृक्षस्थितः काको रटति, तथैवोत्तरदिशि स्थितोऽन्यकाकः क्षीरद्रुमोपविष्टो मधुरं विरौति। पुनः पुनस्तथैव जल्पन्तौ काकौ श्रुत्वा तेषां न विषादो न च हर्षो जातः। यतः–शकुनापशकुनौ दुर्बला गणयन्ति न च महान्तः। यतः—

सीह न जोइ चंदबल नवि जोइधणऋद्धि। एकलडुं सहसां भिडि जां साहस तां सिद्धि ॥१॥

रामलक्ष्मणावग्रे गच्छन्तावुदायुधं म्लेच्छसैन्यं ददृशतुः, भरतपालितां पृथ्वीमुपद्रोतुं स्वदेशान्निर्गतम्। युवा सेनापतिः सीतां दृष्ट्वा स्मरातुरश्चण्डवेगनामा स्वान्पत्तीनुच्चैरादिदेश भो भो सुभटाः! एतौ द्वौ पुरुषौ निनाश्य नाशयित्वा चैनां वरस्त्रियं हृत्वा समानयत मत्कृते। इति स्वामिवचनं श्रुत्वा म्लेच्छसैनिका धाविता रामलक्ष्मणौ हन्तुम्। लक्ष्मणोऽपि म्लेच्छान्दृष्ट्वा रामं प्रति बभाषे–भो आर्य! त्वं सीतया सह सुखं तिष्ठ। अमून्म्लेच्छाञ्शुनकानिव विद्रावयामि। इत्युक्त्वा लक्ष्मणो धनुरधिज्यं कृत्वाऽनादयत्।

तस्मादशक्ता दिशोदिशं पलायमाना म्लेच्छाः शरणलालसा राममुपाययुः। म्लेच्छराजोऽपि मुक्तशस्त्रो दीनास्यो मरणग्रस्तो लक्ष्मणग्रस्तः स्यन्दनादवतीर्य रामचन्द्रं नत्वाऽग्र उपाविशत्। म्लेच्छराज ऊचे—श्रूयतां देव! मच्चरितम्। कौशाम्ब्यां पुर्यां वैश्वानरो द्विजवरोऽस्ति। सावित्री नाम तत्पत्नी। तयोः पुत्रो रुद्रदेवो नाम विप्रोऽस्ति। सोऽहं बालत्वे पित्रा पालितः, क्रमेण यौवनं प्राप्तः, पित्रा परिणायितः। तथापि व्यसनग्रहग्रस्तः पित्रा गृहान्निष्कासितः, कालाक्षरितो व्यसनी जातोऽस्मि। एकस्मिन्दिने चौरिकां कुर्वन् खात्रमुखे धृतो, दुष्टै राजपुरुषै राज्ञोऽग्रे नीतः। कुपितेन राज्ञा शूलिकां रोपायितः। क्रूरै राजपुरुषैरुपशूलि नीतः। तत्र केनचिच्छ्रावकवणिजा दण्डं दत्त्वा मोचितः। वणिजोक्तम्—भो पुरुष! त्वमद्यप्रभृति चौरिकां मा कार्षीः। यतः—

चौर्यपापद्रुमस्येह वधबन्धादिकं फलम्। जायते परलोके तु फलं नरकवेदना॥१॥

इत्यादिशिक्षां दत्त्वा विसर्जितः सोऽहं चौरः, तं देशं त्यक्त्वा ग्रामाद्ग्रामान्तरं भ्रमन्नत्रागाम्, पल्लीपतिं सेवे। कतिचिद्वर्षान्ते पल्लीपतिना स्वपदे स्थापितो म्लेच्छाधिपो जातः, काकेतिदत्तनामाऽस्यां पल्ल्यां स्थितो देशं लुण्टयामि, देशाधिपान् बद्ध्वाऽऽनयामि, तेभ्यो दण्डं लात्वा मोचयामि, परं कस्याऽपि किमपि न चलति, सर्वेऽपि राजानो मम वशवर्तिनोऽहं कस्याऽपि वशो नास्मि, परं तव वशोऽस्मि, तव किङ्करोऽस्मि, तव गुणैः क्रीतोऽस्मि, किं करोमि, समादिश। तदा रामेणोक्तम्—वालिखिल्यं विमुञ्च। तच्छ्रुत्वा किरातराड् वालिखिल्यं मुमोच। वालिखिल्योऽपि राघवं नमश्चक्रे। रामाज्ञया काकेन पल्लीपतिना वालिखिल्यः कूबरपुरे निन्ये। राजा निजां सुतां कल्याणमालां पुंवेषामपश्यत्, मन्त्रिणं पप्रच्छ—भो मन्त्रिन्! एषा पुत्री पुंवेषं बिभर्ति तत्किम्? मन्त्रिणा जन्मत आरभ्य सर्वोऽपि वृत्तान्तः कथितः। कल्याणमाला लक्ष्मणाय दत्ता तदपि कथितम्। वालिखिल्येन राज्ञा स्वपुत्रीतः

कथितः। एवं राजामात्यौ परस्परं संमिलितौ सन्तुष्टौ सुखमनुभवन्तौ तिष्ठतः। काकोऽपि पल्लिपती राज्ञा वालिखिल्येन पूजितः स्वस्थचित्तः स्वस्थानं गतः। इति वालिखिल्यराजकल्याणमालापुत्रीकथानकम् ॥

रामोऽपि ततश्चलितो विन्ध्याटवीमतिक्रम्य तापीं महानदीं प्राप। तापीमुत्तीर्य तद्देशप्रान्तवर्तिनमरुणग्रामं नाम ग्रामं रामः संप्राप्तः। तत्र पिपासिता सीता जलं ययाचे। सलक्ष्मणो रामः क्रोध्यग्निहोत्रिकपिलविप्रगृहे गत्वा सलिलं याचितम्। सुशर्मा नाम्नी विप्रभार्या तेषां त्रयाणां पृथक्पृथगासने उपवेश्य शीतलं जलं पाययामास। यतः—कीदृशम्?

स्वच्छं सज्जनचित्तवल्लघुतरं दीनार्तवच्छीतलम्, पुत्रालिङ्गनवत्तथापि मधुरं बालस्य संजल्पवत्।
एलोशीरलवंगचन्दनलसत्कर्पूरसंवासितम्, पाटल्युत्पलकेतकीसुरभितं पानीयमापाययत् ॥१॥

एवंविधं पानीयं यावता पाययति, तावता तस्य पतिः कपिलविप्रः समागात्। स तु स्वभावेन रोषणः। पत्न्या जलं पायितं दृष्ट्वा पिशाच इव रुष्टो गेहिनीमभाषिष्ट। यथा–मलिनानां किमेतेषां प्रवेशो मम वेश्मनि पापीयसि ? त्वया दत्तः? अग्निहोत्रमशुचि कृतम्।

एवमाक्रोशिनं विप्रं, क्रूरं राजानुजः क्रुधा। करीवारभतोद्धृत्य परिभ्रमयितुं दिवि ॥१॥
रामोऽप्युवाच को नाम, कोपोऽस्मिन्कीटमात्रके। द्विजब्रुवं विब्रुवन्तमथामुं मुञ्च मानद ॥२॥
रामाज्ञया च सौमित्रिस्तं मुमोच शनैर्द्विजम्। ससीतालक्ष्मणो रामो निर्जगाम च तद्गृहात् ॥३॥

अथ ते त्रयोऽपि गच्छन्तः क्रमादेकं महदरण्यं प्रापुः। तत्रारण्ये स्थितयोः सीतासहितयो रामलक्ष्मणयोः कज्जलश्यामजलदो

वर्षाकालः समुपाययौ। तस्मिन्समये श्रीरामचन्द्रो वटतरोरधस्तस्थौ, लक्ष्मणं चोवाच–भो लक्ष्मण! वयं वर्षाकालमत्रैव वटतरोरधः स्थास्यामः।

आकर्ण्य तद्वचो भीतस्तन्न्यग्रोधाधिदैवतम्। इभकर्णाभिधो यक्षो गोकर्णं स्वप्रभुं ययौ ॥१॥

इभकर्णोऽपि यक्षो गोकर्णं यक्षं स्वामिनं प्रत्युवाच–हे स्वामिन्! मद्वटे द्वौ पुरुषौ सतेजस्कौ प्रतापाक्रान्तविश्वौ समागतौ स्तः। ताभ्यामहं निजावासाद्वटान्निर्वासितः, अतो हे प्रभो! ममात्राणस्य त्वं परित्राणं कुरुष्व। तौ हि मद्वटद्रुमे सकलं प्रावृषं स्थास्यतः। गोकर्णेन यक्षेणावधिज्ञानं प्रयुक्तम्, तेन ज्ञानेन ज्ञातम्, एतौ रामशार्ङ्गिणौ मम प्राघूर्णकौ। अनयोरर्थे एकां नवीनां नगरीं करोमि। इति चिन्तयित्वोत्तुंगवप्रां प्रोत्तुंगप्रासादां भाण्डपरिपूर्णां जिनप्रासादमण्डितां नवयोजनविस्तीर्णां द्वादशयोजनायामां रामपुरीं नाम पुरीं गोकर्णसुरो रामकृते कृतवान्। प्रातःसमये मागधेन मङ्गलपाठशब्देन बोधितो राजा चिन्तयति किमेष दृश्यते? सप्तमभूमिस्थ स्वर्णपल्यङ्कस्थं स्वं दृष्ट्वा विस्मयो जातः। का एषा नगरी, कोऽत्र राजा, एषा नगरी किं देवेन निर्मिता, मत्पुण्येन वा निष्पन्ना, इति चिन्तामपन्ने रामे वीणाव्यापृतकरो गोकर्णयक्षोऽवादीत्–हे स्वामिन्! हे रघुकुलोत्तंस! हे श्रीरामचन्द्र! त्वत्कृते एषा नगरी मया कृता तव पुण्येन, हे श्रीराम! त्वमत्र सुखं तिष्ठ, मया सपरिवारेण सेव्यमान इह तिष्ठ, सुखमनुभव यथाकालं यथारुचि, इति तेन यक्षेण प्रार्थितो यक्षयक्षिणीभिर्निषेवितः सीतासौमित्रिसंयुतः श्रीरामः ससुखं तत्रावतस्थे।

इतश्च कपिलनामा विप्रः समिधादिकृते तन्महारण्ये पर्शुपाणिः समाययौ। स विप्रो रामपुरीं दृष्ट्वा चिन्तयति, किमेषा नगरी वा इन्द्रजालं वा गान्धर्वपुरं वा। एवं चिन्ताप्रपन्नेन विप्रेण काचिन्नारीरूपेण यक्षिणीं दृष्ट्वा पृष्टमेषा का नगरी? कोऽत्र राजा?

नार्योक्तम्–एषा रामपुरी, अत्र रामचन्द्रो राजा, सीतालक्ष्मणयुतो राज्यं करोति, दीनादिभ्यो दानं ददाति, दयानिधिः। पुनर्नार्योक्तम्–भो विप्र! त्वमपि गत्वा रामचन्द्रं याचस्व, एष तव धनं दास्यति। विप्रेणोक्तम्–स रामो मया कथं लभ्यते? नार्योक्तम्–शृणु। अस्यां नगर्यां द्वारचतुष्टयं विद्यते, यक्षै रक्ष्यते, अनुपलक्षितो यथा तथा कश्चित्प्रवेशं नो लभते। अस्या नगर्याः पूर्वद्वारे ऋषभदेवचैत्यं वर्तते, तद्यथाविधि वन्दित्वा श्रावकीभूय यदा याति तदा प्रवेशं लभते, नान्यथा। कपिलोऽर्थार्थी, तद्वचनं श्रुत्वा साधूपान्ते गत्वा चैत्यवन्दनादिकं शिक्षित्वा लघुकर्मत्वात् क्रमेण श्रावकोऽभवत्, स्वां भार्यां श्राविकां व्यधात्। स कपिलोजन्मदौःस्थ्यप्रदग्धः पूर्वद्वारस्थिते जिनचैत्ये जिनप्रतिमां नत्वा रामपुरीं गत्वा राजद्वारं प्रविश्य मैथिलीरामलक्ष्मणानुपलक्ष्य दत्ताक्रोशान्स्मरन्नुच्चैर्बिभाय। तं नंष्टुमनसं सानुक्रोशो लक्ष्मणोऽब्रवीत्–भो द्विज! त्वं मा भैषीः, गच्छ मध्ये श्रीरामचन्द्रं याचस्व। ततः कपिलो गत्वा रामचन्द्रायाशिषं दत्त्वा धनं ययाचे, रामेण पृष्टः–भो विप्र! त्वं कुतः समायातः? विप्रेणोक्तम्–मां न वेत्सि? हे स्वामिन्! अहमरुणग्रामवासी कपिलनामा विप्रोऽस्मि। येन यूयमतिथीभूता मया दुर्वचसा क्रुष्टाः, लक्ष्मणेन मार्यमाणो युष्माभिर्मोचितः सोऽहं कपिलो नाम विप्रः। रामेण स विप्रः कृतार्थीकृतो भूरिद्रविणदानैः। रामेण विसृष्टो भूरिधनसंयुतः स्वं ग्रामं गतः कपिलोऽपि दीनादिभ्यो दानं ददानो नन्दावतंससूरीणां समीपे व्रतमग्रहीत्।

अथ वर्षायामतीतायां रामं यियासुं प्रेक्ष्य गोकर्णो यक्षो विनयावनम्रदेहः कृताञ्जलिरिदमूचे–भो स्वामिन्! मया यद्भक्तिस्खलितं किंचित्त्वयि कृतं, तत्त्वं क्षमस्व। यतो महापुरुषा नतवत्सला भवन्ति। इत्युक्त्वा रामं नत्वा स्वयंप्रभं नाम हारमदत्त, सौमित्रये चूडामणिं कुण्डलयुगलं च दत्त्वा सीताया ईप्सितदायिनीं वीणां च दत्त्वा रामं बहु संभाष्य गोकर्णयक्षस्तिरोदधे, स्वकृतां रामपुरीं

प सञ्जहे। इति गोकर्णयक्षकथानकम्।

तौ रामलक्ष्मणौ जानकीसहितौ पृथ्वीं क्रामन्तौ प्रतिदिनं चेलतुः, क्रमेण विजयपुरं नगरं प्रापतुः। तस्मिन्नगरे बहिरुद्याने मरुद्दिशि न्यग्रोधवृक्षतले वेश्मसन्निभे सीतारामलक्ष्मणा विशश्रमुः। सकलं दिनं तत्र वटे स्थित्वा निशायां लक्ष्मणं प्राहरिकत्वे मुक्त्वा सीतासहितो रामः सुखं सुष्वाप, लक्ष्मणो निशायाः प्राहरिकत्वे स्थितः। तस्मिन्नगरे महीधरो नाम राजा, तस्य पट्टदेवी नाम्नेन्द्राणी, तयोः पुत्री वनमालाऽस्ति। सा बाल्येऽपि सौमित्रेर्गुणसम्पदां श्रुत्वा रूपश्चाकर्ण्य वरवरणे कृतनिश्चया साऽन्यं वरं न वांछति। इतश्च महीधरो राजा दशरथं नृपं प्रव्रजितं श्रुत्वा रामलक्ष्मणौ च वनवासाय निर्गतौ श्रुत्वा मनसि विषण्णः। ततो महीधर इन्द्रपुरे नगरे चन्द्रनरेशितुः पुत्राय सुरेन्द्ररूपाय वनमालां ददौ। वनमाला तच्छ्रुत्वा मरणे कृतनिश्चया तस्यां रात्रौ तस्मिन्नुद्याने रामलक्ष्मणपवित्रिते वटे गता यक्षायतने प्रविश्य वनदेवतां प्रपूज्य वट आरुह्य वटाधिष्ठायिकां देवीं मनसि संस्मृत्य देवान्, जिनान्, गुरुन् स्मृत्वोचे—

सा प्रोचे प्राञ्जलिर्भूत्वा मातरो वनदेवताः। दिग्देव्यो व्योमदेव्यश्च सर्वाः शृणुत मद्वचः॥१॥
नाभूदिह भवे तावन्मम भर्ता स लक्ष्मणः। भूयाद्भवान्तरे तर्हि भक्तिस्तत्र ममाऽस्ति चेत्॥२॥
इत्युदित्वा कण्ठपाशं विधायोत्तरवाससा। बद्ध्वा च वटशाखायां द्राक्स्वात्मानमलम्बयत्॥३॥
भद्रे! मा साहसं कार्षीर्लक्ष्मणोऽहमिति ब्रुवन्। लक्ष्मणोऽपास्य तत्पाशं तामादायोत्ततार च॥४॥

प्रभातसमये जाते प्रबुद्धयो रामसीतयोर्लक्ष्मणोऽशेषं वनमालाया वृत्तान्तं शशंस। वनमालाऽपि ह्रियाऽधोमुखी तत्क्षणं जानकी-

रामचरणारविन्देभ्यो नमस्कारमकरोत्। इतश्च महीधरपत्नीन्द्राणी राज्ञी वनमालामपश्यन्ती करुणस्वरं पूत्चक्रे। तच्छ्रुत्वा महीधरो राट् सपरिकरोऽन्वेषणाय निर्ययौ। गत्वा सर्वत्र विलोकयन् यत्र ते रामलक्ष्मणाद्यास्तत्राजगाम। तत्र सीतासमीपे वनमालां दृष्ट्वा राजा चिन्तयति, एतौ कुमारिकातस्करौ। इति ज्ञात्वा राज्ञोक्तम्-हतैतान् कुमारीतस्करान्। इति श्रुत्वा सैनिका धाविवास्तान्सैनिकान्दृष्ट्वा रामानुजो धनुरास्फाल्य ज्यानादं कुर्वाणो महीधरसैन्यं विद्रावयामास। भग्नं महीधरसैन्यं दृष्ट्वा महीधरेणोपलक्षितो लक्ष्मणः पादयोः पतित्वा क्षामितः स्तुतश्च। लक्ष्मणेन महीधरो नीतो रामसमीपम्। सोऽपि रामं नत्वा स्तौति। यथा-धन्योऽहं यस्य गृहे यूयं प्राघूर्णकत्वेन समायाता मयाऽज्ञानवता यूयं न ज्ञाताः। अथ फलितं मे प्राचीनं कर्म, फलितः कल्पतरुः, तव साम्यं केनानुमीयते। यथा—

क्षारो वारिनिधिः कलंककलुषश्चन्द्रो रविस्तापकृत्, पर्जन्यश्चपलाशयः स्वयमुताहश्यः सुवर्णाचलः।
शून्यं व्योम सुधाद्विजिह्वविधुरा स्वर्धामधेनुः पशुः, काष्ठं कल्पतरुर्दृषत्सुरमणिस्तत् केन साम्यं सताम्॥१॥

इति श्रुत्वा पुनः कथयति-यूयं मत्सुतापुण्यैः प्रेर्यमाणा इहाऽऽगताः। मया वनमालापुत्री पूर्वं लक्ष्मणाय कल्पिताऽभूत्। हे रामचन्द्र! साम्प्रतं मया तव साक्षिकं दत्ता। इति कथयित्वा जानकीरामलक्ष्मणान्निजसद्मनि निनाय। भक्त्या भोजयामास।

इतश्च तेषु तिष्ठत्स्वतिवीर्यराड्दूतो महीधरं प्रत्यूचे-भो महीधर! नन्द्यावर्तपुराधीशोऽतिवीर्यो राजा भरतविग्रहे जाते साहाय्याय त्वामाह्वयति। तस्यापि भरतस्यापि बले भूभुजोऽभ्येयुः। अतस्त्वमपि महाबलत्वादतिवीर्येणाहूयसे। अथ लक्ष्मणो महीधरमपृच्छत्-भो महीधर! केन हेतुनाऽतिवीर्यस्य राज्ञो भरतेन सह विरोधः, किं विरोधस्य कारणम्? महीधरेणोक्तम्-अतिवीर्यो राडतिवीर्यत्वा-

त्करणाद्भक्तिमिच्छति। भरतोऽप्यस्याज्ञां न मन्यते। एतदेव विग्रहस्य कारणम्। रामो दूतं पृच्छति–भो दूत! अतिवीर्यस्य संगरे भरतः किं समर्थो भविष्यति? दूतोऽप्यूचे–अतिवीर्यो महाराजो भरतोऽपि च तथैव। अनयोः सङ्गरे जयलक्ष्म्या दोलायते। न ज्ञायते कस्य जयः, कस्य पराजयो वा भविष्यति। इति कथयित्वा स्थिते दूते महीधरेण राज्ञोचे–भो दूत! त्वं गच्छ। अहं सपरिकरस्त्वरितमेव समेष्यामि। इत्युक्त्वा प्रेषितो दूतः स्वस्थानं गतः। राजा महीधरश्चिन्तयति। धिगहो अतिवीर्यस्याल्पमेधस्त्वम्। यदस्मानाहूय भरतं योधयिष्यति। राम ऊचे महीधरं प्रति–भो महीधर! त्वमत्र तिष्ठ, तव सुतैर्बलसंयुतैः सहाहमेव यास्यामि। गत्वा यथोचितं करिष्यामि। महीधरेणोक्तम्–एवं भवतु। इत्युक्त्वा महीधरेण निजपुत्रबलपरिकरपरिवृतौ रामलक्ष्मणौ सीतासहितौ प्रेषितौ। तावपि नन्द्यावर्तपुरं ययतुः। तत्र वने स्थितस्य रामस्य तन्नगरोद्यानक्षेत्रदेवता राममभाषत–भो श्रीरामचन्द्र! किं तवाभिष्टं करोमि? रामेणोचे–भो देवि! तत्कुरु, येन मम सर्वेऽपि सैनिका स्त्रीरूपाकारधारिणो भवन्ति, अहमपि स्त्रीरूपो भवामि। यथा लोके वार्ता भवति अतिवीर्यः स्त्रिभिर्जित इति। तस्यायशःकृते सैन्यस्य स्त्रीरूपं कारापितम्। इतश्च रामेणातिवीर्यस्योपरि दूतः प्रेषितः। दूतेनोक्तम्–भो अतिवीर्य! तव साहाय्यकृते महीधरेण स्वसैन्यं प्रेषितमस्ति। अतिवीर्यस्य स्त्रीसैन्यमागतं श्रुत्वा महीधरस्योपरि कुपितोऽतिवीर्यो बाढस्वरेणैवं वक्ति–मुमूर्षुर्महीधरः स्वयं नागतोऽथ स्त्रीसैन्यं प्रेषितम्। भो भो सेवका! इदं सैन्यमयशस्करं द्रुतं निर्वासयतामेकोऽप्यहं भरतं जेष्यामि, एभिः सहायैः किं स्यात्। पुनरतिवीर्येणोक्तम्–भो सामंताः! पश्यन्तु महीधरो हास्यकृत इह स्त्रीसैन्यं प्राहिणोत्। एवं प्रोच्यमानेऽतिवीर्ये तत्क्षणादेव स्त्रीसैन्यं द्वारमागतम्। अतिवीर्यराजेनोक्तम्–भो सामन्ता! एताः स्त्रियो गले धृत्वा निर्वासयताम्। ततः सामन्ताः सपदातयः समुत्थाय स्त्रीसैन्यमुपद्रोतुं यावद्यान्ति तावता रामेणेभस्तम्भमुन्मूल्य तेन स्तम्भेन हत्वा सामन्ता भूमौ

पातिताः। तेन मानभङ्गेनातिवीर्यो भृशं कुपितो दारुणं खड्गमाकृष्य रणाय स्वयमुत्तस्थौ। अथ लक्ष्मणस्तत्खड्गमाच्छिद्य राजानं केशेष्वाचकर्ष। क्रमेण बद्धाऽतिवीर्यं राममसीपं निन्ये। सीतासहितेन रामेण कृपापरेण मोचितोऽतिवीर्यः सीतारामलक्ष्मणानां पादौ निपत्य भरतसेवां प्रत्यपद्यत। क्षेत्रदेवता सर्वेषां सैनिकानां स्त्रीवेषं सञ्जहार। तदाऽतिवीर्योऽपि रामलक्ष्मणावश्लाघीत्। ततस्तयोर्महतीं पूजां विदधौ। संतोषितौ रामलक्ष्मणौ। अतिवीर्यो मानध्वंसेन दध्यौ–अहं किमन्यं नृपं सेविष्य इत्यहंकारपरोऽतिवीर्यो दीक्षार्थी विजयरथाख्ये निजपुत्रे राज्यं न्यस्य प्रव्रजन् रामेण निषिद्धोऽपि प्राव्राजीत्। सो विजयरथो राजा रतिमालाऽभिधां निजभगिनीं लक्ष्मणाय ददौ। ततः ससैन्यो रामो विजयपुरं पत्तनं ययौ। विजयरथो भरतं सेवितुमयोध्यां गतः। भरतोऽपि विज्ञाततदुदंतो गरिमावलो नत्रत्नलो विजयरथं बहु मेने। विजयरथोऽपि निजभगिनीं विजयसुन्दरीं स्त्रीसारं भरताय ददौ। तदा तत्र विहरन्न-तिवीर्यो मुनिरागयौ। भरतस्तं साधुं वन्दित्वा क्षमयामास। तद्देशनां श्रुत्वा हर्षितो भरतो विजयरथं विसृष्टवान्। सोऽपि नन्द्या वर्तपुरं ययौ। तत्र गत्वा स्वनगरे सुखमनुभवन्नास्ते। इतश्च रामचन्द्रो महीधरमनुज्ञाप्य वनाय गन्तुं समुद्यतः। तदा वनमाला लक्ष्मणमनुपियासुरेवमुवाच—हे प्राणनाथ! मम पाणिग्रहणं कृत्वा मां सहैव नय। यदि न नेष्यसि तदा प्राणत्यागं करिष्यामि। लक्ष्मण उवाच–हे सुन्दरि! वनमाले! अहं भ्रातुः शुश्रूषकोऽस्मि। साम्प्रतं पाणिग्रहणं कृत्वा भ्रातुः शुश्रूषां कथं करोमि? तव पाणिग्रहणे कृते भ्रातुःशुश्रूषा न भवति। अतस्त्वं गृहे तिष्ठ। पुनः समेष्यामि तदा त्वां सह नेष्यामि। तया रात्रिभोजनशपथः कारितः, लक्ष्मणेन कृतः। यथा–हे सुन्दरि! रात्रिभोजिनां पुरुषाणां पापेन लिप्ये यदहं भूयोऽपि न चेदायामि। इत्युक्ते तया मानितम्। ततश्चलितौ रामलक्ष्मणौ सीतासहितौ। इति राजमहीधरपुत्रीवनमालाकथा।

इतश्च रामलक्ष्मणौ क्रमाद्वनानि लङ्घित्वा क्षेमाञ्जलिं पुरीं प्रापतुः। तन्नगरीबहिरुद्याने लक्ष्मणानीतैः फलैर्जानकीकरसंस्कृत रामो बुभुजे। तत्र राममनुज्ञाप्य कौतुकाल्लक्ष्मणः पुरीं प्राविशत्। ततः सौमित्रिरुच्चैरित्याघोषणामश्रौषीत्। यत्—

शक्तिप्रहारं सहते योऽमुष्य पृथिवीपतेः। तस्मै परिणयनाय ददात्येष स्वकन्यकाम् ॥१॥

तत्पटहं श्रुत्वा लक्ष्मणेन कश्चित्तन्नगरवासी पुमान् पृष्ट आघोषणाहेतुमवदत्—अत्रास्ति शत्रुदमनो नाम राजा। बलीयान् वर्तते। तस्य राज्ञः कनकादेवी पट्टराज्ञी। तयोः पुत्री जितपद्मा नाम्नी। सा यौवनवती पित्रा दृष्टा। वरपरीक्षार्थमिदमारभ्यते। यः शक्तिप्रहारं सहते तस्यैव कन्या दीयत इति पटहकारणम्। परं तादृशः कोऽपि नास्ति, यः शक्तिप्रहारं सहते। तच्छ्रुत्वा लक्ष्मणस्तं राजानमपृच्छत्—भो राजन्! त्वया किमारब्धं शक्तिप्रहारादिकम्? राज्ञोक्तम्—त्वं कोऽसि? लक्ष्मणेनोक्तम्—भरतदूतोऽस्मि केनचिदर्थेन गच्छन्निमां तव कन्यां श्रुत्वा परिणेतुमिहागतम्। राज्ञोक्तम्—भो दूत! मम शक्तिघातं सहिष्यसे? दूतेनोक्तम्—किमेकेन घातेन? पञ्चप्रहारान् सहिष्ये। जितपद्माऽपि राजकन्या तदानीं रामानुजं दृष्ट्वा तत्क्षणादेव मदनातुरा जाता। तया पुत्र्या लक्ष्मणाऽनुरागिण्या राजा वार्यमाणोऽपि लक्ष्मणाय दुःसहं शक्तिपञ्चकं चिक्षेप। लक्ष्मणस्तां शक्तिमग्रहीत्। यथा—

द्वे कराभ्यां द्वे कक्षाभ्यां दन्तैरेकां च लक्ष्मणः। अग्रहीज्जितपद्मायाः कन्याया मनसा सह ॥१॥

तत्स्वरूपं शक्तिघातादिकं दृष्ट्वा विस्मिता जितपद्मा शत्रुदमनराजाज्ञया लक्ष्मणकण्ठे वरमालामक्षिपत्। राज्ञोक्तम्—इयं कन्योद्वहताम्। लक्ष्मण ऊचे—ममाग्रजो रामो दशरथपुत्रो बाह्योपवनेऽस्ति। अहं तस्य सदा परवशोऽस्मि स राजा। शत्रुदमनस्तौ रामलक्ष्मणौ ज्ञात्वा तत्र गत्वा नमश्चक्रे, स्ववेश्मनि तावानिनाय। स राजा महत्या प्रतिपत्त्या राममपूजयत्। सामान्योऽप्यतिथिः पूज्यः

किंपुनः पुरुषोत्तमः। ततोऽपि रामश्चलितः। लक्ष्मणो महीपतिमुवाच—त्वत्सुतां वलमानः परिणेष्यामि। इति शत्रुदमनराजपुत्री जितपद्माकथानकम्।

ततो रामलक्ष्मणौ सीतासहितौ निशायां निर्येयतुः। पथि चलन्तौ सायं वंशस्थलं नाम पत्तनं प्रापतुर्वंशशैलतटस्थितम्। तस्मिन्नगरे स भूपतिं लोकं भयाकुलं विलोक्य रामः कंचिन्नरं पप्रच्छ–भो महापुरुष! अत्र ग्रामे लोको भयाकुलो दृश्यते, तत्किं भयस्य कारणम्? तच्छ्रुत्वा पुरुषेणोक्तम्–भो महापुरुषौ! अद्य तार्तीयिको वासरो जातः, अमुष्मिन्पर्वते रात्रौ रौद्रो ध्वनिरुच्छलति। तद्भयादस्योऽखिलो जनो रात्रिमन्यत्र गमयति, प्रातश्च पुनरायाति। कष्टा नित्यमियं स्थितिः। ततः कौतुकाल्लक्ष्मणेन प्रेरितो रामस्तं गिरिमारुरोह। रामस्तत्र पर्वते कायोत्सर्गस्थितौ कुलभूषणदेशभूषणनामानौ द्वौ मुनी अपश्यत्। तौ रामलक्ष्मणौ सीतासहितौ तौ द्वौ मुनी भक्त्या ववंदाते। तदग्रे रामो गोकर्णयक्षार्पितां वल्लकीमवादयत्। वादयित्वा सौमित्रिसहितो रामो हृद्यं मनोभीष्टं गीतं जगौ। तदग्रे सीता देवी ननर्त। तदार्कोऽस्तं ययौ। रात्रिर्बभूव। विकृतानेकवेतालोऽनलप्रभो देव आगात्। कीदृशोऽसित-मूर्त्या भयंकरः अट्टहासैर्नभः स्फोटयन् तौ महर्षी उपद्रोतुं प्रावर्तत। तं देवं दृष्ट्वा रामलक्ष्मणौ चुकुपतुः। सीतां साधूपान्ते मुक्त्वा रामलक्ष्मणौ तं निहंतुं समुत्तस्थाते। देवोऽपि तयोस्तेजोऽसहमानो निजं स्थानं ययौ। तयोः साध्वोः केवलज्ञानमुत्पेदे। देवैः केवल-ज्ञानमहिमा विदधे। रामेण नत्वा पृष्टम्–भो स्वामिन्! युवयोर्देवेन सह किं विरोधकारणम्? कुलभूषणदेशभूषणयोर्मध्ये कुलभू-षणः प्राह। पद्मिन्यां नगर्यां विजयपर्वतो नाम राजा, तस्य राज्ञोऽमृतस्वरो नाम दूतोऽस्ति, तस्य दूतस्य उपयोगानाम्नी पत्नी, तत्पुत्रा उदितमुदितनामानौ। अमृतस्वरस्यापि वसुभूतिनाम मित्रमस्ति। स वसुभूतिविप्रो मित्रपत्न्युपयोगया सह रेमे। उपयोगाऽपि

तदासक्ता कथयति–यद् हे वसुभूते ! अमृतस्वरं मत्पतिं मारय तथा यथा कोऽपि न जानाति। एकस्मिन्दिने नृपादेशादमृतस्वरोऽन्यदेशे गतो, स वसुभूतिरपि तत्र गत्वा मिलितः, मार्गे गच्छता वसुभूतिविप्रेण छलं लब्ध्वाऽमृतस्वरो निपातितः। तत्स्वरूपं तत्पत्न्युपयोगाया निवेदितम् , तयोक्तम्–चर कृतं संयोगविघ्नकृन्निघ्नता त्वया। अथेमौ पुत्रावपि मारय। यथा निर्मक्षिकं मधु सुखेन गृह्यते। तथाऽऽवयोः संगः सुखेन स्यात्। तेन पापिना वसुभूतिविप्रेण तदपि प्रतिपन्नम्। धिक्कामचेष्टितम्। काममोहितः पुण्यं पापं न विचारयति। यतः—

अनुचितकर्मारम्भः स्वजनविरोधो बलीयसां स्पर्धा। प्रमदाजनविश्वासो मृत्युद्वाराणि चत्वारि ॥१॥

अहो ! पापिपुरुषाणां पापसंख्या नास्ति, यथा मेघस्य धारासंख्या, दिवि तारासंख्या, भूतले रेणुसंख्या, समुद्रे मत्स्यसंख्या, मेरुगिरौ सुवर्णसंख्या, मातरि स्नेहसंख्या, सर्वज्ञे गुणसंख्या, दुर्जने दोषसंख्या, आकाशे प्रदेशसंख्या, जीवे गति संख्या, सत्पात्रदाने पुण्यसंख्या नास्ति, तथा दुश्चारिणि पापसंख्या नास्ति। तया पापिन्या पुत्रमारणं प्रोक्तं, वसुभूतिविप्रेण मानितं, परं तयो र्वचो दैवाद्वसुभूतिपत्न्या श्रुतं, तदीर्ष्ययोदितमुदितयोराख्यातम्–

उदितेन रुषा सद्यो वसुभूतिर्निपातितः। मृत्वैष नलपल्लयां स म्लेच्छः समुदपद्यत ॥२॥

उदितमुदितौ तद्वैराग्यात्साधूपान्ते धर्मं श्रुत्वा प्रव्रज्यामाददाते। संमेते चैत्यानि वन्दितुमुदितमुदितौ साधू प्रचेलतुः। क्रमेण विहरन्तौ द्वौ भ्रातृसाधू तां पल्लीं वसुभूतिजीवम्लेच्छाधिष्ठितां समीयतुः। पूर्ववैराद्वसुभूतिजीवो म्लेच्छः तावुदितमुदितौ साधू निरीक्ष्य हन्तुं दधावे, म्लेच्छाधिपेन वारितः। स म्लेच्छाधिपः पूर्वभवे खगोऽभूत्। उदितमुदितजीवाभ्यां व्याधान्मोचितः। तेन

पूर्वस्नेहेन म्लेच्छाधिपेनास्मिन्भवे तौ साधू क्रमेण विहरन्तौ संमेत एत्य चैत्यानि ववन्दाते। यतः—

सयं पमज्जणे पुण्णं सहस्सं च विलेवणे। सयसाहस्सिआ माला अणंतं गीअवाइए ॥१॥

किं बहुना—नेत्रानन्दकरी भवोदधितरी श्रेयस्तरोर्मञ्जरी, हर्षोत्कर्षशुभप्रवाहलहरी व्यापल्लताधूमरी।

श्रीमद्धर्ममहानरेन्द्रनगरी रागद्विषां जित्वरी, पूजा श्रीजिनपुङ्गवस्य विहिता क्षेमंकरी देहिनाम् ॥२॥

पुष्पात्पुण्यफलं जलाद्विमलता सद्धूपधूपाद्विपद्-, चिद्ध्वंसो विविधात्तमोपहननं दीपाद् घृतात्स्निग्धता।

भद्रं चाक्षतपात्रतः सुरभिता [लेपात्] वारे फलाद् भूपता, नृणां पूजनमष्टधा जिनपतेरौचित्यलभ्यं फलम् ॥

एवं चैत्यानि वंदित्वा कतिचिद्वर्षाणि पृथिव्यां विहृत्यान्तसमये संमेतशैले पर्वतेऽनशनं विधाय मृत्वा महाशुक्रे सुरोत्तमौ जातौ सुन्दरसुकेशनामानौ महर्द्धिकौ। भवं भ्रान्त्वा वसुभूतिजीवो म्लेच्छः कथंचन मानुषं जन्मावाप। तस्मिन्भवे तापसोऽभूत्। स तापसो मृत्वा ज्योतिष्केषु देवो जातः। यतः—

तावस जा जोइसिआ चरगपरिव्वाय बंभलोगो जा। जा सहस्सारो पंचिंदितिरिअ जा अच्चुओ सड्ढा ॥१॥

इति वचनाज्ज्योतिष्केपूत्पन्नो धूमकेतुर्नामा मिथ्यादृष्टिर्दुराशयः। उदितमुदितजीवौ महाशुक्राच्च्युत्वाऽत्र भरते रिष्टपुरे नगरे प्रियचन्द्रमहीपतेः पद्मावत्याः पट्टराज्ञ्याः कुक्षौ पुत्रत्वेनाजायेताम्, रत्नरथचित्ररथनामानौ। धूमकेतुरपि देवभवाच्च्युत्वा तस्यैव राज्ञः कनकाभानाम्न्या देव्या अनुद्धरनामा पुत्रो जातः। स रत्नरथे चित्ररथे च समत्सरोऽभूत्। तौ द्वौ भ्रातरौ तस्योपरि न मात्सर्यं बिभरांचक्रतुः। स्वायुःपर्यन्ते प्रियंवदो राट् रत्नरथे राज्यं न्यस्य द्वयोः पुत्रयोः पुनर्यौवराज्यं न्यस्यानशनं कृत्वा षड्दिनान्यनशनं

प्रपाल्य मृत्वा सौधर्मे सुरोऽभवत्। कश्चिद्राजा श्रीप्रभां स्वां पुत्रीमनुद्धरे याच्यमानेऽपि रत्नरथस्य ददौ। ततोऽनुद्धरः क्रुद्धो राज्यं मुक्त्वाऽन्यत्र गतो रत्नरथस्योर्वीमलुण्टयत्। ततो रत्नरथेन स छले पातयित्वा जगृहे। बहुधा विडम्ब्य मुमुचे। विडम्बितो दुःखेन तापसोऽभूत्। स्त्रीसङ्गाद्भ्रष्टशीलो निजं तपो मोघीचक्रे। ततो मृत्वा मनुष्येषूत्पन्नः। तत्राऽपि तापसीभूय भूयोऽज्ञानकं तपश्चकार। एवं बहून्भवान्कृत्वा तापसो भूत्वा ततोऽपि मृत्वा ज्योतिष्कदेवेऽनलप्रभनामा देवो जातः। सोऽयं देवः। तौ रत्नरथचित्ररथौ राजयुवराजानौ दीक्षां जगृहतुः। सम्यग्दीक्षां प्रपाल्याच्युते कल्पेऽतिबलमहाबलनामानौ देवौ बभूवतुः प्रवरर्द्धिकौ। आयुःपर्यन्तेऽच्युतदेवलोकाच्च्युत्वा सिद्धार्थपुरे नगरे क्षेमंकरमहीपतेर्विमलानाम्न्याः पट्टदेव्याः कुक्षाववातेरतुः। क्रमेण विमलाराज्ञ्या उभौ सुतावजायेताम् कुलभूषणदेशभूषणनामानौ। क्रमेणाष्टवार्षिकौ जातौ। पित्रा घोषस्योपाध्यायस्य समीपे पाठितौ सर्वकला द्वादशाब्दीं यावदपठाव। त्रयोदशाब्दे घोषेणोपाध्यायेन सह नृपान्तिके यान्तौ राजवेश्मनि वातायनस्थितां कांचित्कन्यामपश्याव। तस्यां जातानुरागौ च सद्योऽपि विमनायितौ राजोपान्तिके घोषेण गुरुणा सह गतौ। गत्वा वयमखिलाः कला अदर्शयाव। राज्ञोपाध्यायोऽर्चितो भूरिद्रव्येण तोषितो निजं धाम जगाम। आवां मातरं नन्तुं गतौ। तत्रावां मातुरन्तिके तां कन्यामपश्यताम्। मात्रा प्रोक्तम्–भो पुत्रौ! एषा युवयोः स्वसा कनकप्रभानाम्ना घोषोपाध्यायसदने युवयोस्तस्थुषोरियं जाता द्वादशवार्षिक्यभवत्। परं भवद्भ्यां नोपलक्षिता।

तच्छ्रुत्वा लज्जितावावामज्ञानात्स्वसृकांक्षिणौ। क्षणाद्वैराग्यमापन्नौ प्राव्रजावान्तिके गुरोः ॥१॥
तप्यमानौ तपस्तीव्रमिहायातौ महागिरौ। कायोत्सर्गेण चास्थाव निरपेक्षौ वपुष्यपि ॥२॥

हे रामलक्ष्मणौ! आवयोर्वियोगेन पिता क्षेमंकरो राजाऽनशनं गृहीत्वा मृतः। गरुडेशोऽभवद्देवो महालोचननामकः। स देवो

गरुडेश आवयोरुपसर्गं विज्ञायासनकम्पेन सम्प्रतीहायातः प्राग्जन्मस्नेहमोहितः सोऽयं देवो गारुडेशः समीपस्थो मुनिना दर्शितः। इतश्च वसुभूतिविप्रजीवोऽनिलप्रभो ज्योतिष्कदेवोऽनन्तवीर्यं महामुनिकेवलिनः समीपे देवैः परिवृतोऽगच्छत्, गत्वोपाविशत्। तस्मिन्समये केनचिच्छिष्येणेति देशनान्ते पृष्टम्–हे स्वामिन्! अस्मिन्मुनिसुव्रततीर्थे कः पश्चात्तव केवली भविष्यति। अनन्तवीर्य-केवलिनोक्तम्–मम निर्वाणात्पाश्चात्यकेवलिनौ कुलभूषणदेशभूषणनामानौ भ्रातरौ द्वौ भविष्यतः। तद्वचोऽनिलप्रभो ज्योतिष्कदेवः पूर्वभवमत्सरी श्रुत्वा निजस्थानं गतः। अन्यदा विभंगेन ज्ञात्वा कायोत्सर्गस्थितौ मुनी दृष्ट्वा देवेन चिंतितमनन्तवीर्यवचनमन्यथा करोमि। प्राग्जन्मवैराच्चायं वसुभूतिविप्रजीवो देव आवयोरुपसर्गं करोति तस्योपसर्गं कुर्वाणस्य चत्वारि दिनान्यतीयुः। अथायाता यत्र युवाम्। युष्मद्भीत्याऽनशच्च सः। आवयोः कर्मक्षयात्केवलं समजायत। अयं सुरः पूर्वभववैरी वसुभूतिजीवो देव उपसर्गपरोऽपि कर्मक्षयसहायोऽभूत्। भो रामचन्द्र! यस्य मुनेः कथानकं कथितम्, तावावाम् कुलभूषणदेशभूषणनामानौ भ्रातरौ। महालोचनदे-वोऽपि गरुडाधिपः कुलभूषणदेशभूषणयोः पिता रामं प्रत्यूचे–भो रामचन्द्र! त्वं साध्वकार्षीः, येन कारणेन त्वया साधुसेवा कृता, तेन तुष्टोऽहं तव किं प्रत्युपकरोमि। रामेणोक्तम्–अहं कस्यापि नार्थयामि। देवेनोक्तम्–तथापि किमपि साहाय्यं करिष्यामी-त्युक्त्वा देवो गरुडाधिपः स्वस्थानमगमत्।

अथ वंशस्थलाधीशो राजा नाम्ना सुरप्रभः। तत्रागत्य नमश्चक्रे राममानर्च चोच्चकैः ॥१॥

रामाज्ञया तत्र शैले सोऽर्हच्चैत्यान्यकारयत्। रामनाम्ना रामगिरिर्गिरिः सोऽभूत्तदादि च ॥२॥

॥ इति कुलभूषणदेशभूषणकथानकम् ॥

श्रीरामलक्ष्मणौ सीतासहितौ सुरप्रभं राजानमापृच्छ्य प्रतस्थाते । क्रमेण यान्तौ भयंकरं दण्डकारण्यं प्रविविशतुः । कथंभूतमरण्यम् ? अनेकोत्कटवृक्षगहनं विविधव्यालशार्दूलकालककालवेतालक्षेत्रपालशाकिनीडाकिनीयोगिनीयक्षराक्षसगन्धर्वविद्याधरखेचरभूतप्रेतपिशाचक्रोदिकशारिकोलडंबडवर भिल्लरवरशबरतस्करगरभकासरव्याघ्रसिंहशृगालऋक्षशूकरादिश्वापदरौद्राकारघूकशिवाफेत्कारडाकिनीडमरडात्कारयक्षराक्षसमहान्दोकारमेवविध, भयंकर दण्डकारण्यं विविशतुः । निर्भयौ रामलक्ष्मणौ सीतासहितौ दण्डकारण्यमध्ये चेलतुः । अरण्यमध्ये गत्वा महागिरिगुहामध्य आवासं विधाय तत्र काकुत्स्थः सुस्थितस्तस्थौ स्ववेश्मनि स्थित इव । तत्र भोजनवेलाया लक्ष्मणो वने गत्वाऽरण्यधान्यान्यानीय सीताया अर्पयामास । धान्यनामानि यथा–रक्तशालिमहाशालिकमलशालिसुवर्णशालिसुगन्धशालिसाठिआप्रभृति मनोऽभिप्सिताखण्डशालितण्डुलानि ततो वितुषा मुद्गदालिस्तुषरहिता पीतवर्णसहिता लघुकरैः खण्डिता सुवर्णवणमण्डिता बहुजलेन याचिता मिताग्निसस्कृता शरीरपुष्टिकारिणी दर्शनमनोहारिणी यादृशी शालिस्तादृशी दालिः । अथ घृतम्–सद्यस्कतापितं प्रीत्या नामितं माञ्जिष्ठवर्णं वृद्धिं करोति कर्णं सौरभ्यामेयं नासापुटपेयं साक्षादेवामृतमीदृशं घृतम् । तीमनानि–बहुतैलघृततलितानि वटकवटिकापर्पटपर्पटिकादीनि मरिचचमत्कारात्यन्तसुकुमारतिक्तकटुकषायाम्लमधुर जीरकानेकविधतीमनानि सज्जितानि । दुग्धम्—

दुग्ध सहावसुद्धं सक्करकढिअं पयोगपित्तहर । घटघट घट्टकपिद्धं तं दुग्धं अमिअ सारित्थं ॥१॥

इत्यादि भोज्य सीतया यावत्सज्जितं तावता भोजनवेलायां चारणौ मुनीसुगुप्तत्रिगुप्तनामानौ नभसा समुपेयतुः । तौ साधू द्विमासोपोषितौ पारणार्थं सीतागृह आगतौ दृष्ट्वा हर्षिता सीता ।

आनन्दाश्रूणि रोमाञ्चो बहुमानं प्रियं वचः। किं चानुमोदनापात्रदानभूषणपञ्चकम् ॥१॥

अनादरो विलम्बश्च वैमुख्यं विप्रियं वचः। पश्चात्तापश्च पञ्चामी दानदूषणपञ्चकम् ॥२॥

दानभूषणभूषितं दूषणवर्जितं सीता मुनिभ्यां दानं ददौ। रामलक्ष्मणावपि भक्त्या वंदित्वा स्तुत्वा दानभूषणभूषितं दानं ददतुः। यथा—

यथोचितैरन्नपानैः सीता तौ प्रत्यलाभयत्। तदा देवैर्विदधिरे रत्नगन्धाम्बुवृष्टयः ॥१॥

तन्मुनिदानं दृष्ट्वा द्वौ सुरौ जम्बूद्वीपाधीशौ रत्नजटीविद्याधरश्चैते त्रयः श्रीरामचन्द्राय प्रीताः सन्तः साश्वं रथं ददुः। तन्मुनिदानभूमौ गन्धाम्बुवृष्टिगन्धेन गन्धनामा पक्षी कुष्ठरोगपीडितः पादपादुत्तीर्य तद्वास्तव्यः समाययौ। स पक्षी मुनिदर्शनात् सञ्जातजातिस्मरणो मूर्च्छया भूमौ पपात। सीता तं गन्धपक्षिणं शीतलाम्भोभिः सिषेच। लब्धसंज्ञो गन्धपक्षी समुत्थाय साधुपादेष्वपतत्। साध्वोः संस्पर्शोषधीलब्ध्या स पक्षी तत्क्षणान्नीरोगमोऽभवत्। किं विशिष्टः पक्षी जातः। यतः—

पक्षौ हैमावजायेतां चंचूर्विद्रुमविभ्रमा। पद्मरागप्रभौ पादौ नानारत्नप्रभं वपुः ॥१॥

रत्नाङ्कुरश्रेणिनिभा जटाः शिरसि चाभवन्। जटायुर्नाम तस्याभूत्ततः प्रभृति पक्षिणः ॥२॥युग्मम्।

तं पक्षिश्रेष्ठं दृष्ट्वा रामस्तौ महर्षी अपृच्छत्। भो साधू! एष गृध्रपक्षी मांसाशी युवयोः पादौ पतित्वा शान्तः कस्माज्जातः? पक्षिगिरा पक्षिराडुचे—हे भगवन्! अहं पूर्वमत्यन्तविरूपः कुष्ठाभिभूतो भूत्वा साम्प्रतं हेमरत्नोत्करद्युतिः कथं जातः? सुगुप्तर्षिरप्याचख्यौ—भो राम! भो पक्षिराट्! श्रूयताम्—राजदण्डकीकथा कथ्यते। यथा—

कुम्भकारकटं नाम नगरम्, तत्र दण्डकी नाम राजाऽभूत्। तदा श्रावस्त्यां नगर्यां राजा जितशत्रुरजायत। तत्पत्नी धारणी राज्ञी। तयोः पुत्रः स्कन्दको नाम कुमारो मारसन्निभोऽस्ति। पुत्री पुरन्दरयशानामाऽस्ति सा पुरन्दरयशाः कुम्भकारकटस्वामिना दण्डकिराजेन परिणीताऽस्ति। अन्यदा दण्डकी राजा दूतं पालकनामविप्रं केनाप्यर्थेन जितशत्रुनृपान्तिके प्राहिणोत्। तस्मिन्समये राजसभास्थितो जितशत्रुनृपः सपुत्रः स्कन्दककुमारेण सहितोऽर्हद्धर्मगोष्ठीपरो यावदभवत्तावता पालकः कुधीर्दुर्भव्यो जैनं धर्मं दूषयितुमारेभे। स दुराशयः पालकः स्कन्दककुमारेण राजपुत्रेण सत्यसंवादपूर्वकं धर्मयुक्त्या निरुत्तरीचक्रे। सभ्यलोकैस्तिरस्कृतो निन्दितो गर्हितो राज्ञा जितशत्रुणा विसृष्टः स्कन्दकस्योपरि प्रद्वेषमुद्वहन्स्वस्थानं गतः। सत्योक्तितो द्वेषो भवत्येव परं सत्योक्तिर्न मोक्तव्या। यतः—

रुस उचापरोमा वा चिसंवापरियत्तओ। भासिअव्वा हिआ भासा सपक्खगुणकारिआ ॥१॥

वाङ्मात्रसारा परमार्थबाह्या, न दुर्लभाश्चित्रकरा मनुष्याः।
ते दुर्लभा ये जगतो हिताय, धर्मे स्थिता धर्ममुदाहरन्ति ॥२॥

तथैव स्कन्दककुमारो धर्मे स्थितो धर्मं साधुसमीपे श्रुत्वा विरक्तश्च। अन्यदा स्कन्दककुमारो राजपुत्रः पञ्चशतराजपुत्रैः परिवृतो मुनिसुव्रतस्वामिपादान्ते व्रतमाददे। क्रमेण पठितसिद्धान्तः स्वामिनाऽऽचार्यपदे स्थापितः। स स्कन्दकाचार्यो मुनिसुव्रतजिनं पप्रच्छ स्वामिन्! अहं तवाज्ञया कुंभकारकटे नगरे यामि। स्वामिनोक्तम्—तन्नगरे तव मारणान्तकोपसर्गो भविष्यति। पुनः स्कन्दकाचार्येणोक्तम्—स्वामिन्! आराधको वा विराधको भविष्यामि? स्वामिनोक्तम्—त्वां विनाऽन्ये सर्वेऽप्याराधका भविष्यन्ति। स्कन्दकेनोक्तम्—

मयि विराधकेऽन्ये आराधका भवन्तु। ममैतावत्तैवालम्। अपूर्वोपार्जितं केनापि लङ्घितुं न शक्यम्। यतः—

यस्मिन्देशे यदाकाले यन्मुहूर्ते च यद्दिने। हानिर्वृद्धिर्यशोलाभस्तत्तथा न तदन्यथा ॥१॥

स्कन्दकाचार्यः स्वामिनं पृष्ट्वा स्वामिना नोक्तो न निषिद्धः। पञ्चशतीमुनियुतः क्रमेण गच्छन् कुम्भकारकटं नगरमासादयामास। कुम्भकारकटे पूर्ववने समवसृतः। उद्यानपालकेन वर्धापितो राजा वर्धापनिकां दत्त्वा सपरिकरो वन्दनाय विनिर्गतः। गुरुं वन्दित्वा पुरो निषण्णो राजा देशनां शृणोति यथा—

धर्मो जगतः सारः सर्वसुखानां प्रधानहेतुत्वात्। तस्योत्पत्तिर्मनुजाः सारं तेनैव मानुष्यम् ॥१॥

भो भविकाः! एवंविधं मानुष्यमवाप्य धर्मे यत्नो विधेयः। इत्यादिदेशनां श्रुत्वा राजा राज्ञी श्रेष्ठिसेनापत्यादिलोकः स्वस्थानं गतः। एवं दिनानि यान्ति। तं दृष्ट्वा पालकः क्रूरकर्मा तं पूर्वपराभवं संस्मरन्नुपायं करोति। अहो! विरोधो दुःखकारणम्। यतः—

विरोधो नैव कर्तव्यो साक्षरेभ्यो विशेषतः। त एव विपरीताः स्यू राक्षसा एव केवलम् ॥१॥

स पालको राक्षसप्रायोऽन्तःकोपनो दक्षिणोद्याने पञ्चशतसुभटयोग्यान् शस्त्रान् भूमौ न्यखानयत्। ततः पालकः साधुसमीपे गत्वा नत्वैवमवादीत्—हे स्वामिन्! अत्र वने राजा क्रीडार्थं समागमिष्यति अतो यूयं दक्षिणवने समवसरत। इत्युक्त्वा वनाद्वनान्तरं नीत्वा स्वस्थानं गतः। अहो! दुर्जनचारित्रम्। यतः—

पत्थरखण्ड खण्डहालाहल विसहरखण्ड खण्डदावानल। चारिखण्ड मेलिसमभागा दुर्जनपुरुषघड्या विहिराया ॥

तेन पापिना पालकेन निर्जने गत्वा रहसि राज्ञोऽग्रे विज्ञप्तम्—स्वामिन्! एष स्कन्दको भग्नव्रतपरिणामः शिष्यरूपसुभटैः परि-

धूतस्तव राज्यं ग्रहीतुं समागतोऽस्ति। मुनिवेषधरोऽप्येष पाखण्डी सहस्रयोधिभिः पुम्भिः परिवृतः स्वल्पपरिवारपरिवृतं भवन्तं हत्वा तव राज्यं ग्रहीष्यति। एतैर्मुनिवेषसुभटैः स्वानि शस्त्राणि भूमौ क्षिप्तानि। तेन पापिना पूर्वंक्षिप्तानि शस्त्राणि राज्ञो दर्शितानि। तद् दृष्ट्वा राजा परं विषादं प्राप्तः। अविचार्य पालकमादिदेश। भो पालक! यच्च रोचते तत्कुरु। अस्योचितं कर्तुं त्वमेव जानासि तत्र रोचते तत्कुरुष्व। हे महामते! भूयोऽहं न प्रष्टव्यः। राज्ञेत्युक्तः पालकः पापात्मा शीघ्रं गत्वा भैरवयंत्रमकारयत्। यतः—

इत्युक्तः पालकः शीघ्रं गत्वा यन्त्रमकारयत्। स्कन्दकस्याग्रतः साधुनेकैकं च न्यपीलयत् ॥१॥
निष्पील्यमानानेतांस्तु देशनापूर्वकं स्वयम्। अकारयत्स्कन्दकोऽपि सम्यगाराधनाविधिम् ॥२॥
उपयन्त्रं शिशौ नीते परिवारान्तिमे मुनौ। कारुण्यात्स्कन्दकाचार्य इत्यभाषत पालकम् ॥३॥
आदौ पीलय मामेव कुरुष्वैतद्वचो मम। बालं मुनिं न पश्यामि पील्यमानं यथा ह्यमुम् ॥४॥
तत्पीडा पीडितं ज्ञात्वा स्कन्दकं पालकोऽपि हि। तमेव बालकमुनिं तत्पीडार्थमपीलयत् ॥५॥
उत्पन्नकेवलाः सर्वेऽप्यवापुः पदमव्ययम्। प्रत्याख्याय स्कन्दकस्तु निदानमिति निर्ममे ॥६॥
दण्डकस्य पालकस्य तथाऽत्र पुरराष्ट्रयोः। व्यापादनाय भूयासं तपसोऽस्य फलं यदि ॥७॥

एवं कृतनिदानः स्कन्दको मुनिस्तेन पालकेन पापिना पीलितः सद्ध्यानपरो वह्निकुमारे देवोऽभूत्। इतश्च स्कन्दकभगिन्या पुरन्दरयशसा दत्तं रत्नकम्बलतन्तुजं रजोहरणं रुधिरेणाक्तं शकुनिकाऽहरत्। तद्रजोहरणं दोर्दण्डबुद्ध्या गृहीतं दैवात् पुरन्दरयशसो देव्याः पुरतः पपात। तद् दृष्ट्वा पुरन्दरयशा गाढस्वरेण पूत्करोति स्म हा! हा! दैवेन किं कृतम्? मम बान्धवरजोहरणं दृश्यते,

तत्केनापि पापिना मम बान्धवो हतः। मुनिहत्या केन कृता ? अद्य भिक्षार्थं साधवो नागतास्तत्किं कारणम् ? तन्नूनं हताः साधवः। आः साधुहत्यातः किं भविष्यति ? आः पाप पाप इत्यादिवचनैर्दण्डकिराजमाक्रोशत्। एवमाक्रोशन्ती राजानं, मन्त्रिणं धिक्कुर्वन्ती पुरन्दरयशसं शोकमग्नां शासनसुर्युत्पाट्य मुनिसुव्रतस्वामिपादान्ते मुमोच। तयाऽपि स्वामिपादान्ते परिव्रज्योपाददे। स स्कन्दकोऽग्निकुमारसुरोऽवधिना पालकं वैरिणं ज्ञात्वा तत्राऽऽयातः। तन्नगरं तृणकाष्ठैः सम्पूर्य तानि मृतकशरीराणि तत्र चिक्षेप। सनृपं समन्त्रिणं सलोकं नगरं स्कन्दकोऽदहत्। तदादीदं दण्डकारण्यमुद्वसं जातम्। अत्र स्थाने पूर्वं दण्डकी राजाऽभूत्। तेन नाम्ना दण्डकारण्यं पप्रथे। सुमन्त्र्यभावे राज्यनाशो भवति। यथा—

एकं विषं रसो हन्ति शस्त्रेणैकश्च हन्यते। सबन्धुराष्ट्रं राजानं हन्त्येको मन्त्रिविप्लवः ॥१॥

एवं पालकेन राज्यं निर्गमितम्। पालकोऽपि मृत्वा सप्तमनरकपृथिव्यां गतः। एषोऽभव्यः। यतः—

संगमय कालसुरि कविला अङ्गार पालओ दोवि। ए ए सत्त अभव्वा उदायि निव मारओ चेव ॥१॥

अतः पालकोऽभव्यः। पञ्चशतमुनिघातको नरकं गतः। दण्डक्यपि भवं भ्रान्त्वा दुःखयोनिषु भूत्वाऽयं गन्धाख्यः पक्षी जातः। रोगाभिभूतः कुष्ठाभिभूतोऽस्मद्दर्शनात्सञ्जातजातिस्मरणोऽभूत्। अस्मत्स्पर्शौषधीलब्ध्याऽस्य रोगाः क्षयमासन्। तच्छ्रुत्वा जटायुपक्षिराड् भूयोऽपि मुनिपादयोः पपात। धर्मं श्रुत्वा श्रावकत्वं प्रपेदे। त्रिगुप्तसुगुप्तमुनिपादान्ते जीवघातपलाहारनिशिभोजनप्रत्याख्यानमकरोत्। द्वादशव्रतधारको जातः। पुनर्मुनिनोक्तम्—भो राम! भो लक्ष्मण! हे सीते! अयं पक्षी तव साधर्मिको वात्सल्ययोग्यो जिनैः कथितोऽस्ति। रामेणोक्तम्—हे स्वामिन्! अस्माकमेष बन्धुः परममित्रोऽद्यप्रभृति बन्धुवत्पाल्योऽस्ति। जानकीरामलक्ष्मणास्तं

दिव्यं रथमारुह्य जटायुसहिताः क्रीडया स्वेच्छया विजह्रुः। ते त्रयोऽपि दण्डकारण्ये शीलागृहे सुखं तस्थुः।

॥ इति स्कन्दकाचार्यराजदण्डाकिकथानकम् ॥

इतः पाताललङ्कायां खरनामा विद्याधरोऽस्ति तस्य पत्नी रावणभगिनी चन्द्रणखा नाम पट्टदेव्यस्ति। तयोः पुत्रौ शम्बूकसुन्दनामानौ नवयौवनावभूताम्। अन्यदा शम्बूको मातृपितृभ्यां वार्यमाणोऽपि सूर्यहासखड्गसाधनार्थं दण्डकारण्यमुपेयिवान्। तत्र गत्वा क्रौंचरवानदीतीरे वंशगह्वरान्तरेऽसिरत्नमसाधयत्। कथम् यथा—

एकान्तभुग्विशुद्धात्मा ब्रह्मचारी जितेन्द्रियः। अधोमुखो वटशाखानिबद्धचरणद्वयः ॥१॥
विद्यां जपितुमारेभे सूर्यहासासिसाधनीम्। सप्ताहाग्रद्वादशाब्द्या या सिद्धिमुपगच्छति ॥२॥
एवं च तस्थुपस्तस्य वल्गुलीस्थानकस्पृशः। वर्षाणि द्वादशातीयुश्चत्वारि दिवसानि च ॥३॥

शम्बूकोऽधोमुखो वटशाखानिबद्धपादो वंशगह्वरे सूर्यहासं खड्गं वंशकुडङ्गबहिर्मुक्त्वा यावत्तपस्तेपे तावल्लक्ष्मण इतस्ततो भ्राम्यन्क्रीडां कुर्वन् तत्राऽऽयातः, यत्र वंशकुडङ्गीलग्नसूर्यहासं खड्गं दृष्ट्वा खड्गमाददे। गृहीत्वा विकोशं कृत्वा तत्तेजोविलोकनार्थं तीक्ष्णत्वपरीक्षार्थं खड्गघातेन वंशजालीं नललावं लुलाव। तदा लक्ष्मणो वंशजालीमध्ये कस्यचित्पुरुषस्य मौलिकमलमपश्यत्। लक्ष्मणोऽग्रे गच्छन् वटशाखानिबद्धकबन्धं ददर्श। अहो मया किं कृतम्। कश्चिद्विद्यासाधको हतः। लक्ष्मण आत्मानं निनिन्द। यथा—

अयुध्यमानोऽशस्त्रश्च पुमान्कोऽपि हतो मया। अमुना कर्मणा धिङ्मामित्यात्मानं निनिन्द सः ॥१॥
गत्वा च रामभद्राय तदशेषं शशंस सः। असिं च दर्शयामास रामोऽप्येवमभाषत ॥२॥

असावसिः सूर्यहासः साधकोऽस्य त्वया हतः। अस्य सम्भाव्यते नूनं कश्चिदुत्तरसाधकः ॥३॥

अत्रान्तरे चन्द्रणखा रावणभगिनी शम्बूकजननी हर्षितमना यतो मत्सुनोऽद्य विद्या सेत्स्यति इति कृत्वा पूजोपस्कराम्नपानादि सहिता समाययौ। तत्राऽऽयाता यत्र शम्बूकशिर्षच्छिन्नं लुलितकुण्डलं किंवत् बुडबुडायमानं दृष्ट्वा चिन्तितम्। आः किं जातम्? मूर्छिता भूमौ पतिता। पुनर्लब्धचैतन्या विलपति हे वत्स! शम्बूक! त्वं क्वासि? क्व गतोऽसि? अहो! पापिना केन हतोऽसि? निष्कारणवैरिणा दैवेन किं कृतम्? दैवोपालम्भान्ददाति। इतस्ततो विलोकयन्ती लक्ष्मणपादपङ्क्तिं ददर्श। दृष्ट्वा चिन्तितम्-एष मे पुत्रघातकः। तर्हि गत्वा पराक्रमं दृष्ट्वा शिक्षां ददामि। इति तत्पदपद्धत्या गच्छन्ती चन्द्रणखा रामं ददर्श। कथंभूतं रामम्? नेत्राभिराममभिरामगुणग्रामं पीनोन्नतस्कंधं सत्यामृतसिन्धुं कमलवदनमुज्ज्वलरदनं सुरभिनिःश्वासं लक्ष्मीनिवासमित्यादिलक्षणोपेतं श्रीरामं दृष्ट्वा हर्षिता काममोहिता शूर्पणखा रामं निरीक्ष्य कामपरवशाऽभवत्। अहो कामिनीनां काम उत्पन्ने शोकोद्रेको दूरे याति। अहो! कामविलसितम्, अहो दुश्चारिणीचरित्रम्। यतः—

आलिंगत्यन्यमन्यं रमयति वचसा वीक्षते चान्यमन्यं, रोदित्यन्यस्य हेतोः कलयति शपथैरन्यमन्यं वृणीते।
शेते चान्येन सार्द्धं शयनमुपगता चिन्तयत्यन्यमन्यं, स्त्रीमायेयं प्रसिद्धा जगति बहुमता केन धृष्टेन सृष्टा ॥१॥

रामरूपमोहितया तया शूर्पणखया विलाससुन्दरमतिमनोहरं कन्यारूपं विकृत्य मन्मथार्तया कामरूपिणं रामं ज्ञात्वा शरणं प्रपेदे। रामस्तां बालिकां बभाषे-हे बालिके! कुत इहागता अस्मिन्दण्डकारण्ये कृतान्तैकनिकेतने। एकाकिनी कथमागता? साऽप्यूचे-अवन्तीदेशाधिपस्याहं कन्यका गुणसुन्दरीनाम्ना केनापि विद्याधरेण निशायां सुप्ताऽपहृता। स मां गृहीत्वेहारण्ये समायातः। इहान्यो

विद्याधरो मिलितः सोऽपि मां दृष्ट्वा मोहितो मां ग्रहीतुकामः संग्रामसज्जो बभूव। अन्योऽपि मां मुक्त्वा परस्परं वनगजाविव युद्धोभावपि विपेदाते। अहमेकाकिनी दीनाऽनाथा पतिविहीनोभयभ्रष्टा भ्राम्यन्तीहागत्य त्वां शरणं प्रपन्ना मरुस्थले कल्पवृक्षमिव। हे नाथ! हे गुणरत्नरत्नाकर! सुकुलोत्पन्नां कुमारिकां तव योग्यां कन्यां परिणयनपरामतस्त्वं मां परिणय। महत्स्वर्थना वृथा न जायते। तामत्युत्कटामद्भुतवेषधरां मायाविनीं नटवद्वेषधारिणीं कूटनाटकनटीं विलोक्य रामश्चिन्तयति–अहो! इङ्गितेन ज्ञायत एषा दुश्चारिणी बालिका वेषधारिणी वर्तते। यतः–द्वाविंशति प्रमदानां विकारेङ्गितानि। यथा–उच्चैर्निष्ठीवनम्, सानुरागनिरीक्षणम्, श्रवणसंयमनम्, आलस्यमोटनम्, मुद्रिकाकर्षणम्, गुप्ताङ्गदर्शनम्, प्रजल्पने हास्यम्, स्तनोपपीडनम्, भूषणोत्पाटनम्, नूपुरोत्कर्षणम्, कर्णकण्डूयनम्, कचप्रसाधनम्, पुनःपुनरुत्तरीयचालनम्, नखविलेखनम्, परिधानसंयमनम्, निःश्वासोच्छ्वसनम्, साग्विजृम्भणम्, बालालिङ्गनम्, बालकमुखचुम्बनम्, प्रियाश्लेषणम्, अतिक्रान्तप्रेक्षणम्, पश्चात्तापस्मरणम्। चतुर्विंशत्यसतीनां लक्षणानि। यथा–द्वारदेशशायिनी, पश्चादवलोकिनी, बहुभाषिणी, सम्भोगार्थिनी, गोष्ठीप्रिया, राजमार्गान्विता, मार्गमन्वेषणी, पतिद्वेषिणी, दीनं वदन्ती, जलवाहिनी, नृसंगिनी, विनोदप्रिया, अतिमानिनी, पानीयानयनाय दूरे गच्छन्ती, कुम्भकाररजकसङ्गतिकरी, कृत्रिमलज्जान्विता, परप्रीतिरता, सततहास्या, निर्जने बहिर्गामिनी, लोभान्विता, बहुभाषिणी, क्रीडनप्रिया, केशसंवाहनप्रिया, स्वगृहं परित्यज्य परगृहे गोष्ठ्यै गच्छन्ती, रसिका, स्वपतिं परित्यज्य परपुरुषान्वेषणं करोतीत्यसतीलक्षणानि। एभिर्लक्षणैर्लक्षिता दृश्यते। नूनमेषा दुश्चारिणीति ज्ञात्वा रामेण लक्ष्मणस्य मुखं विलोकितम्। लक्ष्मणेनापि रामस्य मुखं विलोकितम्। पुनारामलक्ष्मणावीक्षांचक्राते। ततो रामस्तां बभाषे—

कलत्रवानहं चाले कनीयांसं भजस्व मे। इति रामो वृषस्यन्तीं वृषस्कन्धः शशास ताम् ॥१॥

हे सुन्दरि! सभार्योऽहमतस्त्वं लक्ष्मणं भजस्व। सा विषयार्थिनी लक्ष्मणं प्रति गता। लक्ष्मणं मन्मथोपमं दृष्ट्वा हर्षिता तं बभाषे-भो महापुरुष! मां परिणय। लक्ष्मणो बभाषे-हे सुन्दरि! प्रथममार्यं श्रीरामचन्द्रं गता तर्हि राममेव भजस्व त्वं मम भ्रातृजाया जाता, ततोऽनया वार्तयाऽलम्। पुना रामं गता, पुनर्लक्ष्मणमेवं पुनः पुनः कुर्वाणा शूर्पणखा सीतया हसिता, हे सुन्दरि! हीनकुलोचितं किमारब्धम्? ततो लज्जिता सा शूर्पणखा यान्त्याखण्डनात् सीताहास्यात् पुत्रवधाच्चात्यर्थं कुपिता भृशमुद्वेजिता चिन्तयति—यद्येतौ रामलक्ष्मणौ मत्पुत्रवधकौ खरदूषणादिविद्याधरैर्मारयामि तर्हि रावणस्वसा शूर्पणखा, नान्यथेति कृत्वा विद्युल्लतेव चञ्चला व्योममार्गेण पाताललङ्कां गता। गत्वा सर्वं निजपतेः खरस्याग्रे विज्ञप्तम्। तच्छ्रुत्वा कुपिताः खरादयः चतुर्दशविद्याधरसहस्रैः परिवृता यत्र तौ रामलक्ष्मणौ तत्राभ्येयू राममुपद्रोतुं, शैलमिव द्विपाः। तदा रामं संग्रामसज्जं दृष्ट्वाऽथ लक्ष्मणो रामं प्रति बभाषे—भो बान्धव! मयि सेवके सतीदृशैः सह त्वं किं संग्रामसज्जो भवसि? लक्ष्मणो राममयाचिष्ट-एभिः सह संग्राममहं करिष्ये। तच्छ्रुत्वा रामो बभाषे-वत्स! गच्छ यथासुखम्। यदि ते सङ्कटं भवेत्तदा ममाहूत्यै सिंहनादं कुर्या इति संकेतं कृत्वा लक्ष्मणः संग्रामायाचलत्सिंहवत्। यतः—

सींह न जोइ चंदयल नवि जोइ धन ऋद्धि। एकलडु सहसां भीडी जिहां साहस तिहां सिद्धि ॥१॥

अथ लक्ष्मणो रामाज्ञया धनुष्टंकारं कुर्वाणस्तान्विद्याधरान्हंतुं प्रवृत्ते। तार्क्ष्य इवोरगान्। लक्ष्मणखरयोर्युद्धे प्रवर्धमाने स्वभर्तुर्बलवृद्धये शूर्पणखा रावणसमीपे गत्वेत्यूचे—भो बान्धव! रावण! दण्डकारण्ये रामलक्ष्मणावायातौ वर्तेते। तयोर्लक्ष्मणेन मत्पुत्रः शम्बू-

कः सूर्यहासखड्गविद्यां साधयन् निरपराधो हतो यमसद्मनि गतः। तत्पुत्रमरणं श्रुत्वा शोकार्तः खरो विद्याधरश्चतुर्दशसहस्रभटैः परिवृतो दण्डकारण्ये गतः, लक्ष्मणेन सह युद्धं कुर्वन्नास्ते। लक्ष्मणभ्राता श्रीरामः सीतया भार्यया सह तत्रैव सुखं रमते। भ्रातृवीर्येण गर्वितो रामः सर्वं तृणवद्गणयन्नास्ते। तच्छ्रुत्वा रावणस्तूष्णीको बभूव। पुनः शूर्पणखा स्वसा सीतारूपं वर्णयति। यथा–

सीता च रूपलावण्यश्रिया सीमेव योषिताम्। न देवी नोरगी नापि मानुष्यन्यैव कापि सा ॥१॥
तस्या दासीकृताशेषसुरासुरवधूजनम्। त्रैलोक्येप्यप्रतिच्छन्दं रूपं वाचामगोचरम् ॥२॥
आसमुद्रान्तभूमध्ये यानि कान्यपि भूतले। तवैवार्हन्ति रत्नानि तानि सर्वाणि बान्धव ॥३॥
दृशामनिमिषीकारकारणं रूपसंपदा। स्त्रीरत्नमेतद्गृह्णीया न चेत्त्वमसि रावणः ॥४॥
आरुह्य पुष्पकमथादिदेश दशकन्धरः। विमानराज! त्वरितं याहि यत्रास्ति जानकी ॥५॥
ययौ चात्यन्तवेगेन विमानमनुजानकि। स्पर्धयेव दशग्रीवमनसस्तत्र गच्छतः ॥६॥

तत्राकाशे पुष्पकविमानस्थो दशकन्धरः सीतासहितं रामं ददर्श। अहो! यथा हुतवहाद्व्याघ्रस्त्रस्यति तथा रामादहमपि त्रस्यामि, इति भिया तत्रैवाकाशे स्थितः किञ्चिद्विमृश्य पश्चादवलोकिनीं विद्यामस्मार्षीत्। तदैव सा विद्योपतस्थे किंकरीवत्कृताञ्जलिः। विद्या रावणमूचे–किं करोमि भो रावण! रावणेनोक्तम्–सीतां हरिष्यतो मम शीघ्रं साहाय्यं कुरु।

साऽवोचद्वासुकेर्मौलिरत्नमादीयते सुखम्। न तु रामसमीपस्था सीता देवासुरैरपि ॥१॥
उपायेन हि तत्कुर्याद्यन्न शक्यं पराक्रमैः। काक्या कनकसूत्रेण कृष्णसर्पो निपातितः ॥२॥

नो चेदिष्टकपालमण्डलभृताऽप्याखण्डयमुण्डावलिं, भक्त्या ढौकितमीश्वरेण किमिति प्रत्यर्पितं प्राभृतम् ॥१॥
मा भैषीः पुत्रि सीते व्रजति मम पुरो नैष दूरं दुरात्मा, रे रे रक्षः क्व दारान् रघुपतितिलकस्यापहृत्य प्रयासीः।
चञ्च्वाक्षेपप्रहारैः स्फुटितधमनीभिर्दिक्षु विक्षेप्यमाणै-राशापालोपहारं दशभिरपि भृशं त्वच्छिरोभिः करोमि ॥

क्व यासि ? रे दुरात्मन् ! इत्युक्त्वा चञ्चूप्रहारं पृष्ठे ददन्नखैर्विलूरयन्, रावणहृदयं नखैर्विदारयन्, पुनर्वचसा तर्जयन्ननुदधावे। ततो दशग्रीवो जटायुं प्रति क्रुद्धो दारुणं खड्गमाकृष्य पक्षौ चिच्छेद। स पतत्री भूमौ पपात। निःशङ्को दशग्रीवो सीतां पुष्पके विमान आरोप्य पूर्णप्रायमनोरथस्तूर्णं नभसा चचाल। नभसा ह्रियमाणा सीता रोदयन्ती तरूनपि रुरोद। ततः सीतारुदितमर्कजटीनन्दनो रत्नजटीविद्याधरोऽशृणोत्। रत्नजटी चिन्तयति–नूनमेष रामपत्नीशब्दः समुद्रोपरि श्रूयते। नूनं रामलक्ष्मणौ छलितौ रावणेन सीता ह्रियते। भामण्डलसेवको रत्नजटी खड्गमाकृष्य रावणं प्रति धावितो बभाषे–मत्प्रभोर्भगिनीं सीतां हृत्वा क्व यास्यसि ? रे निर्लज्ज ! रे कुलाधम ! रे कुलपांशन ! इत्युक्त्वा यावता खड्गप्रहारं ददाति तावता दशाननो विद्यासामर्थ्यतस्तस्य सर्वां विद्यां सद्यः सञ्जहार। स छिन्नपक्षः पक्षीव सद्यः कम्बूद्वीपे कम्बूशैलमारुह्य स्थितोऽस्ति। रावणोऽपि विमानस्थो गच्छन्व्योम्ना समुद्रोपरि सञ्चरन् कामातुरो मैथिलीं प्रोचे–हे सुन्दरि ! भूचरखेचरनरेन्द्राणामधीश्वरं मामवेहि। तस्य त्वमग्रमहिषी भविष्यसि, अतो हर्षस्थाने विषादं मा कुरु, सृतं विषादेन, किं भूयोभूयः रोदिषि ? सृतं दुःखेन, सुखं भजस्व, भूचरखेचराणां स्वामिनी भव, ममाग्रमहिषीपदं प्राप्नुहि। तवाहं तुष्टोऽस्मि। रामेण मन्दभाग्येन योजिता विधिना विरूपमाचरितं नानुरूपं विहितम्, अधुना मयोचितं कृतम्, अतो मां पतिं मन्यस्व। अहं तव दासत्वं करिष्ये। मयि दासे तव खेचराः खेचर्यः सर्वेऽपि दासाः स्युः। एवं रावणे ब्रुवाणे सीताऽधोमुखी तस्थौ।

सीता किं कुर्वन्ती? भक्त्या मन्त्रवत् राम इत्यक्षरद्वयं स्मरन्ती। रावणोऽपि स्मरातुरो जानकीपादयोर्मूर्ध्ना पपात। साऽपि सीता परपुंस्पर्शकातरा पादावपसारयत्, परं चुक्रोश च। यथा—

आनुक्रोश च सीतैवं निरनुक्रोश! निस्त्रप!। अचिराल्लप्स्यसे मृत्युं परस्त्रीकामनाफलम् ॥१॥

प्राणसन्देहजननं परमं वैरकारणम्। लोकद्वयविरुद्धं च परस्त्रीगमनं त्यजेत् ॥२॥

एवं सीतयोक्तोऽपि रावणस्तदध्यवसायान्न विरराम। तदानीं सारणादयो मन्त्रीश्वरा रावणसंमुखा एयुः। अन्येऽपि राक्षसादयः सेवका दशमुखसंमुखा अभ्येयुः। क्रमेण पुष्पकारूढो रावणो मन्त्रिसामन्तपरिवृतः सीतासहितोऽद्वितीयपराक्रमो लङ्कानगरीमागतः। लङ्कागते रावणे सीताऽभिग्रहमकरोत्। यथा—यावद्रामसौमित्रिक्षेमोदन्तसमागमो न भवति, तावदन्नपानादिकं न भोक्ष्ये, इत्युच्चैः सीताऽभिग्रहमग्रहीत्। रावणेन लङ्कापूर्वदिशि स्थिते देवरमणोद्यानेऽशोकतरुतले त्रिजटादिराक्षसीभिः परिवृतां सीतां मुक्त्वा प्रमुदितो रावणः स्वं धामागात्।

इति श्रीमत्तपागच्छभट्टारकश्रीहीरविजयसूरिराज्ये आचार्यश्रीविजयसेनसूरियौवराज्ये पण्डितदेवविजयगणिविरचिते गद्यबन्धे श्रीरामचरित्रे सीतापहरणो नाम पञ्चमः सर्गः ॥

# षष्ठः सर्गः।

इतश्च रामचन्द्रो धनुर्नादं वितन्वानो यत्र लक्ष्मणो वर्तते तत्रागात्। राममायान्तं विलोक्य सौमित्रिरिदमभ्यधात्–भो आर्य ! त्वमार्यामेकाकिनीं मुक्त्वा कथमत्रागाः ? राम उवाच–तव सिंहनादेनाहूतो विरहविधुर इहागाम्। लक्ष्मण ऊचे–हे बान्धव ! सिंहनादो मया नाकारि त्वया कथं श्रुतः ? यदि त्वया सिंहनादः श्रुतस्तर्हि नूनं वयं केनापि वञ्चिताः। शीघ्रं याहि आर्यासमीपे, सिंहनादात् किंचित्कारणं वर्तते। हे बान्धव ! त्वं शीघ्रं व्रज। अरीन् हत्वाऽहमपि समेष्यामि। इत्युक्तो रामभद्रः सीतापार्श्वे उटजेऽगात्। परं तत्र सीतां नापश्यत्। भूमौ पतितो रामो मूर्च्छामगमत्। पुनर्लब्धचैतन्यो राम इतस्ततो भ्राम्यन् तडफडन्तं कण्ठगतप्राणं छिन्नपक्षं जटायुपक्षिणं दृष्ट्वाऽचिन्तयत्–केनापि छलपरेण मे दयिता नूनं जहे। तेनैवापहारक्रुद्धोऽयं महात्मा खगो निहतः। ततो रामस्तस्मै परलोकाध्वशम्बलं परमेष्ठिनमस्कारं ददौ। ततः स जटायुर्मृत्वा नमस्कारप्रभावात् माहेन्द्रदेवलोके देवोऽभवत्। रामोऽपि सीतामन्वेष्टुं तस्यामटव्यामितस्ततो बभ्राम।

इतश्च रामानुजो वीरः खरेण सह युध्यमानोऽनेकान्विद्याधरभटान् निघ्नन् विद्रावयन् समुद्रं मन्थान इव मथ्नन्नास्ते। अत्रान्तरे त्रिशिरा नाम लघुबान्धवो ज्येष्ठं खरमवोचत्–हे बान्धव ! अनेन भूचरेण सह तव कः सङ्ग्रामः। तव सदृक्षैः सह संग्रामः श्रेष्ठः। कोऽयं भूचरः ? एवं सगर्ववचनं लक्ष्मणेन यावता श्रुतं तावता लक्ष्मणेन त्रिशिरोविद्याधरो बाणेन हतो मृतः। तत्सैन्यं भग्नं परं

खरविद्याधरः पुत्रवधात् भ्रातृवधाच्च भृशं युयुधे।

तदा पातालङ्केशश्चन्द्रोदरनृपात्मजः। विराधः सर्वसन्नाहिसैन्यस्तत्र समाययौ ॥१॥

विराधो रामसोदरं नत्वा बभाषे–हे स्वामिन्! अहं तव सेवकोऽस्मि। एते खरादयो मम शत्रवो यतो मम पितरं चन्द्रोदराख्यं निर्वास्याऽमी रावणपत्तयः पातालङ्कां जगृहुः। तव साहाय्यान्मम पातालङ्काराज्यं समागमिष्यति, अतस्त्वं मम स्वामी। रणाय ममाज्ञां समादिश। केऽमी वराकाः खरादयः इत्युक्त्वा यावता युद्धसज्जोऽभवत् तावता लक्ष्मणोऽवोचत्–हे विराध! अद्य प्रभृति ते स्वामी श्रीरामः परं मया पातालङ्काराज्यं दत्तम्। अहं तथा करिष्ये यथा तव पातालङ्काराज्यं भविष्यति। इति श्रुत्वा विराधो महाप्रसाद इत्युक्त्वा खरेण सह युद्धं करोति। लक्ष्मणसमीपे विराधं दृष्ट्वा खरो धनुरारोप्य लक्ष्मणमब्रवीत्–रे लक्ष्मण! रे शम्बूकघातक! रे त्रिशिरोवधक! विराधेन वराकेण सख्याऽधुना त्वं किं रक्ष्यसे? स्मित्वा सौमित्रिरुवाच–भो खर! तव पुत्रभ्रातृमिलनेच्छा चेदस्ति तर्हि सङ्ग्रामसज्जो भव। यथा तव मनोरथं पूरयामि। तव सूनुस्तु मया क्रीडया पादघातेन कुन्थुवद्धतोऽस्ति। हे मूढ! तत्र मे पौरुषं न, अधुना त्वं यदि स्वं भटं मन्यसे, तर्हि तव मनोरथं पूरयिष्ये। सज्जो भव, तव शरीरेण कीनाशं प्रीणयामि। तच्छ्रुत्वा खरः खरवत्फूत्कारं कुर्वाणो दन्तीव गिरिसानुनि लक्ष्मणे प्रहर्तुमारेभे। लक्ष्मणोऽपि तीक्ष्णैः कङ्कपत्रैरम्बरमाच्छादयामास। तयोर्भयंकरो गरीयान्संगरोऽजायत देवदानवयोरिव। एवं तयोः संग्रामे जायमाने खरवधे कालक्षेपं ज्ञात्वा लज्जितश्चिन्तयति किं कालक्षेपं करोमीति चिन्तयित्वा लक्ष्मणः खरमूर्धानं क्षुरप्रेणाच्छिदत्। क्षणाद्धतं भ्रातरं ज्ञात्वा तथैव खरलघुभ्राता दूषणः सङ्ग्रामसज्जो बभूव। सोऽपि लक्ष्मणेन ससैन्यः संजघ्ने वनकुञ्जरयूथ इव। ततो लक्ष्मणो जितकाशी खरदूषणसैन्यं हत्वा विराधेन सह चचाल।

मार्गे गच्छतो लक्ष्मणस्य वामेक्षणं प्रास्फुरत्। लक्ष्मणश्चिन्तयति–नूनमार्यस्य किञ्चिदशुभं भाति, इति विचार्य यावद्रामसमीपे याति तावता द्रुमान्तरे रामभद्रं सीताविरहितं दृष्ट्वा लक्ष्मणः परं विषादं ययौ। ततः सौमित्रिरागत्य रामचन्द्रं नत्वा पुरः स्थितः। परं सीताविरहपीडितेन रामेण नोपलक्षितः। रामो वनदेवतां मत्वाह–हे वनदेवते! अहमेकाकिनीं सीतां दीनां वने मुक्त्वा लक्ष्मणेनाहूतो गतो लक्ष्मणसमीपम्, पुनर्लक्ष्मणेन पराङ्मुखोऽस्मिन्वने प्रत्यागतः परं सीता न दृश्यते। क्व गताऽस्ति। एवमुक्त्वा मूर्च्छया भूमौ पतितः शीतलोपचारैर्लक्ष्मणेन पुनः सज्जितो विलपति। यथा—

निर्जनेऽरण्ये कथं मुक्ता मया प्रिये। हा वत्स! लक्ष्मण! कथं मुक्तोऽसि रणसङ्कटे॥१॥

भद्रो मूर्च्छया न्यपतत्क्षितौ। कन्दरूभिः पक्षिभिरपि वीक्ष्यमाणो महाभुजः॥२॥

यब्रवीदेवमार्याय किमिदं ननु। तवायं लक्ष्मणो भ्राता जित्वारिं समुपास्थितः॥३॥

णैव संसक्तो रामभद्रस्तया गिरा। लब्धसंज्ञो ददर्शाग्रे सस्वजे च निजानुजम्॥४॥

तरं दृष्ट्वा रामो लक्ष्मणमालिलिङ्ग, कुशलोदन्तं चापृच्छत्। रामेणाऽपि स्ववृत्तान्त उक्ते लक्ष्मणः प्राह–भो विधेहि। केनापि मायिना सीतापहरणकृते सिंहनादो विहितः। सिंहनादेन त्वं मोहयित्वा सीता हृता। पुन- श्रीराम! तर्ह्यहं तवानुजो यदि तस्य प्राणैः सह जानकीमाहरिष्यामि। परमेष विराधः पैतृके पातालङ्काराज्ये ः। यतः-खरदूषणसङ्ग्रामेऽस्मै मयेति प्रतिपन्नं वर्तते। रामेणोक्तम्–भो विराध! मयापि तव पातालङ्काराज्यं दत्तम्। त्वं वन्तो भव। ततःप्रभृति विराधः सीतान्वेषणार्थं विद्याधरभटानादिदेश। ते विराधसेवका विद्याधरा दूरं दूरं भ्रान्त्वा

समाजग्मुः परं सीताप्रवृत्तिं न प्रापुः। विराधेनागत्य राज्ञोऽग्रे विज्ञप्तम्—हे स्वामिन्! मत्सेवकै दूंरं दूरं गत्वा विलोकितम् परं क्वापि सीताप्रवृत्तिर्न लब्धा। तच्छ्रुत्वा मूर्च्छितो रामः। पुनर्लब्धचैतन्यो रामः लक्ष्मणं प्रति बभाषे—

कोऽहं? वत्स! स एष आर्यभगवानार्यः स को? राघवः, के यूयं? बत नाथ पूज्यपदयोर्दासोऽस्म्यहं लक्ष्मणः। कान्तारे किमिहास्म्यहं? ननु विभो देवी गता मृग्यते, का देवी? जनकाधिराजतनया हा जानकि क्वासि? हा॥

साधु साधु च यत्पृथ्वीभारो नारोपितो मयि। कलत्रस्यापि न त्राता स्यां कथं रक्षिता क्षितेः॥२॥

आख्यास्यति खगः स्वर्गे पितुर्दशरथस्य मे। एकस्त्रीपरिपाल्येऽपि न रामः शक्तिमर्हति॥३॥

राज्यभ्रंशो वने वासो सीता नीता पिता मृतः। एकैकमपि तद्दुःखं यदब्धीनपि शोषयेत्॥४॥

दिवसो वरिससमाणो वेला मासस्स तुल्ल मे जाई। विरहानलतत्तंगं दंसण अमिएण सिंचेह॥५॥

इत्यादि विलपन्रामो विराधसुभटानाह—भो सुभटाः! सीताप्रवृत्तिर्न प्राप्ता तर्हि भवतां को दोषो दैवे विपरीते के यूयमथवा केऽपरे। तस्मिन्समये विराधोऽप्यवदत्—हे प्रभो! निर्वेदं मा कृथाः। अनिर्वेदः श्रियो मूलम्। तव भृत्योऽस्मि नन्वहम्। स्वामिन्! पाताललङ्का गम्यते तत्र सीता प्रवृत्तिः सुलभा भविष्यति। रामेणोक्तम्—'एवं भवतु। ततो रामलक्ष्मणौ विराधसहितौ पाताललङ्कापुर्याः परिसरावनौ ययतुः। तत्र सुन्दो नाम खरात्मजो महासैन्यसमावृतो रामं प्रति संमुखीनो रणायागात्। तत्र सुन्दः पूर्वविरोधिना पुरोगेण विराधेन समं घोरं रणं चक्रे। तदा लक्ष्मणो विराधप्रीत्या सुन्दं हन्तुं दधावे। लक्ष्मणं सङ्ग्रामसज्जं दृष्ट्वा सुन्दः शूर्पणखागिरा प्रणश्य लङ्कानगर्यां रावणशरणं ययौ ततो रामलक्ष्मणौ रघुपुङ्गवौ पातालङ्कां प्रविश्य विराधं पैतृके पदे निवेशया-

मार्गे गच्छतो लक्ष्मणस्य वामेक्षणं प्रास्फुरत्। लक्ष्मणश्चिन्तयति-नूनमार्यस्य किञ्चिदशुभं भावि, इति विचार्य यावद्रामसमीपे याति तावता द्रुमान्तरे रामभद्र सीताविरहित दृष्ट्वा लक्ष्मणः पर विषादं ययौ। ततः सौमित्रिरागत्य रामचन्द्रं नत्वा पुरः स्थितः। परं सीताविरहपीडितेन रामेण नोपलक्षितः। रामो वनदेवतां प्रत्याह-हे वनदेवते! अहमेकाकिनीं सीतां दीना वने मुक्त्वा लक्ष्मणेना हूतो गतो लक्ष्मणसमीपम् , पुनर्लक्ष्मणेन परावृत्तोऽस्मिन्वने प्रत्यागतः पर सीता न दृश्यते। क्क गताऽस्ति। एवमुक्त्वा मूर्छया भूमौ पतितः शीतलोपचारैर्लक्ष्मणेन पुनः सज्जितो विलपति। यथा—

हा सीते! निर्जनेऽरण्ये कथं मुक्ता मया प्रिये। हा वत्स! लक्ष्मण! कथं मुक्तोऽसि रणसङ्कटे॥१॥

एवं ब्रुवन्रामभद्रो मूर्छया न्यपतत्क्षितौ। क्रन्ददृभिः पक्षिभिरपि वीक्ष्यमाणो महाभुजः॥२॥

लक्ष्मणोऽप्यब्रवीदेवमार्याय किमिदं ननु। तवायं लक्ष्मणो भ्राता जित्वारिं समुपास्थितः॥३॥

पीयूषेणैव संसक्तो रामभद्रस्तया गिरा। लब्धसंज्ञो ददर्शाग्रे सस्वजे च निजानुजम्॥४॥

लक्ष्मणं लघुभ्रातरं दृष्ट्वा रामो लक्ष्मणमालिलिङ्ग, कुशलोदन्तं चापृच्छत्। रामेणाऽपि स्ववृत्तान्त उक्ते लक्ष्मणः प्राह-भो बान्धव! चिन्तां मा विधेहि। केनापि मायिना सीतापहरणकृते सिंहनादो विहितः। सिंहनादेन त्वं मोहयित्वा सीता हृता। पुनर्लक्ष्मण उवाच-हे श्रीराम! तर्ह्यहं तवानुजो यदि तस्य प्राणैः सह जानकीमाहरिष्यामि। परमेष विराधः पैतृके पातालल‌ङ्काराज्ये स्थाप्यः। यतः-खरदूषणसङ्ग्रामेऽमुष्मै मयेति प्रतिपन्नं वर्तते। रामेणोक्तम्-भो विराध! मयापि तव पातालल‌ङ्काराज्यं दत्तम्। त्व निश्चिन्तो भव। तत.प्रभृति विराधः सीताप्रवृत्तिमानेतु विद्याधरभटान्निजसेवकान्प्राहिणोत्। ते विराधसेवका विद्याधरा दूर दूर भ्रान्त्वा

समाजग्मुः परं सीताप्रवृत्तिं न प्रापुः। विराधेनागत्य राज्ञोऽग्रे विज्ञप्तम्–हे स्वामिन्! मत्सेवकै र्दूरं दूरं गत्वा विलोकितम् परं क्वापि सीताप्रवृत्तिर्न लब्धा। तच्छ्रुत्वा मूर्च्छितो रामः। पुनर्लब्धचैतन्यो रामः लक्ष्मणं प्रति बभाषे—

कोऽहं? वत्स! स एष आर्यभगवानार्यः स को? राघवः, के यूयं? वत्त नाथ पूज्यपदयोर्दासोऽस्म्यहं लक्ष्मणः। कान्तारे किमिहास्म्यहं? ननु विभो देवी गता मृग्यते, का देवी? जनकाधिराजतनया हा जानकि क्वासि? हा॥

साधु साधु च यत्पृथ्वीभारो नारोपितो मयि। कलत्रस्यापि न त्राता स्यां कथं रक्षिता क्षितेः ॥२॥

आख्यास्यति खगः स्वर्गे पितुर्दशरथस्य मे। एकस्त्रीपरिपाल्येऽपि न रामः शक्तिमर्हति ॥३॥

राज्यभ्रंशो वने वासो सीता नीता पिता मृतः। एकैकमपि तद्दुःखं यदब्धीनपि शोषयेत् ॥४॥

दिवसो वरिससमाणो वेला मासस्स तुल्ल मे जाई। विरहानलतत्तंगं दंसण अमिएण सिंचेह ॥५॥

इत्यादि विलपन्रामो विराधसुभटानाह–भो सुभटाः! सीताप्रवृत्तिर्न प्राप्ता तर्हि भवतां को दोषो दैवे विपरीते के यूयमथवा केऽपरे। तस्मिन्समये विराधोऽप्यवदत्–हे प्रभो! निर्वेदं मा कृथाः। अनिर्वेदः श्रियो मूलम्। तव भृत्योऽस्मि नन्वहम्। स्वामिन्! पाताललङ्का गम्यते तत्र सीता प्रवृत्तिः सुलभा भविष्यति। रामेणोक्तम्–'एवं भवतु। ततो रामलक्ष्मणौ विराधसहितौ पाताललङ्कापुर्याः परिसरावनौ ययतुः। तत्र सुन्दो नाम खरात्मजो महासैन्यसमावृतो रामं प्रति संमुखीनो रणायागात्। तत्र सुन्दः पूर्वविरोधिना पुरोगेण विराधेन समं घोरं रणं चक्रे। तदा लक्ष्मणो विराधप्रीत्या सुन्दं हन्तुं दधावे। लक्ष्मणं सङ्ग्रामसज्जं दृष्ट्वा सुन्दः शूर्पणखागिरा प्रणश्य लङ्कानगर्यां रावणशरणं ययौ ततो रामलक्ष्मणौ रघुपुङ्गवौ पाताललङ्कां प्रविश्य विराधं पैतृके पदे निवेशया-

मार्गे गच्छतो लक्ष्मणस्य वामेक्षणं प्रास्फुरत् । लक्ष्मणश्चिन्तयति-नूनमार्यस्य किञ्चिदशुभं भावि, इति विचार्य यावद्रामसमीपे याति तावता द्रुमान्तरे रामभद्रं सीताविरहितं दृष्ट्वा लक्ष्मणः परं विषादं ययौ । ततः सौमित्रिरागत्य रामचन्द्रं नत्वा पुरः स्थितः । परं सीताविरहपीडितेन रामेण नोपलक्षितः । रामो वनदेवतां मत्वाह-हे वनदेवते ! अहमेकाकिनीं सीतां दीनां वने मुक्त्वा लक्ष्मणेनाहूतो गतो लक्ष्मणसमीपम् , पुनर्लक्ष्मणेन परावृत्तोऽस्मिन्वने प्रत्यागतः परं सीता न दृश्यते । क्व गताऽस्ति । एवमुक्त्वा मूर्च्छया भूमौ पतितः शीतलोपचारैर्लक्ष्मणेन पुनः सज्जितो विलपति । यथा—

हा सीते ! निर्जनेऽरण्ये कथं मुक्ता मया प्रिये । हा वत्स ! लक्ष्मण ! कथं मुक्तोऽसि रणसङ्कटे ॥१॥
एवं ब्रुवन्रामभद्रो मूर्च्छया न्यपतत्क्षितौ । क्रन्दद्भिः पक्षिभिरपि वीक्ष्यमाणो महाभुजः ॥२॥
लक्ष्मणोऽप्यब्रवीदेवमार्याय किमिदं ननु । तवायं लक्ष्मणो भ्राता जित्वारिं समुपास्थितः ॥३॥
पीयूषेणेव संसक्तो रामभद्रस्तया गिरा । लब्धसंज्ञो ददर्शाग्रे सस्वजे च निजानुजम् ॥४॥

लक्ष्मणं लघुभ्रातरं दृष्ट्वा रामो लक्ष्मणमालिलिङ्ग, कुशलोदन्तं चापृच्छत् । रामेणाऽपि स्ववृत्तान्त उक्ते लक्ष्मणः प्राह-भो बान्धव ! चिन्तां मा विधेहि । केनापि मायिना सीतापहरणकृते सिंहनादो विहितः । सिंहनादेन त्वं मोहयित्वा सीता हृता । पुनर्लक्ष्मण उवाच-हे श्रीराम ! तर्ह्यहं तवानुजो यदि तस्य प्राणैः सह जानकीमाहरिष्यामि । परमेष विराधः पैतृके पाताललङ्काराज्ये स्थाप्यः । यतः-खरदूषणसङ्ग्रामेऽमुष्मै मयेति प्रतिपन्नं वर्तते । रामेणोक्तम्-भो विराध ! मयापि तव पातालङ्काराज्यं दत्तम् । त्वं निश्चिन्तो भव । ततःप्रभृति विराधः सीताप्रवृत्तिमानेतुं विद्याधरभटान्निजसेवकान्प्राहिणोत् । ते विराधसेवका विद्याधरा दूरं दूरं भ्रान्त्वा

निशातानि शस्त्रैः शस्त्राण्यथो मिथः। चिच्छिदाते तृणच्छेदं रणच्छेकावुभावपि ॥७॥

खण्डैरुच्छलद्भिर्दुद्रुवे खेचरीगणः। महायुद्धे तयोर्वृक्षखण्डो महीपयोरिव ॥८॥

उभावथान्योन्यमर्मणशिरोमणी। मल्लयुद्धेनास्फलतां पर्वताविव जङ्गमौ ॥९॥

तन्तौ क्षणाद्व्योम्नि निपतन्तौ क्षणाद् भुवि। ताम्रचूडाविवाभातां वीरचूडामणी उभौ ॥१०॥

तौ द्वावपि परस्परं युद्ध्वाऽन्योन्यं जेतुमनीश्वरावपसृत्य तस्थतुः। सत्यसुग्रीवः सहायकार्यकरणार्थं पवनाञ्जनयोः सुत हनुमाजूहवत्। हनुमतः पश्यतोऽपि तथैव तौ युयुधाते। ततस्तयोर्भेदमजानन् हनुमान्स्वस्थानं गतः। विटसुग्रीवेण सत्यसुग्रीवः कुट्टितः। यतः–अत्युत्कटो विटसुग्रीवः। तेन तर्जितः सत्यसुग्रीवो मनसि चिन्तयति। यथा–

धन्यो महाबलो वाली योऽखण्डपुरुषव्रतः। राज्यं तृणमिव त्यक्त्वा जगाम परमं पदम् ॥१॥

चन्द्ररश्मिः कुमारो मे बलीयान्जगतोऽप्यसौ। किन्तु द्वयोरभेदज्ञः कं रक्षतु निहन्तु कम् ॥२॥

मत्पुत्रेण चन्द्ररश्मिकुमारेण वालिपुत्रेणाङ्गदेन च तत्साधु विदधे, यत्तस्य पापीयसोऽन्तःपुरे प्रवेशनं रुद्धम्। अथामुष्य वधाय कमपि बलीयांसं श्रयामि। तर्हि दशाननं सेवे। अथवाऽयं स्त्रीलम्पटः प्रकृत्या चञ्चलस्त्रैलोक्यकण्टकः। तर्ह्येष रावणस्तं सुग्रीवं मां च हत्वा स्वयं तारामादास्यते। अहो! अस्मिन्नवसरे यदा खरोऽभविष्यत् तदा मम साहाय्यं कर्तुमीश्वरोऽभविष्यत्। अथ याभ्यां सङ्ग्रामे खरस्य पुत्रो भ्राता च चतुर्दशसहस्राणि कुलपचयस्तथा खरोऽपि हतः। तौ रामलक्ष्मणौ विराधस्य राज्यदायकौ सेवे। साम्प्रतं तौ पाताललङ्कामलङ्कुरुतः। सुग्रीव एवं विमृश्य स्वदूतं विश्वासभूतमनुशिष्य पातालङ्कां विराधं प्रति प्रेषयामास। दूतोऽपि

तौ निशातैर्निशातानि शस्त्रैः शस्त्राण्यथो मिथः। चिच्छिदाते तृणच्छेदं रणच्छेकावुभावपि ॥७॥
शस्त्रखण्डैरुच्छलद्भिर्दुद्रुवे खेचरीगणः। महायुद्धे तयोर्वृक्षखण्डो महीपयोरिव ॥८॥
तौच्छिन्नशस्त्रावथान्योन्यममर्पणशिरोमणी। मल्लयुद्धेनास्फलतां पर्वताविव जङ्गमौ ॥९॥
उत्पतन्तौ क्षणाद्व्योम्नि निपतन्तौ क्षणाद् भुवि। ताम्रचूडाविवाभातां वीरचूडामणी उभौ ॥१०॥

एव तौ द्वावपि परस्पर युद्ध्वाऽन्योन्यं जेतुमनीश्वरावपसृत्य तस्थतुः। सत्यसुग्रीवः सहायकार्यकरणार्थं पवनाञ्जनयोः सुत हनुमन्तमाजूहवत्। हनुमतः पश्यतोऽपि तथैव तौ युयुधाते। ततस्तयोर्भेदमजानन् हनुमान्स्वस्थानं गतः। विटसुग्रीवेण सत्यसुग्रीवः क्षुद्रितः। यतः–अत्युत्कटो विटसुग्रीवः। तेन तर्जितः सत्यसुग्रीवो मनसि चिन्तयति। यथा–

धन्यो महाबलो वाली योऽखण्डपुरुषव्रतः। राज्यं तृणमिव त्यक्त्वा जगाम परमं पदम् ॥१॥
चन्द्ररश्मिः कुमारो मे बलीयाञ्जगतोऽप्यसौ। किन्तु द्वयोरभेदज्ञः कं रक्षतु निहन्तु कम् ॥२॥

मत्पुत्रेण चन्द्ररश्मिकुमारेण वालिपुत्रेणाङ्गदेन च तत्साधु विदधे, यत्तस्य पापीयसोऽन्तःपुरे प्रवेशनं रुद्धम्। अथामुष्य वधाय कमपि बलीयांसं श्रयामि। तर्हि दशानन सेवे। अथवाऽयं स्त्रीलम्पटः प्रकृत्या चञ्चलस्त्रैलोक्यकण्टकः। तर्हेप रावणस्तं सुग्रीवं मां च हत्वा स्वयं तारामादास्यते। अहो! अस्मिन्नवसरे यदा खरोऽभविष्यत् तदा मम साहाय्यं कर्तुमीश्वरोऽभविष्यत्। अथ याभ्यां सङ्ग्रामे खरस्य पुत्रो भ्राता च चतुर्दशसहस्राणि कुलपचयस्तथा खरोऽपि हतः। तौ रामलक्ष्मणौ विराधस्य राज्यदायकौ सेवे। साम्प्रतं तौ पाताललङ्कामलङ्कुरुतः। सुग्रीव एवं विमृश्य स्वदूतं विश्वासभूतमनुशिष्य पातालङ्कां विराधं प्रति प्रेषयामास। दूतोऽपि

पातालल‍ङ्कां गत्वा विराधं प्रणम्य स्वामिव्यसनवृत्तान्तं कथयित्वेदमब्रवीत्। मम स्वामी सुग्रीवो महत्संकटे पतितोऽस्ति, अतस्तत्र द्वारेण राघवौ शरणीकर्तुं वाञ्छति। विराधेनोक्तम्–भो दूत! शीघ्रं याहि गत्वा त्वत्स्वामिनं सुग्रीवं शीघ्रं समानय। यतः–सतां सङ्गो पुण्येन भवति। एतौ सत्पुरुषौ परकार्यतत्परौ। यतः—

विरला जाणन्ति गुणा विरला पालंति निद्धणा निहा। विरला परकज्जकरा परदुःखे दुःखिआ विरला ॥१॥

अतस्त्वं शीघ्र गच्छ, त्वत्स्वामिनमिहानय। इति विराधवचनं श्रुत्वा गतो दूतः सुग्रीवसमीपम्। सुग्रीवाय तद्वृत्तान्तं व्यजिज्ञपत्। हर्षतः सुग्रीवो वानरेश्वरः स्वसैन्यपरिवृतो गगनाध्वना क्षणेन पातालल‍ङ्कां प्राप। सुग्रीवमायान्त श्रुत्वा विराधः सन्मुखमियाय। विराधोऽपि सुग्रीव रामभद्राय तायिने नमस्कार कारयामास। रामचन्द्रोऽपि सुग्रीवमासनदानाभ्युत्थानादिना बहु मेने। सुग्रीवोऽपि स्वं दुःखं रामचन्द्राय व्यजिज्ञपत्। रामोऽपि स्व दुःखं सुग्रीवाय न्यवेदयत्। ततः सुग्रीवो राम प्रोचे–हे स्वामिन्! अहं तवानुगः सीताप्रवृत्तिमचिरादानेष्यामि। अतस्त्वं किष्किन्धां प्रत्यागच्छ। ततश्चलितौ रामलक्ष्मणौ सुग्रीवसहितौ किष्किन्धां प्रति। मार्गे रामो विराधमनुगच्छन्तं सम्बोध्य विससर्ज। श्रीरामचन्द्रः किष्किन्धामागत्योपवने स्थितः। तत्र स्थित्वा विटसुग्रीवमाह्वास्त। ततस्तौ सुग्रीवौ रामानुज्ञया परस्पर युयुधाते, शूरा रणायालसा न भवन्ति, भोजनाय द्विजा इव। तौ द्वौ दुर्धरैश्चरणन्यासैर्वसुन्धरां कम्पयन्तावयुध्येताम्। तौ समपराक्रमौ समरूपौ सदृग्लावण्यविलासहास्यकलितौ। रामश्चिन्तयति–अनयोर्मध्ये कः परः, कश्चास्मदीय इति न ज्ञायते। देवताधिष्ठितधनुर्नादेन विद्या दूरं यास्यतीति निश्चित्य रामो वज्रावर्ताभिधधनुष्टंकारमकरोत्। तन्नादमाहात्म्यतः साहसगतेर्विद्याधरस्य रूपान्तरकरी विद्या व्याघ्राद्धरिणीव पलायिता। विद्याधर प्रति रामेणोक्तम्–भो पापिन्! भो मायिन्!

मायया सर्वे विमोह्य परदारान् रिरंससे ? रे पाप ! चापमारोपय, सङ्ग्रामसज्जो भव, मया सह सङ्ग्रामं कुरु। एवं रामेणोक्ते लक्ष्मणेन कोपारुणलोचनेनैकेन बाणेन हतो मृत्वा नरकं गतः। यादृशमनुचितमारब्धं तादृशं फलंलब्धम्। यतः—

अनुचितकर्मारम्भः स्वजनविरोधो बलीयसां स्पर्धा। प्रमदाजनविश्वासो मृत्युद्वाराणि चत्वारि ॥१॥

अत ईदृशं कार्यं न कार्यम्। श्रीरामेण विराधवत्सुग्रीवोऽपि किष्किन्धाराज्ये स्थापितः। सुग्रीवः पुरलोकैः पूजितो राज्यमकरोत्। सुग्रीवस्त्रयोदश निजाः कन्यका अत्यन्तसुन्दर्यो रामभद्रं प्रदातुमयाचिष्ट। रामः सुग्रीवमुवाच भो सुग्रीव ! सीतान्वेषणहेतवे प्रयतस्व, एताभिः कन्यकाभिः किं करोमि, इत्युक्त्वा रामो बहिरुद्याने गतः। रामाज्ञया सुग्रीवो निजां पुरीं विवेश।

ततश्च लङ्कायां नगर्यां मन्दोदर्यादयो रावणस्त्रियः खरादिहननोदन्तं श्रुत्वाऽरुदन्। चन्द्रणखापि सुन्दपुत्रेण सह रुदती, उरः कुट्टयन्ती, पाणिभ्यां शिरः स्फालयन्ती रावणगृहं प्राविशत्। रावणकण्ठे लगित्वा रुदत्येवं जगाद। हे बान्धव ! अहं दैवेन हता। यथा–

हतः पुत्रो हतो भर्ता हतौ च मम देवरौ। चतुर्दश सहस्राणि हताश्च कुलपत्तयः ॥१॥

पाताललंका चाच्छिन्ना राजधानी त्वदर्पिता। दर्पवद्भिर्विद्विषद्भिर्बन्धो जीवत्यपि त्वयि ॥२॥

जीवग्राहं प्रणष्टाहं सुन्देन सह सूनुना। त्वां शरण्यमिहायाता कुत्र तिष्ठामि शाधि माम् ॥३॥

अमोघयद्दशास्योपि रुदन्तीं तां ससौष्ठवः। त्वद्भर्तृपुत्रहन्तारं हनिष्याम्यचिरादपि ॥४॥

शोकेन तेन वैदेहीविप्रलम्भरुजापि च। फालच्युत इव द्विपी तल्पे तस्थौ निपत्य सः ॥५॥

अथ मन्दोदरी देवी रावणमुपेत्याभ्यधात्। हे स्वामिन्! प्राकृतलोकवत् शय्यायां निश्चेष्ट इव किं तिष्ठसि? रावणो मन्दोदरीमवोचत्–हे मन्दोदरि! वैदेहीविरहाद्भोक्तुं, पातुं, क्रीडितुं, वक्तुं, तवालोकयितुं च न क्षमोऽस्मि। तर्हि त्वं तत्र वैदेह्याः समीपे गच्छ गत्वा तथा कुरु यथा सा सीता मयि रिरंसते, अन्यथा मम जीवितं नास्ति। यतः—

कम्पः स्वेदः श्रमो मूर्च्छा भ्रमिर्ग्लानिर्बलक्षयः। राजयक्ष्मादिरोगाश्च भवेयुर्मैथुनोत्थिताः ॥१॥
स्त्रीसंभोगेन यः कामज्वरं प्रतिचिकीर्षति। स हुताशं घृताहुत्या विध्यापयितुमिच्छति ॥२॥
वरं ज्वलदयःस्तंभपरिरंभो विधीयते। न पुनर्नरकद्वार–रामाजघनसेवनम् ॥३॥
सतामपि हि वामभ्रूर्ददाना हृदये पदम्। अभिरामं गुणग्रामं निर्वासयति निश्चितम् ॥४॥
वंचकत्वं नृशंसत्वं चंचलत्वं कुशीलता। इति नैसर्गिका दोषा यासां तासु रमेत कः ॥५॥
भवस्य बीजं नरकद्वारमार्गस्य दीपिका। शुचां कंदः कलेर्मूलं दुःखानां खानिरंगना ॥६॥
प्राणसंदेहजननं परमं वैरकारणम्। लोकद्वयविरुद्धञ्च परस्त्रीगमनं त्यजेत् ॥७॥
सर्वस्वहरणं बन्धं शरीरावयवच्छिदाम्। मृतश्च नरकं घोरं लभते पारदारिकः ॥८॥
लावण्यपुण्यावयवां पदं सौन्दर्यसंपदः। कलाकलापकुशलामपि जह्यात्परस्त्रियम् ॥९॥

इत्याद्युक्तिभिर्मन्दोदर्या रावणपत्न्या प्रतिबोधितोऽपि रावणो न बुबुधे बहुलकर्मत्वान्नरकगामित्वाच्च। पुना रावणो मन्दोदरीं प्रति भणति, हे प्रिये! प्रियभक्ते! मया गुरुसमीपे नियमो गृहीतोऽस्ति। अहमप्रसन्नामनिच्छन्तीं पररमणीं न रेमे, इत्यभिग्रहो

न चित्रमेतत्त्वयि वा जितात्मनि
प्रजाहितार्थं धृतपार्थिवव्रते ।
तपःसमाधानपरे मुनाविव
स्वभाववृत्त्या हि गुणास्त्वयि स्थिताः ॥ ९२ ॥

इति प्रशंसासुभगाः सुखा गुणा
न दोषदुर्गेषु वसन्ति भूतयः ।
इमां विदित्वा गुणदोषधर्मतां
सचेतनः क स्वहितोपथं भजेत् ॥ ९३ ॥

न देशमाप्नोति पराक्रमेण तं
न कोशवीर्येण न नीतिसंपदा ।
श्रमव्ययाभ्यां नृपतिर्विनैव यं
गुणाभिजातेन पथाधिगच्छति ॥ ९४ ॥

सुराधिपश्रीरपि वीक्षते गुणान्
गुणोदितानेव परैति संनतिः ।
गुणेभ्य एव प्रभवन्ति कीर्तयः
प्रभावमाहात्म्यमिति श्रितं गुणान् ॥ ९५ ॥

अमर्षदर्पोद्धतकर्कशान्यपि
प्ररूढवैरस्थिरमत्सराण्यपि ।
प्रसादयन्त्येव मनांसि विद्विषां
शशिप्रकाशाधिककान्तयो गुणाः ॥ ९६ ॥

तदेवमेव क्षितिपाल पालयन्
महीं प्रतापानतदृप्तपार्थिवाम् ।
अमन्दशोभैर्विनयादिभिर्गुणै-
र्गुणानुरागं जगतां प्रबोधय ॥ ९७ ॥

प्रजाहितं कृत्स्नमयं महीपते-
स्तदस्य पन्था शुभयत्र भूतये ।
भवेच्च तद्राजनि धर्मवत्सले
नृपस्य वृत्तं हि जनोऽनुवर्तते ॥ ९८ ॥

---

१ Mss. संन्नि॰ for संनति .

अथ मन्दोदरी देवी रावणमुपेत्याभ्यधात्। हे स्वामिन्! प्राकृतलोकवत् शय्यायां निश्चेष्ट इव किं तिष्ठसि? रावणो मन्दोदरी-
य म्। मवोचत्–हे मन्दोदरि! वैदेहीविरहाद्भोक्तुं, पातुं, क्रीडितुं, वक्तुं, तवालोकयितुं च न क्षमोऽस्मि। तर्हि त्वं तत्र वैदेह्याः समीपे गच्छ गत्वा तथा कुरु यथा सा सीता मयि रिरंसते, अन्यथा मम जीवितं नास्ति। यतः—

कम्पः स्वेदः श्रमो मूर्च्छा भ्रमिर्ग्लानिर्बलक्षयः। राजयक्ष्मादिरोगाश्च भवेयुर्मैथुनोत्थिता॥१॥
॥७७॥ स्त्रीसंभोगेन यः कामज्वरं प्रतिचिकीर्षति। स हुताशं घृताहुत्या विध्यापयितुमिच्छति॥२॥
वरं ज्वलदयःस्तंभपरिरंभो विधीयते। न पुनर्नरकद्वार–रामाजघनसेवनम्॥३॥
सतामपि हि वामभ्रूर्ददाना हृदये पदम्। अभिरामं गुणग्रामं निर्वासयति निश्चितम्॥४॥
वंचकत्वं नृशंसत्वं चंचलत्वं कुशीलता। इति नैसर्गिका दोषा यासां तासु रमेत कः॥५॥
भवस्य बीजं नरकद्वारमार्गस्य दीपिका। शुचां कंदः कलेर्मूलं दुःखानां खानिरंगना॥६॥
प्राणसंदेहजननं परमं वैरकारणम्। लोकद्वयविरुद्धश्च परस्त्रीगमनं त्यजेत्॥७॥
सर्वस्वहरणं बन्धं शरीरावयवच्छिदाम्। मृतश्च नरकं घोरं लभते पारदारिकः॥८॥
लावण्यपुण्यावयवां पदं सौन्दर्यसंपदः। कलाकलापकुशलामपि जह्यात्परस्त्रियम्॥९॥

इत्याद्युक्तिभिर्मन्दोदर्या रावणपत्न्या प्रतिबोधितोऽपि रावणो न बुबुधे बहुलकर्मत्वान्नरकगामित्वाच्च। पुना रावणो मन्दोदरीं प्रति भणति, हे प्रिये! प्रियभक्ते! मया गुरुसमीपे नियमो गृहीतोऽस्ति। अहमप्रसन्नामनिच्छन्तीं पररमणीं न रेमे, इत्यभिग्रहो

गुरुसाक्षिको मया गृहीतः। तदभिग्रहं प्राणान्तेऽपि न त्यजामि, अतस्त्वं याहि, गत्वा सा सीता मयि रमते तथा कुरु। मन्दोदर्यपि पत्युः पीडया पीडिता देवरमणोद्याने गत्वा सीतामेवमुवाच–हे सुन्दरि! हे सीते! हे सुभगे! एषाऽहं दशाननस्याग्रमहिषी मन्दोदरी नाम्नी त्वयि दासीत्वं प्रपत्स्ये। मद्वचसा त्वं दशकन्धरं भजस्व। हे सुरसुन्दरीनिभे! अस्मिन्संसारे त्वमेव धन्यासि, यां मम पतिः विश्वसेव्यांह्रिकमलस्त्वामभिलषते, अतस्त्वं ममोक्तं वचनमङ्गीकुरु, रावणं पतिं कृत्वा विश्वस्वामिनी भव, त्वं रामेण भूचरेण पत्तिमात्रेण पतिना भुवं भ्रान्त्वा क्व यास्यसि? यदि दशाननः पतिर्लभ्यते तर्ह्यन्यैः किं क्रियते, रावणो द्वात्रिंशद्गुणोपेतो नायकः, यथा–कुलीनः शीलवान् शौचवान् प्रियंवदः सततव्ययी प्रीतिमान् सौभाग्यवान् विनयवान् कीर्तिमान् त्यागी विवेकी शृङ्गारी अभिमानी श्लाघावान् समुज्ज्वलवेषः द्विसप्ततिकलाकुशलः सत्यवाक्प्रियः वदान्यः स्वजनप्रियः सुगन्धिप्रियः सुवृत्तो मन्त्रवान् क्लेशसहः स्वदत्ताप्रकाशकः पण्डितोत्तमः सुसत्त्वः साधर्मिकः महोत्साही गुणग्राही क्षमी परिभावकश्चेति। हे सीते! हे सुभगे! एवंविधं द्वात्रिंशद्गुणैः संयुक्तं नायकं रावणं यदि न सेविष्ये तर्हि त्वं भोगैर्वंचिता दुःखभारैः संश्रिता कं नरं सेविष्ये। मन्दोदरीवचनानि श्रुत्वा सीता सोत्साहं सोपालम्भं बभाषे—

रुषा बभाषे सीतैवं क्व सिंहः क्व च जम्बूकः। क्व सुपर्णः क्व वा काकः क्व रामः क्व च ते पतिः ॥१॥
दम्पतित्वमहो युक्तं तव तस्य च पाप्मनः। रिरंसुरेकोऽन्यस्त्रीषु दूती भवति चापरा ॥२॥
द्रष्टुमप्युचिता नासि किमु संभाषितुं हले। स्थानादितो गच्छ गच्छ त्यज दृष्टिपथं मम ॥३॥

एवं तिरस्कृता मन्दोदरी रावणसमीपं गता। ततो मन्दोदरीसहितो रावणः सीतासमीप आगात्। सीतां प्रति रावणो जगाद।

अथ मन्दोदरी देवी रावणमुपेत्याभ्यधात्। हे स्वामिन्! प्राकृतलोकवत् शय्यायां निश्चेष्ट इव किं तिष्ठसि? रावणो मन्दोदरीमवोचत्–हे मन्दोदरि! वैदेहीविरहाज्जीवितुं, पातुं, क्रीडितुं, वक्तुं, तवालोकयितुं च न क्षमोऽस्मि। तर्हि त्वं तत्र वैदेह्याः समीपे गच्छ गत्वा तथा कुरु यथा सा सीता मयि रिंसते, अन्यथा मम जीवितं नास्ति। यतः—

कम्पः स्वेदः श्रमो मूर्च्छा भ्रमिर्ग्लानिर्बलक्षयः। राजयक्ष्मादिरोगाश्च भवेयुर्मैथुनोत्थिता ॥१॥
स्त्रीसंभोगेन यः कामज्वरं प्रतिचिकीर्षति। स हुताशं घृताहुत्या विध्यापयितुमिछति ॥२॥
वरं ज्वलदयःस्तंभपरिरंभो विधीयते। न पुनर्नरकद्वार–रामाजघनसेवनम् ॥३॥
सतामपि हि वामभ्रूर्ददाना हृदये पदम्। अभिरामं गुणग्रामं निर्वासयति निश्चितम् ॥४॥
वंचकत्वं नृशंसत्वं चंचलत्वं कुशीलता। इति नैसर्गिका दोषा यासां तासु रमेत कः ॥५॥
भवस्य बीजं नरकद्वारमार्गस्य दीपिका। शुचां कंदः कलेर्मूलं दुःखानां खानिरंगना ॥६॥
प्राणसंदेहजननं परमं वैरकारणम्। लोकद्वयविरुद्धश्च परस्त्रीगमनं त्यजेत् ॥७॥
सर्वस्वहरणं बन्धं शरीरावयवच्छिदाम्। मृतश्च नरकं घोरं लभते पारदारिकः ॥८॥
लावण्यपुण्यावयवां पदं सौन्दर्यसंपदः। कलाकलापकुशलामपि जह्यात्परस्त्रियम् ॥९॥

इत्याद्युक्तिभिर्मन्दोदर्या रावणपत्न्या प्रतिबोधितोऽपि रावणो न बुबुधे बहुलकर्मत्वान्नरकगामित्वाच्च। पुना रावणो मन्दोदरीं प्रति भणति, हे प्रिये! प्रियभक्ते! मया गुरुसमीपे नियमो गृहीतोऽस्ति। अहमप्रसन्नामनिच्छन्तीं पररमणीं न रेमे, इत्यभिग्रहो

गुरुसाक्षिको मया गृहीतः। तदभिग्रहं प्राणान्तेऽपि न त्यजामि, अतस्त्वं याहि, गत्वा सा सीता मयि रमते तथा कुरु। मन्दोदर्यपि पत्युः पीडया पीडिता देवरमणोद्याने गत्वा सीतामेवमुवाच–हे सुन्दरि! हे सीते! हे सुभगे! एषाऽहं दशाननस्याग्रमहिषी मन्दोदरी नाम्नी त्वयि दासीत्वं प्रपत्स्ये। मद्वचसा त्वं दशकन्धरं भजस्व। हे सुरसुन्दरीनिभे! अस्मिन्संसारे त्वमेव धन्यासि, यां मम पतिः विश्वसेव्यांह्रिकमलस्त्वामभिलषते, अतस्त्वं ममोक्तं वचनमङ्गीकुरु, रावणं पतिं कृत्वा विश्वस्वामिनी भव, त्वं रामेण भूचरेण पत्तिमात्रेण पतिना भुवं भ्रान्त्वा क्व यास्यसि? यदि दशाननः पतिर्लभ्यते तर्ह्यन्यैः किं क्रियते, रावणो द्वात्रिंशद्गुणोपेतो नायकः, यथा–कुलीनः शीलवान् शौचवान् प्रियंवदः सततव्ययी प्रीतिमान् सौभाग्यवान् विनयवान् कीर्तिमान् त्यागी विवेकी शृङ्गारी अभिमानी श्लाघावान् समुज्ज्वलवेषः द्विसप्ततिकलाकुशलः सत्यवाक्प्रियः वदान्यः स्वजनप्रियः सुगन्धिप्रियः सुवृत्तो मन्त्रवान् क्लेशसहः स्वदत्ताप्रकाशकः पण्डितोत्तमः सुसत्त्वः सार्धर्मिकः महोत्साही गुणग्राही क्षमी परिभावकश्चेति। हे सीते! हे सुभगे! एवंविधं द्वात्रिंशद्गुणैः संयुक्तं नायकं रावणं यदि न सेविष्ये तर्हि त्वं भोगैर्वंचिता दुःखभारैः संश्रिता कं नरं सेविष्ये। मन्दोदरीवचनानि श्रुत्वा सीता सोत्साहं सोपालम्भं बभाषे—

रुषा बभाषे सीतैवं क्व सिंहः क्व च जम्बूकः। क्व सुपर्णः क्व वा काकः क्व रामः क्व च ते पतिः ॥१॥
दम्पतित्वमहो युक्तं तव तस्य च पाप्मनः। रिरंसुरेकोऽन्यस्त्रीषु दूती भवति चापरा ॥२॥
द्रष्टुमप्युचिता नासि किमु संभाषितुं हले। स्थानादितो गच्छ गच्छ त्यज दृष्टिपथं मम ॥३॥

एवं तिरस्कृता मन्दोदरी रावणसमीपं गता। ततो मन्दोदरीसहितो रावणः सीतासमीप आगात्। सीतां प्रति रावणो जगाद।

अथ मन्दोदरी देवी रावणमुपेत्याभ्यधात्। हे स्वामिन्! प्राकृतलोकवत् शय्यायां निश्चेष्ट इव किं तिष्ठसि? रावणो मन्दोदरीमवोचत्–हे मन्दोदरि! वैदेहीविरहाद्भोक्तुं, पातुं, क्रीडितुं, वक्तुं, तवालोकयितुं च न क्षमोऽस्मि। तर्हि त्वं तत्र वैदेह्याः समीपे गच्छ गत्वा तथा कुरु यथा सा सीता मयि रिरंसते, अन्यथा मम जीवितं नास्ति। यतः—

कम्पः स्वेदः श्रमो मूर्च्छा भ्रमिर्ग्लानिर्बलक्षयः। राजयक्ष्मादिरोगाश्च भवेयुर्मैथुनोत्थिता ॥१॥
स्त्रीसंभोगेन यः कामज्वरं प्रतिचिकीर्षति। स हुताशं घृताहुत्या विध्यापयितुमिच्छति ॥२॥
वरं ज्वलदयःस्तंभपरिरंभो विधीयते। न पुनर्नरकद्वार–रामाजघनसेवनम् ॥३॥
सतामपि हि वामभ्रूर्ददाना हृदये पदम्। अभिरामं गुणग्रामं निर्वासयति निश्चितम् ॥४॥
वंचकत्वं नृशंसत्वं चंचलत्वं कुशीलता। इति नैसर्गिका दोषा यासां तासु रमेत कः ॥५॥
भवस्य बीजं नरकद्वारमार्गस्य दीपिका। शुचां कंदः कलेर्मूलं दुःखानां खानिरंगना ॥६॥
प्राणसंदेहजननं परमं वैरकारणम्। लोकद्वयविरुद्धश्च परस्त्रीगमनं त्यजेत् ॥७॥
सर्वस्वहरणं बन्धं शरीरावयवच्छिदाम्। मृतश्च नरकं घोरं लभते पारदारिकः ॥८॥
लावण्यपुण्यावयवां पदं सौन्दर्यसंपदः। कलाकलापकुशलामपि जह्यात्परस्त्रियम् ॥९॥

इत्याद्युक्तिभिर्मन्दोदर्या रावणपत्न्या प्रतिबोधितोऽपि रावणो न बुबुधे बहुलकर्मत्वान्नरकगामित्वाच्च। पुना रावणो मन्दोदरीं प्रति भणति, हे प्रिये! प्रियभक्ते! मया गुरुसमीपे नियमो गृहीतोऽस्ति। अहमप्रसन्नामनिच्छन्तीं पररमणीं न रेमे, इत्यभिग्रहो

हे सीते ! त्वं कस्मात्कुपिताऽसि ? एषा मन्दोदरी तव दास्यस्ति । अहमपि तव दासोऽस्मि । हे देवि ! सीते ! मयि प्रसादं कुरु । दृष्टया मां विलोकय इति श्रुत्वा सीता पराङ्मुखीभूय रावणं प्रत्युवाच—"हे रावण ! मां रामगेहिनीं हरन् त्वं कृतान्तदृष्टया दृष्टोऽसि यतः-रामे सानुजे द्विषति कियन्मात्रं जीविष्यसि ? किं जीवितादुद्विग्नोऽसि ? यत्त्वं मां वाञ्छसि"। सीतयैवमाक्रोश्यमानोऽपि भूयो भूयस्तथैवोवाच । धिगहो बलीयसी कामावस्था । भावहीनमैथुनं न भवति यतः—

वस्त्रहीनमलङ्कारं घृतहीनं च भोजनम् । स्वरहीनं च गान्धर्वं भावहीनं च मैथुनम् ॥१॥

एवं वार्तां कुर्वतः सूर्यो धाम्नां निधिः पश्चिमे लवणाम्बुधौ निममज्ज । तदा घोरा निशा प्रावर्तत । घोरबुद्धिरावणः सीताया उपसर्गान्प्रचक्रमे । यतः—क्रोधवान् कामान्धश्च ।

घूत्कारिणो महाघूकाः फेत्कुर्वाणाश्च फेरवः । वृका विचित्रं क्रन्दन्त ओतवोऽन्योन्ययोधिनः ॥१॥

पुच्छाच्छोटकृतो व्याघ्राः फुत्कुर्वाणाः फणाभृतः । पिशाचप्रेतवेतालभूताश्चाकृष्टकर्तृकाः ॥२॥

उच्छलन्तो दुर्ललिता यमस्येव सभासदः । विकृता रावणेनेयुरुपसीतं भयंकराः ॥३॥ त्रिभिर्विशेषकम् ॥

अथ सीता तान्पूर्वोक्तान् भयंकरान् श्वापदान्दृष्ट्वा मनसा पञ्चपरमेष्ठिनमस्कारं ध्यायन्ती तस्थौ न तु दशाननं भेजे । प्रभाते विभीषणस्तन्निशावृत्तं निशम्य सीतासमीप आगत्य सीतां प्रत्येवमवोचत् । हे भद्रे ! त्वं कासि ? केनानीता ? केन हेतुना राक्षसीभिः परिवृता वने स्थापिताऽसि ? मम परस्त्रीसोदरस्य सर्वं सत्यमाख्याहि । सीतयोक्तम्—हे विभीषण ! हे धर्मबान्धव ! मम वृत्तान्तं शृणु । अधोमुखीभूत्वैवमवादीत्—अहं जनकपुत्र्यस्मि सीता नाम्ना । भामण्डलस्वसाऽस्मि, तथा रामचन्द्रस्य पत्न्यस्मि । दशरथ-

स्य वध्वस्मि । अहं पत्या समं सानुजेन लक्ष्मणेन देवरेण समं दण्डकारण्यमागमम् । तत्रारण्य एकस्मिन्दिने मम देवरः क्रीडयेतस्ततो भ्राम्यन् सूर्यहासमहासिं ददर्श तदसिं गृहीत्वा कुतूहलात् समीपस्था वंशजाली तेनासिना चिच्छिदे । अज्ञानात्तदन्तःस्थतत्साधकशिरोऽच्छिदत् । तस्य साधकस्य शिरोऽज्ञानाच्छित्वा कृतपश्चात्तापो भ्रातुः समीपमागात् । सर्वं स्वरूपमुक्तम्, खड्गो दर्शितः । मत्पतिना रामेणोक्तम्—हे भ्रातः ! त्वया साधु न विहितम्, अस्य खड्गस्य साधकस्त्वया हतः । लक्ष्मणेनोक्तम्—हे बान्धव ! मयाऽज्ञानात् कश्चित्पुमान् हतः । एवं तौ वार्तां कुर्वाणौ वर्तेते तावता मद्देवरस्यानुपदं काचित्कामिनी शूर्पणखेति नाम्नी तत्रागता । मत्पतिं दृष्ट्वा मोहिता रामं कामरूपं कामाय ययाचे । रामेणोक्तम्—मम पत्न्यस्ति, तर्हि त्वं लक्ष्मणं भजस्व । सा लक्ष्मणं गता । लक्ष्मणेनोक्तम्–त्वं पूर्वं रामं गता अतो रामं भजस्व त्वं मम भ्रातृजाया जाता । एवमुभाभ्यां तिरस्कृता स्वस्थानं गता । तत्क्षणादेव तया प्रेषितं सैन्यं समागतम् । तत्सैन्यं दृष्ट्वा राममापृच्छ्य लक्ष्मणः सिंहनादसंकेतं कृत्वा युद्धं कर्तुं ययौ । मायया क्ष्वेडानादं कृत्वा रामं दूरे नीत्वा दुराशो रावणो राक्षसो मां स्ववधायैवाहृत । तच्छ्रुत्वा विभीषणः रावणान्तिके गत्वा रावणं नत्वा बभाषे–हे बान्धव ! हे स्वामिन् ! त्वया कुलोचितं न कृतम्, यत्सीताहरणं विहितम् । अद्यापि किञ्चिद्गतं नास्ति यावद्रामः सौमित्रिश्च नायातः तावत्सीताऽऽशु तदन्तिके मुच्यताम् । इति विभीषणेनोक्ते कोपं कृत्वा रावणो बभाषे–रे विभीषण ! त्वं किं भाषसे ? सीता मया समर्पणाय किमानीताऽस्ति ? एषा मम भार्या भविष्यति । तौ वराकौ रामलक्ष्मणावहं हनिष्यामि ।

ऊचे विभीषणो भ्रातः ! सत्यं तज्ज्ञानिनो वचः । यद्रामपत्न्याः सीतायाः कृते नः कुलसंक्षयः ॥१॥
भरतस्य बन्धोमें वाचं मन्यसे नान्यथा कथम् । मया हतो दशरथः स तावज्जीवितः कथम् ॥२॥

न यद्यप्यन्यथाभावि भावितस्तु महाभुज ! । तथापि प्रार्थ्यसे मुञ्च सीतां नः कुलघातिनीम् ॥३॥
अनाकर्णितकेनेव विभीषणगिरामथ । आरोप्य पुष्पके सीतां भ्रमन्नेवमदर्शयत् ॥४॥

हे सीते ! अमी मे क्रीडाशैलाः, अमी स्वादुतोयाः पुष्करिण्यः, अमूनि नन्दनोद्यानसन्निभान्युपवनानि, अमूनि धारावेश्मानि, अमूश्च केलिकुलिन्यः, अमूनि केलिवनानि ।

एतानि रतिवेश्मानि स्वर्गखण्डोपमानि च । मया सह रमस्वैषु सुभ्रु (सुभ्रूः) ! यत्र रतिस्तव ॥१॥
गतं ते यौवनं भीरु ! जीवितं च निरर्थकम् । या न वेत्सि सदा पुंसां सस्नेहं सुरतक्रमम् ॥२॥

सीतयोक्तम्–अहमन्यं पुरुषं नेच्छामि । एकं श्रीरामचन्द्रं ध्यायन्ती मौनेनाऽस्थात् । पुना रावण इतस्ततो भ्राम्यन् देवरमणोद्याने सीतां मुमोच । त्रिजटां राक्षसीं सीतासमीपे स्थापयित्वा रावणः स्वस्थाने गतः । अथ विभीषणः स्वभ्रातरं रावणमेवंविधं वाचोयुक्तेरगोचरं दृष्ट्वा कुलामात्यानाजूहवत्, ऊचे च–भो कुलामात्याः ! अस्मत्स्वामी कामातुरः स्वकुलक्षयं करिष्यति । यतः–कामस्त्वेकोपि दुर्जयः किम्पुनः कृतसाहाय्यः परनारीरिरंसया । अतः परं महति व्यसनार्णवे पतिष्यति । अतो यूयं गत्वा मम बान्धवं बोधयत । यथाऽस्मात्पापान्निवर्तते तथा कुर्वन्तु । अन्यथा सर्वेषां क्षयो भविष्यति राज्यराजामात्यादीनाम् । विभीषणवाक्यं श्रुत्वा मन्त्रिणो रावणसमीपं गत्वा विज्ञापयंति यथा–स्वामिन् ! एषा सीता मुच्यताम् । अस्या निमित्तेन नः कुलक्षयो भविष्यति । ज्ञानिना नैमित्तिकेन च कथितमस्ति । अतः स्वामिन् ! एनां मुञ्च । इत्यादियुक्त्या मन्त्रिणा बहु विज्ञप्तोऽपि सीतां नामुञ्चत् । यथाऽभव्ये धर्मोपदेशो न लगति तथा रावणेऽपि मन्त्रिवचो नालगत् । पुनर्मन्त्रिणोक्तम्–स्वामिन् ! सुग्रीवहनुमन्मुख्याः सुभटा राघवस्य साहाय्यं

कर्तुं मिलिताः सन्ति । न्यायभाजां कः पक्षपातं नावलम्बते । स्वामिन् ! सीतानिमित्तादिक्ष्वाकात्कुलक्षयो ज्ञानिनोक्तः तत्साम्प्रतमुपस्थितम् । एवं मन्त्रिणा बहूच्यमानोऽपि नाबुध्यत् । ततो विभीषणोऽनागतभयं दृष्ट्वा लङ्कावप्रं सज्जीकरोति । वप्रे कपिशीर्षकाणि खातिका यन्त्रादिभिर्वप्रं सज्जीकरोति । यतः—अनागतं हि पश्यन्ति मन्त्रिणो मन्त्रचक्षुषा ।

## ॥ अथ रामकथा ॥

इतश्च कमपि कालं सीताविरहपीडितोऽपि रामः सौमित्रिणाऽऽश्वास्यमानः कतिचिद्दिनान्यत्यवाहयत् । एकस्मिन्दिने रामेणानुशिष्य लक्ष्मणः प्रेषितः । लक्ष्मणोऽपि सुग्रीवं प्रति तूणचापकृपाणभृत् स्वयं प्रतस्थे।

दलयन्क्ष्मां पदन्यासैः कम्पयंस्तं च पर्वतम् । वेगान्दोलितदोःस्पर्शान्मार्गवृक्षांश्च पातयन् ॥१॥

उत्कटभ्रुकुटिर्भीमललाटोऽरुणलोचनः । भीतैर्द्वाःस्थैर्मुक्तमार्गः प्राप सुग्रीववेश्म सः ॥२॥ युग्मम् ॥

आयातं लक्ष्मणं श्रुत्वा निर्गत्यान्तःपुराद्द्रुतम् । उपतस्थे कपिराजः कम्पमानवपुर्भयात् ॥३॥

ऊचे च लक्ष्मणः क्रुद्धः कृतकृत्योऽसि वानर ! । सुखं तिष्ठसि निःशंकः स्वान्तःपुरसमावृतः ॥४॥

स्वामी तरुतलासीनो विषसानन्दसन्निभान् । यथाऽत्येति न तद्वेत्सि प्रतिपन्नं च विस्मृतम् ॥५॥

सीताप्रवृत्तिमानेतुमुत्तिष्ठस्वाधुनाऽपि हि । मा साहसगतेर्मार्गं गमः संकुचितो न सः ॥६॥

लक्ष्मणोक्तमेतद्वचनं श्रुत्वा भीतिभीतः सुग्रीवो लक्ष्मणपादयोः पतित्वा कपीश्वर एवमवदत्—हे स्वामिन् ! एकं मम प्रमादं

---

१ स साहसगतेर्मार्गो मृत्युरूपो न संकुचितः । तथापि मरणं भविष्यतीति ध्वनिः ।

सहस्व। यतस्त्वं मे प्रभुः। एवमुक्त्वा सौमित्रिः कपीश्वरं सुग्रीवमग्रे कृत्वा यत्र श्रीरामचन्द्रोऽस्ति, तत्र गतः। तत्रागत्य श्रीरामं नमश्चक्रे। ततः श्रीरामः सुग्रीवं प्रत्यभाषिष्ट-भो सुग्रीव! सीताप्रवृत्तिं समानय। सीता कुत्राऽस्ति, यत्रास्ति तत्र किं करोति। इति श्रीरामवचनं श्रुत्वा सुग्रीवः स्वान्सैन्यान्सर्वत्र ग्रामाकरनगरखेटकर्वटमडम्बद्रोणमुखादिषु विद्याधरनगरादिषु च प्रेष्य सर्वत्र विलोकयामास। तेऽपि सुभटाः सर्वत्र भ्रान्त्वा भ्रान्त्वा विलोकयित्वा समाजग्मुः। परं केनाऽपि सीताप्रवृत्तिर्न लब्धा। इतश्च सीताहरणवृत्तान्तं भामण्डलेन श्रुतम्। भामण्डलस्तत्राऽऽजात् यत्राऽस्ति रामः। ससैन्योऽपि विराधः पाताललङ्कातः समागतः। एवमन्येऽपि विद्याधराः समाजग्मुः। ततः सुग्रीवः स्वयं विलोकनकृते निर्गतः। सुग्रीवः स्थाने स्थाने विलोकयन् कम्बूद्वीपं समागतः। तं रत्नजटीविद्याधरो दृष्ट्वा चिन्तयति किमेषः सुग्रीवोऽत्राऽऽगतोऽस्ति? किं दशमौलिना ममापराधं संस्मृत्य मद्वधाय प्रेषितोऽस्ति?

अथवा-हृता विद्या दशास्येन पुरा तावन्महौजसा। इदानीमेष मे प्राणान्हरिष्यति हरीश्वरः॥१॥

इति चिन्तातत्परं रत्नजटीविद्याधरं प्रति सुग्रीवस्तत्समीपे गत्वैवमुवाच—अहो रत्नजटी! त्वं मां किं नोपलक्षसे? तथा त्वं व्योमगमनेऽलसः किम्? रत्नजट्यवोचत्-हे वानरेश्वर! मम विद्या दशास्येन हृता जानकीं हरतो रावणस्य पृष्ठेऽहं धावितः। मयोक्तम्-रे पापिन्! मत्स्वामिनो भगिनीं हृत्वा क यास्यसि? इत्युक्त्वा यावता खड्गमाकृष्य धावितस्तावता तेन रावणेन मम विद्या हृता, अहमत्र पतितः। एतच्छ्रुत्वा सुग्रीवेण विमान आरोप्य रत्नजटी रामसमीपं नीतः। सुग्रीवेण सकलोऽपि वृत्तान्तो रत्नजटीमुखेन विज्ञापितः। यथा—हे श्रीराम! सीता रावणेन हृता। पुष्पके विमान आरोपिता। हा राम! हा देवर सौमित्रे! हा भामण्डल! इति वादिनी, रुदती, समुद्रोपरि गच्छन्ती, पूत्कुर्वती मया श्रुता श्रवणाभ्यां, दृष्टा नेत्राभ्याम्, ततोऽहं धावितो मत्स्वामि-

भगिनीति कृत्वा। तेन पापेन मम सर्वा विद्याऽपहृता। ततोऽहं कम्बूद्वीपे पतितः। सुग्रीवेण राज्ञेहानीतः। एतन्मम चरित्रम्।

भूयो भूयोऽपि पप्रच्छ सीतोदन्तं रघूद्वहः। भूयो भूयोऽपि सोऽप्याख्यत् तन्मनःप्रीतिहेतवे ॥१॥

अपृच्छद्रामभद्रस्तान्सुग्रीवादीन्महाभटान्। इतः कियति दूरे सालङ्का पुस्तस्य रक्षसः ॥२॥

सुग्रीवादयो विद्याधरा रामं प्रत्यूचुः—हे श्रीराम! तयाऽऽसन्नया किमथ दूरस्थया किम्? यस्य रावणस्य जगज्जिष्णोः पुरः के वयम्? स रावणः सर्वान्विद्याधरभटान्स्वौजसा तृणवद्गणयति। रामोऽप्यूचे—भो विद्याधराः! रावणं मम दर्शयत, अहमपि तस्य पराक्रमं पश्यामि। यदि रावणो मम भ्रातुः पुरतः स्थास्यति तदा ज्ञास्यतेऽसौ बलवान्, अन्यथाऽस्य किं बलम्? लक्ष्मण उवाच—भो विद्याधराः! यः सारमेयवद्गृहं शून्यं दृष्ट्वा सीतां हृत्वा गतः। तस्य पराक्रमः किं वर्ण्यते। तावज्जाम्बवानाह—ज्ञानवताऽनन्तवीर्येणोक्तम्, यथा यः कोटिशीलामुत्पाटयिष्यति, स रावणं हन्ति। सत्यमेतत् यतः ज्ञानिनोक्तम्—ज्ञानिवचनं नान्यथा भावि। विद्याधरेणोक्तम्—भो रामलक्ष्मणौ! असत्प्रत्ययहेतवे यूयं तां शीलां समुत्पाटयत। रामेणोक्तम्—एवं भवतु। ततः सर्वेऽपि विद्याधरा लक्ष्मणं रामाज्ञया यानारूढं कृत्वा व्योममार्गेण सपदि कोटिशीलान्तिके निन्युः। लक्ष्मणोऽपि कोटिशीलान्तिके गत्वा तां पुष्पादिभिः सम्पूज्य देवान्, गुरूंश्च, संस्मृत्य वामेतरेण बाहुना सन्दधे, दन्ती लतामिव। सुरैर्लक्ष्मणस्योपरि पुष्पवृष्टिः कृता साधुसाध्वित्याकाशे गीरुच्छलिता। सञ्जातप्रत्ययैर्विद्याधरैः पुनर्लक्ष्मणो विमान आरोप्य किष्किन्धायां रामसमीपे मुक्तः। कपिवृद्धास्ततः प्रोचुः। हे स्वामिन्! आदौ द्विषो दूतः प्रेष्यः नीतिमतामियं स्थितिः। यदि दूतेन सन्देशहारकेण प्रयोजनं सिध्येत् तदा संग्रामोद्यमकर्मणा राज्ञा पर्याप्तम्। तर्हि कश्चिद्दूतः समर्थः प्रेष्यतां यो गत्वा कार्यं कृत्वा शीघ्रमायाति। सुग्रीवेण विद्याधराधीशेन हनु-

मानाहूतः । हनुमानप्यागत्य श्रीरामचन्द्रं लक्ष्मणं सुग्रीवं च नत्वैवमवोचत्—आदिश स्वामिन् ! किं करोमि ? ततो रामाय सुग्रीव आह । हे श्रीराम ! अयं हनुमान् विधुरेऽपि परमो बन्धुः विनयी पावनंजयिः । अस्य तुल्यो द्वितीयो नास्ति प्रभुकार्यकरणक्षमः । ततः स्वामिन् ! सीताप्रवृत्तिलाभार्थमेनं समादिश । हनुमानेवमुवाच—हे स्वामिन् ! कपयोऽनेकशः सन्ति नामतो गवो, गवाक्षो, गवयः, शरभो, गन्धमादनः, नीलो, द्विविदो, मैन्दो, जाम्बवान्, अंगदो, नलः इत्यादयो वानरेश्वरा बहवः कपिपुङ्गवा वर्तन्ते । एतेषामन्त्योऽहमप्यस्मि त्वत्कार्यकरणक्षमः । कथय किं करोमि ? यथा—

लङ्कां सराक्षसद्वीपामुत्पाट्येह किमानये । यद्बद्ध्वा सबान्धवमथानयामि दशकन्धरम् ? ॥१॥

स ‚ म्यं दशग्रीवं हत्वा तत्रैव वा द्रुतम् । देवीं जनकजामेवानयामि निरुपद्रवाम् ॥२॥

तद्गच्छ पुर्यां लङ्कायां सीतां तत्र गवेषयेः ॥३॥

णं चाभिज्ञानमत्र समानयेः ॥४॥

त्र तिष्ठति । हे देवि ! त्वं जीवितं मा त्याक्षीः

ां ददाति । हनुमांस्तां मुद्रां लात्वा, रामं

ं नत्वा हनुमान् सपरिकरो लङ्कां पुरीं प्रत्य-

स्य नगरीं माहेन्द्रपुरपत्तनं दृष्ट्वा चिन्तयति—

ा, तर्हि तस्य मातामहस्य किंचिच्चमत्कारं दर्शया-

मीति संचिन्त्य क्रुद्धो हनुमान् प्रतिच्छन्दनिनादैर्दिशो बधिरयत्, दिङ्मुखप्रतिशब्दितैः ब्रह्माण्डं स्फोटयदिव रणतूर्यं वादयन् मातामहं माहेन्द्रं क्षोभयन्नास्ते। एवंविधं परबलं दृष्ट्वेन्द्रविक्रमो माहेन्द्रः ससैन्यः सपुत्रः समित्रो रणकर्मणि तत्परो नगरान्निर्ययौ। तयोर्माहेन्द्रहनुमतोर्महारणः समजायत। हनुमांस्तस्मिन्सङ्ग्रामे परसैन्यानि बभञ्ज प्रभञ्जनो द्रुमानिव। प्रसन्नकीर्तिर्माहेन्द्रोऽपि हनुमता सह दौहित्रसम्बन्धमजानन् युयुधे। यतः—

उभावपि महाबाहू उभावप्यत्यमर्षणौ। अन्योऽन्यं द्वन्द्वयुद्धेन जनयामासतुः श्रमम् ॥१॥

एवं युध्यमानो हनुमांश्चिन्तयति–अहो मया युद्धमारब्धम्, स्वामिकार्यं विलम्बितम्, यदि मातामहं न जीयते तर्हि मानक्षतिः, यदि विलम्बः क्रियते तर्हि स्वामिकार्यक्षतिः स्यादिति ध्यात्वा क्रुद्धो हनुमान् मोहिन्या विद्यया मोहयन्मातामहं जग्राह। गृहीत्वा पश्चात्पादयोः पतित्वैवमुवाच–हे राजन्! एषोऽहं पवनाञ्जनयोः पुत्रो हनुमान्नाम्ना स्वामिना श्रीरामचन्द्रेण, सुग्रीवेण च प्रेषितोऽस्मि सीताप्रवृत्तिमानेतुम्, लङ्कां व्रजतो माहेन्द्रनगरस्योपरि गच्छता मया पूर्वमातृनिर्वासनाजातामर्षेण यत्तातस्यानुचितं विहितं तत्तातेन क्षन्तव्यमित्युक्त्वा पादयोः पतित्वा क्षामितम्। माहेन्द्रोऽपि हनुमन्तं भुजाभ्यां समुद्धृत्य समालिङ्ग्य तमित्यूचे–हे महाभुज! प्राग्जनश्रुत्या श्रुतोऽसि, साम्प्रतमद्य मया दिष्ट्या दृष्टोऽसि विक्रमी, गच्छ स्वस्वामिकार्याय, ते पन्थानः शिवाय सन्तु, इति कथयित्वा माहेन्द्रः ससैन्यो राघवान्तिकेऽगात्। ततश्चलितो हनुमान्व्योम्ना गच्छन् दधिमुखाभिधे द्वीपे कायोत्सर्गे तस्थिवांसौ महामुनी प्रेक्षांचक्रे। तयोः साध्वोः नातिदूरे तिस्रः कुमारिका अपश्यत्। कथंभूताः–ध्यानस्था निरवद्याङ्गीर्विद्यासाधनतत्पराः। तस्मिन्समयेऽखिले द्वीपे दवानलः प्रजज्वाल। तौ साधू ताः कुमार्यश्च दवसङ्कटे निपेतुः। तद्वात्सल्येन हनुमान्सागरवारिभिर्मेघ इव तं

मानाहूतः । हनुमानप्यागत्य श्रीरामचन्द्रं लक्ष्मणं सुग्रीवं च नत्वैवमवोचत्—आदिश स्वामिन् ! किं करोमि ? ततो रामाय सुग्रीव आह । हे श्रीराम ! अयं हनुमान् विधुरेऽपि परमो बन्धुः विनयी पावनंजयिः । अस्य तुल्यो द्वितीयो नास्ति प्रभुकार्यकरणक्षमः । ततः स्वामिन् ! सीताप्रवृत्तिलाभार्थमेनं समादिश । हनुमानेवमुवाच—हे स्वामिन् ! कपयोऽनेकशः सन्ति नामतो गवो, गवाक्षो, गवयः, शरभो, गन्धमादनः, नीलो, द्विविदो, मैन्दो, जाम्बवान्, अंगदो, नलः इत्यादयो वानरेश्वरा बहवः कपिपुङ्गवा वर्तन्ते । एतेषामन्त्योऽहमप्यस्मि त्वत्कार्यकरणक्षमः । कथय किं करोमि ? यथा—

लङ्कां सराक्षसद्वीपामुत्पाटयेह किमानये । यद्वा सबान्धवमथानयामि दशकन्धरम् ? ॥१॥
सकुटुम्बं दशग्रीवं हत्वा तत्रैव वा द्रुतम् । देवीं जनकजामेवानयामि निरुपद्रवाम् ॥२॥
रामोऽपि निजगादैवं सर्वं सम्भवति त्वयि । तद्गच्छ पुर्यां लङ्कायां सीतां तत्र गवेषयेः ॥३॥
मदूर्मिकामिमां देव्या मदभिज्ञानमर्पयेः । तस्याश्चूडामणिं चाभिज्ञानमत्र समानयेः ॥४॥

पुनरिदं मद्वाचिकं शंसेः—हे देवि ! लक्ष्मणाग्रज ! त्वद्वियोगेनातुरस्त्वामेव ध्यायन् तिष्ठति । हे देवि ! त्वं जीवितं मा त्याक्षीः स्तोकैरेव दिनैरावयोः संगमो भविष्यतीति कथयेः । राम इत्युक्त्वा स्वनामाङ्कितां मुद्रां ददाति । हनुमांस्तां मुद्रां लात्वा रामं प्रत्युवाच—हे प्रभो ! अहं कार्यं कृत्वा यावदायामि तावद्भवानिह तिष्ठतु, इत्युक्त्वा श्रीरामं नत्वा हनुमान् सपरिकरो लङ्कां पुरीं प्रत्यचालीत् । विमानस्थोऽभिनवभानुमानिव स गच्छन् नभसा माहेन्द्रगिरिशिखरे मातामहस्य नगरीं माहेन्द्रपुरपत्तनं दृष्ट्वा चिन्तयति—इदं माहेन्द्रपुरं नगरं, माहेन्द्रो नाम राजा, येन मम माता निरपराधा निर्वासिता, तर्हि तस्य मातामहस्य किंचिच्चमत्कारं दर्शया-

मीति संचिन्त्य क्रुद्धो हनुमान् प्रतिच्छन्दनिनादैर्दिशो बधिरयत्, दिङ्मुखप्रतिशब्दितैः ब्रह्माण्डं स्फोटयदिव रणतूर्यं वादयन् मातामहं माहेन्द्रं क्षोभयन्नास्ते। एवंविधं परबलं दृष्ट्वेन्द्रविक्रमो माहेन्द्रः ससैन्यः सपुत्रः समित्रो रणकर्मणि तत्परो नगरान्निर्ययौ। तयोर्महेन्द्रहनुमतोर्महारणः समजायत। हनुमांस्तस्मिन्सङ्ग्रामे परसैन्यानि बभञ्ज प्रभञ्जनो द्रुमानिव। प्रसन्नकीर्तिर्माहेन्द्रोऽपि हनुमता सह दौहित्रसम्बन्धमजानन् युयुधे। यतः—

उभावपि महाबाहू उभावप्यत्यमर्षणौ। अन्योऽन्यं द्वन्द्वयुद्धेन जनयामासतुः श्रमम् ॥१॥

एवं युध्यमानो हनुमांश्चिन्तयति-अहो मया युद्धमारम्भि, स्वामिकार्ये विलम्बितम्, यदि मातामहं न जीयते तर्हि मानक्षतिः, यदि विलम्बः क्रियते तर्हि स्वामिकार्यक्षतिः स्यादिति ध्यात्वा क्रुद्धो हनुमान् मोहिन्या विद्यया मोहयन्मातामहं जग्राह। गृहीत्वा पश्चात्पादयोः पतित्वैवमुवाच-हे राजन्! एषोऽहं पवनाञ्जनयोः पुत्रो हनुमान्नाम्ना स्वामिना श्रीरामचन्द्रेण, सुग्रीवेण च प्रेषितोऽस्मि सीताप्रवृत्तिमानेतुम्, लङ्कां व्रजतो माहेन्द्रनगरस्योपरि गच्छता मया पूर्वमातृनिर्वासनाज्जातामर्षेण यत्तातस्यानुचितं विहितं तत्तातेन क्षन्तव्यमित्युक्त्वा पादयोः पतित्वा क्षामितम्। माहेन्द्रोऽपि हनुमन्तं भुजाभ्यां समुद्धृत्य समालिङ्ग्य तमित्यूचे-हे महाभुज! प्राग्जनश्रुत्या श्रुतोऽसि, साम्प्रतमद्य मया दिष्ट्या दृष्टोऽसि विक्रमी, गच्छ स्वस्वामिकार्याय, ते पन्थानः शिवाय सन्तु, इति कथयित्वा माहेन्द्रः ससैन्यो राघवान्तिकेऽगात्। ततश्चलितो हनुमान्व्योम्ना गच्छन् दधिमुखाभिधे द्वीपे कायोत्सर्गे तस्थिवांसौ महामुनी प्रेक्षांचक्रे। तयोः साध्वोः नातिदूरे तिस्रः कुमारिका अपश्यत्। कथंभूताः-ध्यानस्था निरवद्याङ्गीर्विद्यासाधनतत्पराः। तस्मिन्समयेऽखिले द्वीपे दवानलः प्रजज्वाल। तौ साधू ताः कुमार्यश्च दवसङ्कटे निपेतुः। तद्वात्सल्येन हनुमान्सागरवारिभिर्मेघ इव तं

दवाग्निं शमयामास। तदैव ताः कन्यकाः सिद्धविद्या मुनी प्रदक्षिणीकृत्य हनुमन्तं बभाषिरे–हे महापुरुष हनुमन्! त्वया साधुविहितम्, यद्दवाग्निः शमितः, दवाग्निशमनेन साधुरथा कृता। त्वत्साहाय्येनास्माकं कालं विनाऽपि विद्या सिद्धाः। हनुमता प्रोक्तम्–का यूयम्? ताः प्रोचुः–अस्मिन्दधिमुखे द्वीपे दधिमुखे पुरे राजा गन्धर्वराजोऽस्ति। तस्य राज्ञो वयं कन्यकाः स्मः। अस्मत्कृते खेचरोऽङ्गारक उन्मत्तोऽभवत्, मत्तातो गन्धर्वराजो न तस्मा अदात्, नान्यस्मै चादात्। ततोऽस्मत्तातेन कश्चिन्मुनिः पृष्टः–हे स्वामिन्! हे मुने! मम पुत्रीणां पतिः कः स्यात्? एताः पुत्र्यो मया कस्मै देयाः? मुनिनोक्तम्–यः साहसगतेर्विद्याधरस्य हन्ता स आसां तव पुत्रीणां वरो भावी। तच्छ्रुत्वाऽस्माभिस्तं पुरुषं ज्ञातुं विद्यासाधनमुपचक्रमिरे। तद्विद्याभ्रंशनिमित्तमङ्गारकेण दावानलो विहितः। स त्वया निष्कारणबन्धुना शमितः। या विद्याः षड्भिर्मासैः सिध्यति, सा विद्या त्वत्साहाय्यात्क्षणमात्रेण सिद्धा मनोगामिनी नाम विद्या। तासां बालिकानामेतद्वृत्तान्तं श्रुत्वा तासामग्रे हनुमता रामस्यापि सकलो वृत्तान्तः कथितः। अहमपि सीताप्रवृत्तिनिमित्तं लङ्कां यामि। अतस्ता मुदिताः पितुरग्रे गत्वा सर्वं रामवृत्तान्तं हनुमद्वृत्तान्तं च शशंसुः। सोऽपि गान्धर्वराजः पुत्रीभिः समं ससैन्यो रामचन्द्रमगात्। ततो हनुमानुत्पपात, उपलङ्कं गतः। तत्र लङ्कासमीपे घोरां भयंकरां कालनिशामिव भयदामाशालिकां विद्यां ददर्श। हनुमन्तं दृष्ट्वाऽऽशाली प्रोचे—

रे कपे क्व यातोऽसि यातोऽसि मम भोज्यताम्। इति ब्रुवाणा साक्षेपं व्यादादाति स्म सा मुखम् ॥१॥

हनुमान् गदापाणिस्तदाननं प्रविवेश। पुनस्तां विदार्य निर्ययावभ्रमध्यादादित्य इव। तयाऽऽशाल्या विद्यया च लङ्कायां विहितो यः प्राकारो हनुमांस्तं प्राकारं विद्यासामर्थ्यतः कर्परलीलया मङ्क्ष्वभाङ्क्षीत्। ततश्चलितो हनुमान् लङ्काप्रासन्ने गतः। तद्द्वार-

थक्रो वज्रमुखाभिधो विद्याधरो हनुमता सह युयुधे। हनुमानपि तं विद्याधरं सङ्ग्रामे हतवान्। हते वज्रमुखे विद्याधरे तत्पुत्री लङ्कासुन्दरी कन्यका विद्याबलवती पितृवैरात् कोपवती युद्धाय मारुतिमाह्वास्त। चतुरङ्गचमूयुक्ता साऽचालीद्धनुमत उपरि। हनुमांश्चिन्तयति–कैषा बाला विद्युल्लेखेव चञ्चला शस्त्रव्यापृतकरा? नूनमेषा वज्रमुखपुत्री वर्तते। अहं पुमान् एषा बालिका तदनया सह किं युद्धं करोमि? तदस्याः शस्त्राणि छिनद्मीति कृत्वा लङ्कासुन्दर्याः सर्वाणि शस्त्राण्यच्छिदत्, पावनञ्जयिस्तां स्त्रियं शीघ्रं निरस्त्रीचकार निष्पत्रवल्लीमिव। साश्चर्येण तया हनुमान्विलोकितः। क एष शस्त्रच्छिदिति सुचिरं हनुमन्तं निरीक्षमाणा सा कामपरवशा जाता। हनुमन्तं नेत्रबाणेन ताडयामास। हनुमन्तमित्यूचे–भो महापुरुष! अहमविचार्य त्वया सह युद्धसज्जा जाता, तत्क्षम्यताम्। यतः–इति ज्ञानिनोक्तम्–यथा

आप्यातं साधुना पूर्वं यस्ते जनकघातकः। भावी भर्तेति तन्नाथ! मामुद्वह वशंवदाम् ॥१॥

पुनः प्रोवाच–अस्मिन्सकले जगति तव समो भटोऽन्यः कोऽपि नास्ति। अहमपि तव पत्नी भूत्वा नारीश्रेष्ठा भविष्यामि। अतोऽहं त्वामेव परिणेष्ये नान्यम्। तच्छ्रुत्वा गान्धर्वेण विवाहेन सानुरागमुपायत। तदा भानुमान्व्योमाटवीं पर्यटन् श्रमात्स्नातुकाम इव पयोधौ ममज्ज निजं तेजोऽग्नौ दत्त्वा। तस्यां निशायां नागरीभिः स्वस्वगृहेषु प्रदीपका अदीप्यन्त। छलच्छेकाः खला अतस्तमो जृम्भितुमारेभे। किमञ्जनाद्रेश्चूर्णैः पूर्णं जगदिदं दृश्यते? यतः—

नहि स्थलं नहि जलं न दिशो न नभो न भूः। तदानीं किं बहूक्तेन स्वहस्तोऽपि न लक्ष्यते ॥१॥

एकाकारकरे विष्वक् तमःपूरे प्रसर्पति। विश्वं विश्वमनालोकमभूत्पातालसन्निभम् ॥२॥

तस्यां निशायामभिसारिका रेमिरे। यथा—

आजानूत्क्षिप्तमञ्जीरास्तमालश्यामलांशुकाः। मृगनाभिविलिप्ताङ्ग्यो विसस्रुरभिसारिकाः ॥१॥

समं च लङ्कासुन्दर्या पवनञ्जयनन्दनः। रममाणो निराशङ्कस्तामतीयाय यामिनीम् ॥२॥

सुप्तं हनुमन्तं लङ्कासुन्दरी जागरणायेत्युवाच। यथा—

अभूत्पीङ्गा प्राची रसपतिरिव प्राप्य कनकं, गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि।

नदीपा राजन्ते द्रविणरहितानामिव गुणाः, क्षणक्षीणास्तारा नृपतय इवाऽनुद्यमपराः ॥१॥

लङ्कासुन्दर्या निजपत्न्या एतद्वचः श्रुत्वा जागरितो हनुमान्प्रभातकृत्यं करोति। प्रभातकृत्यं कृत्वा लङ्कासुन्दरीं सुन्दरोक्तिभिरापृच्छ्य लङ्कानगरीं प्राविशत्। लङ्कां प्रविश्य यत्र राजविभीषणगृहं तत्र गतः। तत्र गत्वा विभीषणं नत्वा विभीषणसमीप उपाविशत्।

विभीषणेन सत्कृत्य पृष्टश्चागमकारणम्। अवोचदञ्जनासूनुः सारगम्भीरगीरदः ॥१॥

यद्भ्राता रावणस्यासि शुभोदर्कं विचिन्त्य तत्। रामपत्नीं हृतां सीतां सतीं मोचय रावणात् ॥२॥

हनुमान्वदे विभीषणं प्रति–हे विभीषण! परस्त्रीसङ्गादिहलोकेऽपवादादिभयं परलोके नरकादिभयं भवति। अतो रामपत्नीं रावणाद्विमोचय, यतस्त्वं भ्राताऽसि, शिष्टोऽसि, स्वस्वामिभक्तोऽसि, अतः कथ्यते। विभीषणोऽवोचत्–हे हनुमन्! त्वया साधूक्तम्–पूर्वं सीतां मोचयितुं स्वाग्रजो मयोक्तः, भूयोऽपि हि सनिर्बन्धं प्रार्थयिष्ये। एवं विभीषणेनोक्तेऽञ्जनासुतः समुत्पत्य देवरमणोद्याने

जगाम । तत्राशोकतरोस्तले सीतां ददर्श । अशोकवृक्षस्योपरि स्थितो हनुमान् सीतां दृष्ट्वा चिन्तयति–अहो ! सीतारूपम्, यथा–

तत्राशोकतरोर्मूले कपोललुलितालकाम् । सन्तताश्रुपयोधारापल्वलीकृतभूतलाम् ॥१॥
प्रम्लानवदनाम्भोजां हिमार्तां पद्मिनीमिव । अत्यन्तक्षामवपुषं प्रथमेन्दुकलामिव ॥२॥
उष्णनिःश्वाससन्तापविधुराधरपल्लवाम् । ध्यायन्तीं रामरामेति निःस्पंदां योगिनीमिव ॥३॥
मलिनीभूतवसनां निरपेक्षां वपुष्यपि । ददर्श देवीं वैदेहीं पवनञ्जयनन्दनः ॥४॥ (चतुर्भिः कलापकम्)

तां सीतामेवंविधां दृष्ट्वा हनुमांश्चिन्तयति–अहो ! सीता महासती । अस्या दर्शनमात्रेण जानें पवित्रीभूयते । अस्या विरहे रामः खिद्यते तद्युक्तम् । ईदृग्रूपानन्दं कलत्रं कस्यास्ति ? हनुमांश्चिन्तयति–एष वराको रावणो द्विधा सङ्कटे पतिष्यति । पूर्वं रामचन्द्रप्रतापानले, पुनः भूयसि स्वपापानले पतिष्यति । ततो हनुमान् विद्ययाऽदृश्योभूत्वा सीतोत्सङ्गेऽङ्गुलीयकं पातयामास । तां मुद्रिकां दृष्ट्वा सीताऽत्यर्थं मुमुदे । सीता मुद्रिकामपृच्छत् । यथा—

मुद्रे ! सन्ति सलक्ष्मणाः कुशलिनः श्रीरामपादाः स्वयम्,
सन्ति स्वामिनि मा विधेहि विधुरं चेतोऽनया चिन्तया ।
एनां व्याहर देवि मैथिलसुते नामान्तरेणाधुना,
रामस्त्वद्विरहेण कंकणपदं यस्यै चिरं दत्तवान् ॥१॥

तां मुद्रिकां दृष्ट्वा सीतां हृष्टां दृष्ट्वा त्रिजटा राक्षसी गत्वा दशकण्ठं व्यजिज्ञपत्–स्वामिन् ! इयत्कालं जानकी विषण्णाऽऽसीत्,

अथ सानन्दा सविलासा दृश्यते। दशाननेन चिन्तितमस्या रामो विस्मृतोऽथ नूनं मयि रंस्यत इति निश्चित्य रावणेन सीतां प्रति मन्दोदरी प्रेषिता। मन्दोदरी सीतामुवाच—अद्वैतैश्वर्यसौन्दर्यो दशाननस्त्वां समीहते। त्वमप्यद्भुतरूपलावण्यसौन्दर्ययुक्ता, अतो युवयोः संयोगः प्रशस्यो भविष्यति। हे सुभ्रु! रावणं भज, यथा रावणान्तःपुर्याः स्वामिनी भवेः। सीताऽप्यवोचत्—आः पापे! पतिदूत्यविधायिनी तव मुखं को वीक्षेत? रामस्य पार्श्वे मां जानीहि। रावणो मां वाञ्छन्नूनं खरदूषणानुपदं यास्यति। हे पापिष्ठे! उत्तिष्ठ, अतः परं त्वया रावणविषये न वाच्यम्। एवं सीतया तर्जिता मन्दोदरी कोपाटोपवशं गता स्वस्थानं प्राप्ता। तावत्सीतापुरतो हनुमान्प्रकटीबभूव। सीतामित्यूचे—हे देवि सीते! सलक्ष्मणो रामस्त्वत्प्रवृत्तिमानेतुं मां हनुमन्तं प्राहिणोत्। तेन प्रेषितोऽहमत्रागमम्। अथ त्वमपि निजाभिज्ञानं चूडारत्नं मह्यं देहि। सीतयोक्तम्—चूडारत्नं दास्ये। हनुमानूचे मयि तत्र गते रामस्त्वरितं त्वत्कृते समेष्यति। बाष्पायिता सीता हनुमन्तमुवाच—हे हनुमन्! दुर्लंघ्यमर्णवं श्रीरामः कथं लङ्घित्वा समेष्यति? हनुमानुवाच—हे सीते! अहं पवनाञ्जनयोः सुतो हनुमान् नाम्ना गगनगामिन्या विद्यया समुद्रमुल्लङ्घ्य इहागतोऽस्मि। यथाऽहं रामसेवकस्तथाऽन्ये विद्याधराः सुग्रीवाद्यास्त्वत्पतिसेवका वर्तन्ते। यथा—

भामण्डलो विराधश्च महेन्द्राद्याश्च खेचराः। पत्तीभूयोपासते तौ शक्रेशानाविवामराः ॥१॥
तव प्रवृत्तिमानेतुमहं सुग्रीवदर्शितः। रामेण प्रेषितो देवि! समर्प्य स्वाङ्गुलीयकम् ॥२॥
चूडामणिरभिज्ञानं त्वत्त आनायितो मया। तद्दर्शनेन मामत्रायातं प्रत्येष्यति प्रभुः ॥३॥
हनुमदुपरोधेन रामोदन्तमुदा च सा। एकविंशत्यहोरात्रप्रान्ते व्यधित भोजनम् ॥४॥

एकविंशतिदिनान्ते पारणं कृतम्। पारणं कृत्वा यावता तिष्ठति, तावता हनुमता प्रोक्तम्–हे मातः सीते! अहं रामसेवकोऽस्मि, एहि मम स्कन्धं समाश्रय, यथा त्वां स्कन्धे समारोप्य ससैन्यं रावणं जित्वा क्षणेन त्वां श्रीरामसमीपं नयामि। सीतयोक्तम्–हे हनुमन्! त्वयोक्तमहं रामसमीपं नयामि पर परपुंस्पर्शो मनागपि न मेऽर्हेति, त्वं मम चूडामणिं गृहीत्वा शीघ्रमेव गच्छ। इत्युक्त्वा सीता हनुमते चूडामणिं ददौ। हनुमानूचे–एषोऽहं गच्छामि रामसमीपं, परं किञ्चिद्विक्रमचापलं रक्षसां दर्शयामि, दर्शयित्वा यास्यामि। यतो रावणो जितकाशी परवीर्यं न मन्यते। अतो हे मातः! रामपत्तेरपि पराक्रममेष पश्यतीत्युक्त्वा सीतां नत्वा चूडामणिं लात्वा पादन्यासैर्धरां धुन्वनुच्चैश्चचाल। मार्गे गच्छंस्तावद्देवरमणोद्यानं भङ्क्तुं प्रचक्रमे। यथा—

रक्ताशोकेषु निःशूको बकुलद्रुष्वनाकुलः। सहकारेष्वकारुण्यो निष्कम्पश्चम्पकेष्वपि ॥२३॥

अमन्दरोपो मन्दारेष्वदयः कदलीष्वपि। अन्यद्रुष्वपि रम्येषु भङ्गलीलां चकार सः ॥२४॥

तदुद्यानरक्षपाला राक्षसा हनुमन्तं हन्तुं दधाविरे। कथंभूता निशाचराः शस्त्रव्यापृतकराः, तन्नामान्यमूनि यथा–तरवारि–त्रिशूल–नाराच–कौशल–कृपाण–चक्र–कुन्त–सब्बल–गाण्डीव–पट्टी–भुसण्डी–गदा–मुसल–लकुट इत्यादिशस्त्रव्यापृतकरा रावणसुभटा देवरमणोद्यानरक्षका हनुमन्तं हननाय दधाविरे हनुमान् तेभ्यः कुपितस्तान्पादपप्रहारैर्निरायासः प्रजहार। बलीयसां सर्वमस्त्रं भवति। वृक्षास्त्रेण हतास्ते सर्वेऽपि राक्षसा आरक्षक्षणाच्चरा दिशोदिशं पलायितास्तद्वृत्तान्तं केचिद्राक्षसा राक्षसेश्वराय गत्वाऽऽचचक्षिरे। तच्छ्रुत्वा कुपितो रावणो हनुमन्तं घातनाय स्वसैन्यं प्राहिणोत्। तत्सैन्यं गत्वा हनुमन्तं निष्ठुरवचनैस्तर्जयित्वा युयुधे। हनुमानपि राक्षसैस्तर्जितस्तीक्ष्णैर्विशिखैर्वर्षन्शुशुभे। मुधा कपे! गर्जसीति तर्जयन्नावणपुत्रो हनुमन्तं दधावे। हनुमानपि तैः सह युध्यमानो

राक्षससैन्यं भृशं दुद्रुवे। तत्स्वसैन्यं विद्रावितं दृष्ट्वा रावणात्मजः क्रुद्धः खड्गमाकृष्य धावितो हनुमतैकेन बाणेन हतो मृतः। यतः—

पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैः। युद्धे विजयसन्देहः प्रधानपुरुषक्षयः ॥१॥

ततो भ्रातृवधात्क्रुद्धइन्द्रजिद्रावणपुत्रो हनुमन्तं तर्जयन् द्वन्द्वयुद्धेनायुध्यत। तयोर्द्वयोर्महाबाह्वोरिन्द्रजिद्धनुमतोः परस्परं रणः प्रवृत्ते। यथा—

वर्षन्तौ वारिधारावन्नीरन्ध्राः शस्त्रधोरणीः। व्योमस्थौ तावलक्ष्येतां पुष्करावर्त्तकाविव ॥२५॥

मुमोच यावन्त्यस्त्राणि दुर्वारो रावणात्मजः। तदनेकगुणैरस्त्रैस्तानि चिच्छेद मारुतिः ॥२६॥

हनुमदस्त्रक्षुण्णाङ्गाः सर्वेऽपीन्द्रजितो भटाः। अनश्यन्रक्तह्रदिनीपर्वता इव जंगमाः ॥२७॥

इन्द्रजिद्रावणपुत्रो निजसैन्यं भग्नं दृष्ट्वा क्रोधारुणलोचनः श्रीशैलाय नागपाशास्त्रममुचत्। तेन नागपाशेन हनुमानापादमस्तकं यावच्चन्दनद्रुरिवावेष्टयत। अथ हनुमांस्तन्नागपाशत्रोटने समर्थोऽपि कौतुकात्तथैवास्थात्, यथेन्द्रजिता बद्धः। हृष्टेनेन्द्रजिता हनुमानुपरावणं निन्ये। तत्र रावणसदसि सर्वैः राक्षसैर्निरीक्षित उपलक्षितश्च। तावद्रावणेनोक्तम्—भो हनुमन्! भो दुर्मते! त्वया किं कृतम्? आजन्म मम सेवको भूत्वाऽन्ते रामलक्ष्मणौ समाश्रितः। कथंभूतौ रामलक्ष्मणौ—तपस्विनौ वनवासिनौ फलाहारौ मलिनांशुकावभिनवकिरातौ तौ तुष्टौ तुभ्यं कां श्रियं दास्यतः? हे मन्दबुद्धे! त्वं तद्वाचा किमिहागतः? येनेहायातमात्रोऽपि प्राणसंशयं प्राप्तोऽसि। ननु तौ भूचारिणौ दक्षौ, यकाभ्यामकार्यं कारितम्। यतोऽङ्गारान्परहस्तेन कर्षयन्ति हि धूर्तकाः। भो हनुमन्! त्वं पूर्वं मम सामन्तसेवकोऽभूत्, साम्प्रतं रामदूतत्वमङ्गीकृतम्। अथ दूतो जातः। दूतत्वादवध्योऽसि। ततो हनुमान्रावणं प्रत्युवाच—

भो दशानन! अहं तव सेवकः कदाऽऽसीत्? मया तव सेवा कदा कृता? अहं तव स्वामीति कथयन् त्वं किं न लज्जसे? त्वं मम स्वामी कदाऽभूत्। एकदा मत्पित्रा पवनञ्जयेन तव सेवकः खरनामा विद्याधरो वरुणान्मोचितस्तदपि ते विस्मृतम्? अहमपि तव साहाय्यार्थं त्वया हूतः पुराऽभ्यागमम्। वरुणपुत्रेभ्यस्त्वामरक्षं च। तदपि ते विस्मृतम्। हे रावण! त्वं मम साहाय्यस्य योग्यो न। यतः-पापतत्पर! रे धृष्ट! परस्त्रीसंगान्नष्टोऽसि। अद्यापि तव किञ्चिद्गतं नास्ति, सीतां मुञ्च, अहं तव हितं वच्मि। यतः—

रूसउ वा परो मा वा विसं वा परिअत्तउ। भासयव्वा हिआभासा स पक्ख गुणकारिआ॥२८॥

एवं हनुमता बहु प्रोच्यमानोऽपि सीतां नामुञ्चत्। पुना रावणं प्रति हनुमद्वाक्यम्—

इमौ दाशरथी रामलक्ष्मणौ नतवत्सलौ। पुरन्दरौ द्विडद्रीणां विश्वविख्यातविक्रमौ॥२९॥
आज्ञापयति मे स्वामी मन्मुखेन दशानन!। उत्तमानां स्वभावोऽयमशाठ्यं सर्वकर्मसु॥३०॥
कुलोचितं त्वया रक्षः! कृतं सीतापहारतः। मायाविनो राक्षसा यत्शूरत्वे कातरा श्रुतिः॥३१॥
पौरुषं त्वयि नास्त्येव अस्ति श्वेनत्तदा कृतम्। श्वापि गृह्णाति भोज्यं हि निःस्वामिनि गृहे स्थितम्॥३२॥
महत्यप्यपराधे हि क्षमते न मितं जने। सीता समर्प्यतां क्षामा त्वया जीवितकांक्षिणा॥३३॥

रावण उवाच-राज्यनिष्कासितौ रामलक्ष्मणौ वनचारिणौ। विद्याहीनौ मनुष्यौ तौ वर्णितौ दूतन्दप! तौ॥३४॥

एतद्धनुमतोक्तं श्रुत्वा हृष्टो न, नवरं दशाननः कुपितो भृकुटिभीषणो निजौष्ठं दशन्नेवमभ्यधात्-रे हनुमन्! त्वं मदरीनाश्रितोऽसि, पुनर्मां तिरस्करोषि, मदरातीन् प्रशंससि, तन्नूनं मर्तुकामोऽसि, परं दूतत्वादवध्योऽसि, तथापि विडम्ब्य मुच्यसे। इति

कथयित्वा सेवकानाकार्य प्रोक्तम्–भो सेवकाः। एनं हनुमन्तं रासभ आरोप्य नगरे त्रिकचतुष्कचत्वरादिषूद्भ्राम्य मुच्यताम्। इति श्रुत्वा क्रुद्धो मारुतिर्नागपाशानत्रोटयत्। यतः कुञ्जरो नलिनीनालैर्बद्धः कियत्तिष्ठति? तत उत्पत्य हनुमांस्तडिद्दण्ड इव राक्षसप्रभो रावणस्य किरीटं पादघातेन कणशश्चूर्णयामास। रावण ऊचे—

हन्यतां गृह्यतां चैष इति जल्पति रावणे। अनाथामिव सोऽभांक्षीत्तत्पुरीं पाददर्दरैः ॥३५॥

क्रीडां कृत्वैवमुत्पत्य सुपर्ण इव पावनिः। राममेत्यानमत्सीताचूडारत्नं समर्पयन् ॥३६॥

सीता चूडामणिस्तन्तु साक्षात्सीतामिवागताम्। आरोपयामास हृदि स्पृशन्रामो मुहुर्मुहुः ॥३७॥

हनुमन्तं दाशरथिनाऽऽलिङ्ग्योपवेश्योचे—वत्स! हे बान्धव! इतो गत्वा त्वया किं किं कृतम्? इति श्रीरामे पृष्टे हनुमता यथा कृतं तथा सर्वं प्रोक्तम्। श्रीरामपुरतो तदेवाह–यथागतो, यथाऽऽशाली जिता, यथा लङ्कासुन्दरी परिणीता, यथा विभीषणगृहे गतः, यथा सीतान्तिके गतः, यथा मुद्रिका दत्ता, यथा चूडारत्नं सीतया दत्तं, यथा मन्दोदर्या सीतां प्रति प्रोक्तम्, यथा सीतया प्रत्युत्तरं दत्तम्, यथा सीताशीर्षां लात्वा सञ्चलितो, यथा देवरमणोद्यानमुन्मूलितम्, यथा वनपालका राक्षसा हताः, यथेन्द्रजिद्भ्राता हतो, यथेन्द्रजिता बद्धो रावणाग्रे नीतो, यथा रावणं प्रति सीतां मुञ्च इत्याद्युक्तम्, यथा रावणेनोक्तम् एनं हनुमन्तं रासभ आरोप्य मुच्यताम्, तच्छ्रुत्वा कोपोत्पत्तिः, यथा नागपाशांश्छित्वा रावणमस्तके पादघातेन मुकुटः कणशः कृतः, यथा लङ्का भग्ना, दग्धा च यथा रामसमीप आगतस्तथा तेन हनुमता सर्वस्मिन्सत्ये निवेदिते राम उवाच—

त्रिदशैरपि दुर्भेद्या लङ्का नाम महापुरी। कथं वीर! त्वया दग्धा विद्यमाने दशानने? ॥३८॥

हनुमानाह—प्रतापेन तु रामस्य देव्या निःश्वसितेन च। पूर्वं भग्ना तु सा लङ्का पश्चाद्बह्निवशं गता ॥३९॥
शाखामृगस्य शाखायाः शाखां गन्तुं पराक्रमः। यत्पुनस्तीर्यतेऽम्भोधिः प्रभावः प्राभवो हि सः ॥४०॥
इत्यादि हनुमतोक्तां वार्तां श्रुत्वा हर्षितः श्रीरामचन्द्रो हनुमन्तं सभ्रातृवन्मेने।

इति श्रीमत्तपागच्छे भट्टारकश्रीहीरविजयसूरिराज्ये आचार्यश्रीविजयसेनसूरियौवराज्ये पण्डितदेवविजयगणिविरचिते गद्यबन्धे श्रीरामचरित्रे सीतावृत्त्यानयनो नाम षष्ठः सर्गः ॥

## सप्तमः सर्गः।

अथ रामचन्द्रः सलक्ष्मणः सुग्रीवाद्यैः सुभटैः परिवृतो गगनाऽध्वना लङ्काविजययात्रायै प्रतस्थे शुभमुहूर्ते शुभलग्ने शुभशकुने शुभे मङ्गले। मङ्गलान्यमूनि यथा—

कन्या गो पूर्णकुम्भो दधिमधुकुसुमं पावको दिप्यमानः, यानं वा गोमयुक्तं वररथतुरगं छत्रभद्रातिभद्रम्।
उत्खाता चैव भूमिर्जलचरमिथुनं सिद्धमन्नं मुनिर्वा, वेश्या स्त्री मद्यमांसं हितमपि वचनं मङ्गलं प्रस्थितानाम् ॥

कथयित्वा सेवकानाकार्य प्रोक्तम्–भो सेवकाः। एनं हनुमन्तं रासभ आरोप्य नगरे त्रिकचतुष्कचत्वरादिषूद्भ्राम्य मुच्यताम्। इति श्रुत्वा क्रुद्धो मारुतिर्नागपाशानत्रोटयत्। यतः कुञ्जरो नलिनीनालैर्बद्धः कियच्चिष्ठति? तत उत्पत्य हनुमांस्तडिद्दण्ड इव राक्षसप्रभो रावणस्य किरीटं पादघातेन कणशश्चूर्णयामास। रावण ऊचे—

हन्यतां गृह्यताञ्चैष इति जल्पति रावणे। अनाथामिव सोऽभांक्षीत्तत्पुरीं पाददर्दरैः ॥३५॥

क्रीडां कृत्वैवमुत्पत्य सुपर्ण इव पावनिः। राममेत्यानमत्सीताचूडारत्नं समर्पयन् ॥३६॥

सीता चूडामणिस्तन्तु साक्षात्सीतामिवागताम्। आरोपयामास हृदि स्पृशन्रामो मुहुर्मुहुः ॥३७॥

हनुमन्तं दाशरथिनाऽऽलिङ्ग्योपवेश्योचे—वत्स! हे बान्धव! इतो गत्वा त्वया किं किं कृतम्? इति श्रीरामे पृष्टे हनुमता यथा कृतं तथा सर्वं प्रोक्तम्। श्रीरामपुरतो तदेवाह–यथागतो, यथाऽऽशाली जिता, यथा लङ्कासुन्दरी परिणीता, यथा विभीषणगृहे गतः, यथा सीतान्तिके गतः, यथा मुद्रिका दत्ता, यथा चूडारत्नं सीतया दत्तं, यथा मन्दोदर्या सीतां प्रति प्रोक्तम्, यथा सीतया प्रत्युत्तरं दत्तम्, यथा सीताशीक्षां लात्वा सञ्चलितो, यथा देवरमणोद्यानमुन्मूलितम्, यथा वनपालका राक्षसा हताः, यथेन्द्रजिद्भ्राता हतो, यथेन्द्रजिता बद्धो रावणाग्रे नीतो, यथा रावणं प्रति सीतां मुञ्च इत्याद्युक्तम्, यथा रावणेनोक्तम् एनं हनुमन्तं रासभ आरोप्य मुच्यताम्, तच्छ्रुत्वा कोपोत्पत्तिः, यथा नागपाशांश्छित्वा रावणमस्तके पादघातेन मुकुटः कणशः कृतः, यथा लङ्का भग्ना, दग्धा च यथा रामसमीप आगतस्तथा तेन हनुमता सर्वस्मिन्सत्ये निवेदिते राम उवाच—

त्रिदशैरपि दुर्भेद्या लङ्का नाम महापुरी। कथं वीर! त्वया दग्धा विद्यमाने दशानने? ॥३८॥

हनुमानाह—प्रतापेन तु रामस्य देव्या निःश्वसितेन च। पूर्वं भग्ना तु सा लङ्का पश्चाद्वह्निवशं गता ॥३९॥
शाखामृगस्य शाखायाः शाखां गन्तुं पराक्रमः। यत्पुनस्तीर्यतेऽम्भोधिः प्रभावः प्राभवो हि सः ॥४०॥
इत्यादि हनुमतोक्तां वार्तां श्रुत्वा हर्षितः श्रीरामचन्द्रो हनुमन्तं स्वभ्रातृवन्मेने।

इति श्रीमत्तपागच्छे भट्टारकश्रीहीरविजयसूरिराज्ये आचार्यश्रीविजयसेनसूरियौवराज्ये पण्डितदेवविजयगणिविरचिते गद्यबन्धे श्रीरामचरित्रे सीताप्रवृत्त्यानयनो नाम षष्ठः सर्गः ॥

## सप्तमः सर्गः।

अथ रामचन्द्रः सलक्ष्मणः सुग्रीवाद्यैः सुभटैः परिवृतो गगनाऽध्वना लङ्काविजययात्रायै प्रतस्थे शुभमुहूर्ते शुभलग्ने शुभशकुने शुभे मङ्गले। मङ्गलान्यमूनि यथा—

कन्या गौ पूर्णकुम्भो दधिमधुकुसुमं पावको दिप्यमानः, यानं वा गोप्रयुक्तं वररथतुरगं छत्रभद्रातिभद्रम्।
उत्खाता चैव भूमिर्जलचरमिथुनं सिद्धमन्नं मुनिर्वा, वेश्या स्त्री मद्यमांसं हितमपि वचनं मङ्गलं प्रस्थितानाम्॥

रावणस्य सामन्ता युद्धाय सन्नह्यन्ति स्म । एषां सामन्तानाममूनि नामानि । यथा-हस्तः, प्रहस्तः, मरिचिः, सारणः, नकुलः, पुरणः, अभिन्द्राद्याः सहस्रशः । रावणोऽपि रणतूर्याण्यवादयत् । यथा—

रावणो रणतूर्याणि, दारुणान्यथ कोटिशः । किंकरैस्ताडयामास, द्विपत्ताडनपण्डितः ॥४६॥

तदा रावणसमीप आगत्य रावणं नत्वा विभीषणो बभाषे–हे बान्धव ! क्षणं प्रसन्नो भूत्वा मम शुभोदर्कवचः शृणु । त्वया पूर्वमविमृश्य कृतं यत् परदाराहरणं विहितम् । परदाराहरणेनात्मीयं कुलं लज्जितम् । अथ निजभार्यां समानेतुं काकुत्स्थः समायातः । अस्येदमेवातिथ्यं यदेतस्मै रामचन्द्राय सीतासमर्पणं कुरु । यदि न दास्यसि तथाप्यसौ रामो निजां पत्नीं सीतां बलात्कारेण स्वयमेवाहरिष्यति । सीतया सह तव राज्यं कुलञ्चाहरिष्यति । पुनर्विभीषणो बभाषे–हे बान्धव ! रामलक्ष्मणौ दूर आस्ताम्, तयोरेकेन सेवकेन पत्तिमात्रेण हनुमतेति कृतम् । यतः—

लङ्का दग्धा वनं दग्धं राक्षसाः प्रलयं गताः । यत्कृतं रामदूतेन स रामः किं करिष्यति ? ॥४७॥

इन्द्रश्रियोऽधिका श्रीस्ते तां सीताकारणेन मा । परिहार्षीर्भवेदेवमुभयभ्रष्टता तव ॥४८॥

अथेन्द्रजिदेवमुवाच–हे विभीषण ! त्वयाऽऽजन्मभीरुणा तातस्य कुलं दूषितमतस्त्वं तातस्य सोदरो नासीः । तातम् इन्द्रस्यापि विजेतारं, सर्वसम्पदां नेतारमेवंविधं मत्वा त्वमजानन् रे मूर्ख त्वं मुमूर्षसि । पुराप्यनृतभाषिणा त्वया मत्तातश्छलितः । यथाऽयोध्यां गत्वा प्रत्यागत्योक्तम् "मया दशरथो हतस्तथा जनकोऽपि हतः" परं नैकोऽपि हतः, अत्रागत्य मत्तातपुरत उक्तम्–मया द्वावपि हतौ । एवमसत्यं जल्पन् किं न लज्जसे ? यथा—

इहायातं दाशरथिं तातादृक्षितुमिच्छसि। दर्शयन्भयमुत्पाद्य भूचरेभ्योऽपि निस्त्रपः ॥४९॥
तन्मन्ये रामगृह्योऽसि मन्त्रेऽप्यधिकरोपि न। आप्तेन मन्त्रिणा मन्त्रः शुभोदर्को हि भूभुजाम् ॥५०॥

तच्छ्रुत्वा भृशं कुपितो विभीषण इन्द्रजितमेवमुवाच–रे पुत्ररूपेण शत्रो! रे कुलनाशन! तव पिता तावत्कामान्धस्त्वमपि जन्मान्ध इव दृश्यसे। रे दुष्टास्य! त्वं किं वेत्सि? एवं निर्भर्त्स्य भ्रातरं प्राह–हे राजन्! हे बान्धव! अनेन पुत्रेण त्वच्चरित्रेण च त्वं महासङ्कटे पतिष्यसि। एतद्वचः श्रुत्वा रावणोऽप्यधिकं क्रुद्धो भीषणं खड्गमाकृष्य विभीषणं हन्तुमुदस्थात्। विभीषणोऽपि भ्रुकुटिभीषणः क्रोधारुणलोचन आयसं स्तम्भमुत्पाट्य रावणं प्रति योद्धुमुत्तस्थौ। तावता कुम्भकर्णेन्द्रजिद्भ्यां द्रुतमन्तरा पतित्वा युद्धान्निषिध्य स्वं स्वं स्थानं नीतौ। क्रुद्धो रावणो विभीषणं लङ्कातो निष्कासयामास इति तिरस्कृत्य।

अरे निर्याहि मत्पुर्या आश्रयाशोऽसि वह्निवत्। इत्युक्तो रावणेनागाद्रामाभ्यर्णे विभीषणः ॥५१॥
रक्षोविद्याधराणां चाक्षौहिण्यस्त्रिंशदुत्कटाः। हित्वा लङ्काधिपं सद्योऽप्यनुजग्मुर्विभीषणम् ॥५२॥
अथाक्षौहिणीमानम्–एकेभैकरथौ त्र्यश्वाः पत्तिपञ्च पदातिका। सेना सेनामुखं गुल्मो वाहिनी पृतना चमूः ॥५३॥
अनीकिनी च पत्तेः स्यादिभाद्यैस्त्रिगुणैः क्रमात्। दशानीकिन्योऽक्षौहिणी सज्जनं तूपरक्षणम् ॥५४॥

एवंविधयाक्षौहिण्या परिवृतं विभीषणमायान्तं दृष्ट्वा सुग्रीवाद्या विद्याधराश्चुक्षुभुः। रामं प्रत्यूचुश्च–हे स्वामिन्! द्विपि शाकिन्यामिव विश्वासो न कर्तव्यः। एतस्यापि विभीषणस्य विश्वासो न कर्तव्यः। यतः—

न विश्वसेत्पूर्वविरोधितस्य शत्रोश्च मित्रत्वमुपागतस्य। दग्धां गुहां पश्य उलूकपूर्णां काकप्रकीर्णेन हुताशनेन॥

पुनः सुग्रीवो राममुवाच–हे स्वामिन् ! यद्यप्याजन्ममायिनो राक्षसाः प्रकृत्या क्षुद्राः स्युस्तथाप्यनुरूपाऽस्य विभीषणस्य भक्तिः कार्या । तस्मिन्समये विभीषणस्वरूपज्ञो विशालो नाम खेचरो धर्मात्मा सकलविख्यातो विभीषणगुणान्कथयति–यथा—

सीतामोक्षाय जल्पंश्चानल्परोषेण बन्धुना । निर्वासितः शरण्यं त्वामागान्नैचैतदन्यथा ॥१॥

श्रुत्वेति रामो द्वाःस्थेन विभीषणमवीविशत् । पादयोः क्षिप्तमूर्द्धानं परिरेभे च सम्भ्रमात् ॥२॥

विभीषण उवाच–हे राजेन्द्र ! श्रीरामचन्द्र ! अहं दुर्नयमग्रजं हित्वा त्वच्छरणमागतोऽस्मि, अतस्त्वं सुग्रीववत्सर्वं कार्ये मां समादिश । अहं तव सेवकोऽस्मि । श्रीरामेणोक्तम्–भो विभीषण ! भो लङ्केश्वर ! मया तव लङ्काराज्यं दत्तम् । तेनोक्तम्–महाप्रसाद इति । यतः–महात्मसु प्रणिपातः क्वापि मुधा न भवति । विभीषण एकस्मिन्दिने श्रीरामसमीपे वार्तां कुर्वाण एवं कथयति–स्वामिन् ! मया सीताविषये बहूक्तम् सीतां मुञ्च । परमेष रावणः कामग्रहग्रस्तः सीतां नामुञ्चत् । नवरं मारणाय धावितः । बहूक्तोऽपि दुर्जनः किं स्वजनायते ? बहूक्तोऽपि पापः किं पुण्यवदायते ? यथा दुग्धधौतोऽपि काकः किं हंसायते ? सुपुष्टोऽपि श्वा किं सिंहायते ? सुष्ठूपचितोऽपि खरः किमश्वायते ? सुघटितोऽपि काचः किं वैडूर्यमणिलीलां वहति ? इक्षुरसौ सिक्तोऽपि निम्बः किं द्राक्षाफलानि प्रसूते ? सम्पगुत्तेजितोऽपि रीरी किं सुवर्णच्छायां बिभर्ति ? सुसंस्कृता अपि यवाः किं शालिलीलामाकलयन्ति ? सुत्यक्तोऽपि खलः किं सज्जनायते ? तथा बहु कथितोऽपि रावणः किं सज्जनभावं भजते ? इत्याद्यैर्मिष्टवाक्यैः सत्योक्तिभिः श्रीरामचन्द्रं विभीषणस्तुतोष । श्रीरामोऽपि विभीषणं, तथा सुग्रीवं भ्रातृवद् बहु मेने । क्रमेण रामलक्ष्मणौ विभीषणसुग्रीवाद्यैः परिवृतौ गगनाध्वना गच्छन्तौ हंसद्वीपे समागतौ । तत्र द्वीपेऽष्टौ दिनान्यतिवाह्य सर्वं सैन्यं सज्जीकृत्य निःस्वाननिनादैर्दिशो बधिरयन्

विद्याधरैः परिवृतः श्रीरामो लङ्कां प्रत्यचालीत् । क्रमेण रामः ससैन्यो रणसज्जः स्थेमपर्वते गत्वा विंशतियोजनीं पृथ्वीमाच्छाद्यावतस्थे । तस्मिन्सैन्ये तत्रागते तत्सेनायाः कलकलध्वनिनोदधेर्वेलाध्वनिसार्द्धं विवादश्चक्रे । तदा दशकन्धरसैनिका हस्तप्रहस्ताद्या राक्षसाः सङ्ग्रामसज्जा बभूविरे । सुभटवर्णनं यथा—

केचिन्मतङ्गजोद्ग्राश्वैरपरे वाहवाहनैः । शार्दूलवाश्वैरन्ये तु खरवाहनै रथैः परे ॥५८॥

कुबेरवन्नरैः केचिन्मेषैः केचित्तु वह्निवत् । यमवन्महिषैः केचित्केचिद्रेवंतवद्धयैः ॥५९॥

विमानैर्देववत्केचित्प्रह्वाः समरकर्मणे । उत्पत्य युगपद्वीराः परिवव्रुर्दशाननम् ॥६०॥ त्रिभिर्विशेषकम् ॥

रोषारुणाक्षः सन्नह्य विविधायुधपूरितम् । अध्यास्त स्यन्दनं रत्नश्रवाः प्रथमनन्दनः ॥६१॥

कुम्भकर्णः शूलपाणिर्दण्डपाणिरिवापरः । उपेत्य दशकण्ठस्य समभूत्पारिपार्श्वकः ॥६२॥

तथेन्द्रजिन्मेघवाहनौ रावणस्यापरौ दोर्दण्डाविवाग्रे तस्थौ । एवमन्येऽपि रावणकुम्भकर्णयोस्तनया दोष्मन्तः कोटिशः शुकसारणमारिचिमयसुन्दादयः सङ्ग्रामशूरा अभ्येयुः । अक्षौहिणीनां सहस्रैः परिवृतो लङ्कापुर्या निर्गत्य स्थेमपर्वताभिमुखो दशाननः प्रचचाल । कथंभूताः सुभटा रावणसैनिकाः । यथा—

शार्दूलकेतवः केचित्केचिच्छरभकेतवः । चमूरुकेतवः केचित्केचित्करटिकेतवः ॥६३॥

मयूरकेतवः केचित्केचित्पन्नगकेतवः । मार्जारकेतवः केचित्केचित्कुक्कुटकेतवः ॥६४॥

कोदण्डपाणयः केचित्केचिन्निस्त्रिंशपाणयः । भुशुण्डीपाणयः केचित्केचिन्मुद्गरपाणयः ॥६५॥

त्रिशूलपाणयः केचित्केचित्परिघपाणयः । कुठारपाणयः केचित्केचिच्च पाशपाणयः ॥६६॥
विपक्षवीरान्पृच्छन्तो नामग्राहं मुहुर्मुहुः । दशास्यवीराश्चतुरं विचेरू रणकर्मणि ॥६७॥ पञ्चभिः कुलकम् ॥
वैताढ्यस्येव सैन्यस्य प्रथिम्नाच्छाद्य मेदिनीम् । पञ्चाशद्योजनान्यस्थाद्रावणो रणकर्मणे ॥६८॥

अष्टौ कोटयः चतुःसप्ततिलक्षाण्यशीतिसहस्राणि रथानाम्, हस्तिनामप्येवं संख्या ज्ञेया । षड्विंशतिकोटयः चतुर्विंशतिलक्षाश्चत्वारिंशत्सहस्रास्तुरंगमाः । त्रिचत्वारिंशत्कोटयश्चतुःसप्तति लक्षाश्च पदातयः इति रावणचतुरङ्गबलसङ्ख्या ।

अक्खोहिणी सहस्सा भवन्ति चत्तारि यहु जिणुद्दिट्ठा । रावणबलस्स एवं मगहवइ होई परिमाणं ॥६९॥
इति रावणसैन्यपरिमाणम् ।

अक्खोहिणी सहस्सं इक्कं चिअ वानराण सव्वाणं । भामण्डलेण सहिअं भणिअं चउरंगसिन्नस्स ॥७०॥
इति श्रीरामसैन्यपरिमाणम् ।

स्वनायकान्प्रशंसन्तो निन्दन्तः परनायकान् । परस्परं चाक्षिपन्तः कथयन्तो मिथो भिदाः ॥७१॥
अस्त्राण्यस्त्रैर्वादयन्तः करास्फोटपुरस्सरम् । रामरावणयोः सैन्या मिमिलुः कांस्यतालवत् ॥७२॥ युग्मम् ॥

गच्छ गच्छ, तिष्ठ तिष्ठेतिब्रुवाणाः सुभटा भृशं शुशुभे । अहो ! वासुदेवप्रतिवासुदेवयोः सहजवैरम् । यथा नकुलसर्पाणाम्, जलवैश्वानरयोः, देवदैत्ययोः, सारमेयमार्जारयोः, सिंहगजयोः, व्याघ्रगवोः, काकघूकयोः, पण्डितमूर्खयोः, पतिव्रतास्वैरिण्योः, सज्जनदुर्जनयोस्तथा रामरावणयोः सहजवैरमिति । अतस्तौ युयुधाते । यथा—

खड्गैर्मिथो घातभग्नैर्वेगात्कृत्तैश्च मौलिभिः। उच्छलद्भिरभून्नानाकेतुराढ्यिव खं तदा ॥७३॥
सुभटा मुद्गराघातैर्लोठयन्तो द्विपान्मुहुः। दण्डकन्दुकिनीं क्रीडां तन्वाना इव रेजिरे ॥७४॥
कुठारघातैराच्छिन्ना भटानामपरैर्भटैः। पञ्चशाखाः पतन्ति स्म शाखाः शाखावतामिव ॥७५॥
रक्षसां वानराणां च युद्धे तस्मिन्महौजसाम्। दायादानां धनमिव जयः साध्योऽभवच्चिरम् ॥७६॥
चिरं प्रवर्तमाने च समरे तत्र वानरैः। अभञ्जि राक्षसबलं काननवन्महाबलैः ॥७७॥

एवं तयोः सङ्ग्रामे राक्षसबले भग्ने रावणसुभटौ हस्तप्रहस्तनामानौ रावणजयकांक्षिणौ वानरैः सह योद्धुमुद्यतौ वर्तेते। अथ वानरसैन्याद्रामजयकांक्षिणौ नलनीलौ महाकपी संमुखीनावुदस्थाताम्। हस्तो राक्षसो नलवानरेण सह योद्धुमुपतस्थे, प्रहस्तो नीलवानरेण च योद्धुमुपतस्थे। द्वावपि रथिनौ, द्वावपि शस्त्रव्यापृतकरौ, द्वावपि सैन्यपरिवृतौ, द्वावपि धन्विनौ।

क्षणं नले क्षणं हस्तेऽभूतां जयपराजयौ। तद्बलान्तरमज्ञायि न तत्र निपुणैरपि ॥७८॥

एवं युद्धं कुर्वाणौ नलहस्तौ परस्परं युद्ध्वाऽवसरं लब्ध्वा नलोऽविहस्तो हस्तशिरः क्रुधा क्षुरप्रेणाच्छिदत्। तथा प्रहस्तशिरो नीलोऽप्यच्छिदत्। तदा नलनीलयोरुपरि पुष्पवृष्टिरभूत्। देवैः कृतो वानरसैन्ये जयजयारवो जातः। तस्मिन्दिने रावणसैन्ये हस्तप्रहस्तयोर्निधनं गतयोः कलकलो जातः। अन्ये रावणसैनिका जीवितनिरपेक्षा मारिच–सिंहजघन–स्वयंभूसारण–शुक–चन्द्रार्कोद्दाम–बीभत्स–गम्भीर–सिंहरथ–मदनाङ्कुर–सन्ताप–प्रीतिकरादयो राक्षससैनिका रावणपुत्राश्चान्यै राक्षसैः परिवृता रामसैन्यं डुढौकिरे। कपयोऽपि रामसैनिका राक्षसैः सह युयुधिरे तेऽपि मरणनिरपेक्षाः। यतो–लोकोक्तिः–

जिते च लभ्यते लक्ष्मीर्मृते चापि सुराङ्गना। क्षणविध्वंसिनी काया का चिन्ता मरणे रणे ॥७९॥

एवं तौ रावणरामसैनिकौ परस्परममर्षवन्तौ युयुधाते। सिंहजघनो नाम राक्षसः प्रथितं वानरं रणे जघान। तावद्दिवाकरस्तयोः सैन्ययोर्युद्धं द्रष्टुमशक्योऽस्तं ययौ। उभयोः सैनिकाः स्वान्स्वान् हतान्रणभूम्यां शोधयामासुः।

विभातायां विभावर्यां प्रत्यर्कं दानवा इव। प्रतिरामयलं रक्षोयोधा योद्धुं ढुढौकिरे ॥८०॥

मध्येसैन्यं दशास्यो भूमध्ये मेरुरिवाचलः। गजरथ्यरथारूढश्चचाल रणकर्मणे ॥८१॥

बिभ्राणो विविधान्यस्त्राण्यन्तकादपि भीषणः। तत्कालारुणया शत्रून्दृशाऽपि हि दहन्निव ॥८२॥

एवंविधो रावणः स्वं प्रत्येकं सेनान्यं शतमन्युवत्पश्यन्, अरींस्तृणवन्मन्यमानो रणावनीमगात्। राघवसेनाऽपि सज्जिता सती दिवि देवैर्वीक्ष्यमाणा समरायोपतस्थे। तयो रामरावणयोः सङ्ग्रामे लग्ने समराङ्गणमेवंविधमभूत्। यथा—

सनदीकमिव क्वापि रक्तवारिभिरुद्धतैः। उत्पर्वतमिव क्वापि पतितैः कपिकुञ्जरैः ॥८३॥

क्वचिच्चोन्मकरमिव मकरास्यै रथच्युतैः। उद्धन्तमिव च क्वापि सामिभग्नैर्महारथैः ॥८४॥

उत्ताण्डवैः कबन्धैश्च नृत्तस्थानमिव क्वचित्। अजायत क्षणेनापि समराजिरभूतलम् ॥८५॥ त्रिभिर्विशेषकम् ॥

तयोरेवंविधे सङ्ग्रामे जायमाने रावणः स्वसैन्यं भग्नं दृष्ट्वा स्वयं रावणो हुंकारप्रेरितै राक्षसैः परिवृतः सङ्ग्रामाय सज्जो बभूव। सज्जो भूत्वा स्वयं युयुधे। रावणे युध्यमाने वानरसैन्यं तत्क्षणादेव ननष्टं सूर्यादन्धकारमिव। अथ सुग्रीवः क्रोधादुद्ग्रीवः क्रोधारुणलोचनः पुनर्वानरसैन्यं सज्जीकृत्य हनुमता सहितो राक्षसैः सह युयुधे। तस्मिन्युद्धे प्रवर्तमाने हनुमानूचे–सुग्रीवं प्रति हे सुग्रीवराजेन्द्र!

त्वमिहैव तिष्ठ। मम पराक्रमं पश्य। इति सुग्रीवं निषिध्य हनुमान् रावणसैन्यैः सह स्वयं युयुधे। यथा—

हनुमान्राक्षसानीकमनेकानीकदुर्मदम्। दुर्ग्राहमप्यगाहिष्ट महाब्धिमिव मन्दरः ॥८६॥

हनुमन्तमेवंविधं दृष्ट्वा माली राक्षस उभयपक्षबद्धतूणीरो गरुत्मानिव ख उत्पतन्हनुमन्तं हननाय दधावे।

हनुमन्मालिनौ वीरौ धनुष्टंकारकारिणौ। पुच्छाच्छोटकरौ सिंहाविवोद्दामौ विरेजतुः ॥८७॥

मालिहनुमन्तौ परस्परमस्त्रैः प्रजह्राते। ते पुनः परस्पर तर्जयन्तौ क्षिप्तानि शस्त्राणि चिच्छेदाते। एवं चिरं युद्ध्वा मालिनं वीर्यशालिनं निरस्त्रं कृत्वा हनुमानूचे–हे जरद्रक्षः ! अथ त्वया हतेन किमिति ब्रुवाणं हनुमन्तं वज्रोदरनामा राक्षसोऽवोचत्–रे रे पाप ! हनुमन् ! अद्य त्वं म्रियसे, नष्टोऽसि, एहि मया सह युध्यस्व। मारुतिस्तद्वचसा क्रुद्धो वज्रोदरं हक्कयन् बाणासारैराच्छादयामास। केचिद्वदन्ति–अहो ! वज्रोदरो बलवान् यो हनुमन्तं युध्यते। केचिद्वदन्ति–अहो ! हनुमान् वीरो ये वज्रोदरं प्रति युध्यते। एवं राक्षसवानराः केचिद्धनुमन्तं प्रशंसंति, केचिच्च वज्रोदरं प्रशंसंति। एवंविधां वज्रोदरप्रशंसामसहिष्णुर्हनूमान् मानपर्वतश्चित्राण्यस्त्राणि वर्षन्नुत्पातमेघवद्वज्रोदरमवधीत्। हतं वज्रोदरं दृष्ट्वा जम्बूमाली नाम्ना रावणपुत्रो हनुमन्तमाह्वास्त।

उभावपि महामल्लावन्योन्यं वधकाङ्क्षिणौ। युयुधाते चिरं बाणैः पन्नगैर्मन्त्रिकाविव ॥८८॥

अथ क्रुधो हनुमान् छलज्ञो छलं लब्ध्वा गरीयसा मुद्गरेण जम्बूमालिनं रावणपुत्रं शिरसि ताडयामास। तेन मुद्गरेण हतो जम्बूमाली भूमौ निपतात। तत्कालपतितमात्र एव मृतः। जम्बूमालिनं मृतं दृष्ट्वा रावणपुत्रास्तथा सुभटाश्च हनुमन्तं वेष्टयामासुः जात्यश्वानः वराहमिव। हनूमांस्तैः सह युध्यमानो रक्षांसि क्षणेन जघान। यथा—

दोष्णो. केऽपि मुखे केऽपि केऽप्यङ्घ्रौ हृदि केऽपि न। कुक्षौ केऽपि शरैस्तीक्ष्णैर्जघ्निरे ते हनूमता ॥८९॥

रक्षोबले हनूमानन्तर्वण दव इव मध्येऽम्भोधि वाडव इव चकासामास। क्षणाच्च दिवाकरस्तमांसीव रक्षांस्यभांक्षीत्। तावता कुम्भकर्णः स्वं बलं भग्नं दृष्ट्वेशानेन्द्र इव शूलपाणिः स्वय योद्धुमधावत।

कानप्यंघ्रिप्रहारेण मुष्टिघातेन कानपि। कांश्चित्कूर्परघातेन तलघातेन कांश्चन ॥९०॥

कांश्चिन्मुद्गरघातेन शूलघातेन कांश्चन। कानप्यन्योन्यघातेन कुम्भकर्णोऽवधीत्कपीन् ॥९१॥ युग्मम् ॥

एवं कपिहननतत्परमालोक्य कपीश्वरः सुग्रीवः कुम्भकर्णं हन्तुं दधावे। भामण्डलो, दधिमुखो, महेन्द्रः, कुमुदोऽङ्गद इत्यादयोऽन्येऽपि वानराधिपाश्चित्राण्यस्त्राणि वर्षन्तो दशाननानुजं कुम्भकर्णं पञ्चाननं व्याधा इवारुधन्। कुम्भकर्णस्तेषु वानरेष्वमोघं स्वापनास्त्रं मुमोच। समकालं निद्रायमाणं स्वं सैन्यं विलोक्य वानरपतिः प्रबोधनीं महाविद्यां ससार। तया विद्यया सर्वेऽपि वानरभटा उत्थिताः प्रजगर्जन्।

शरे गते कुम्भकर्णोऽस्तीत्सुग्रीवस्तुमुलकारिणः। उत्तस्थुर्वानरभटाः खगा इव निशात्यये ॥९२॥

ते वानरभटाः कुम्भकर्णमाकृष्टकार्मुकमुपाद्रवन्। तथा सुग्रीवः कुम्भकर्णस्य सारथिं रथं च गदया दलयामास। भूमिष्ठः कुम्भकर्णोऽथ वामेतरपाणिना धृतमुद्गर एकशृङ्गो गिरिरिव सुग्रीवायाभ्यधावत्। कुम्भकर्णस्य युद्धार्थं धावतो मार्गे गरीयसा तस्यांगवातेन भूपालाः कपयः पेतुः, यथा करिस्पर्शेन द्रुमाः। स कुम्भकर्णः प्लवंगमैरस्खलितः स्खलैर्नदीवेग इव गच्छन्सुग्रीवरथं मुद्गरेणाहत्याचूर्णयत्। सुग्रीव एकां महीयसीं शिलां खे समुत्पत्य कुम्भकर्णाय मुमोच। कुम्भकर्णोऽपि मुद्गरेण तां शिलां कणशोऽकरोत्। पुनः

सुग्रीवः कुम्भकर्णाय तडित्तडितिकुर्वाणमुत्कटं तडिद्दण्डास्त्रममुचत् । तस्मै चण्डाय तडिद्दण्डाय कुम्भकर्णोऽनेकशः शस्त्राणि प्रचि-
क्षेप । परं तानि शस्त्राणि तडिद्दण्डे मोघीभूतानि, अभव्ये गुरुवचनानीव । तेन घातेन कुम्भकर्ण उर्व्यां पपात कल्पान्तः पर्वत इव ।
कुम्भकर्णे मूर्च्छिते दशाननः स्वयमचालीत् । तावतेन्द्रजिन्नत्वा रावणं प्रत्येवमूचे–भो स्वामिन् ! तव पुरतो रणे यमो न समर्थो,
॥९२॥ नापि वरुणो, नापि कूवेरो, नवा हरिः समर्थः । तर्हि केऽमी वराकाः काका इव वानराः । हे देव ! ततस्त्वं तिष्ठ । अहं गत्वा वान-
रान् शिक्षयामि । अथवा सर्वान् हनिष्यामि रुष्टो मशकमुष्टिवत् । इति निषिध्य रावणमिन्द्रजित्स्वयं कपिसेनां प्रविवेश । कपीन्
हक्कयामास, रे रे वानराः ! युध्यताम् । अहं रावणपुत्र इन्द्रजिन्नामाऽयुध्यमानान्नो हन्मि । क्व मारुतिः, क्व सुग्रीवः, अथवा ताभ्यां
कृतम्, क्व स्तस्तौ रामसौमित्री, इत्युक्तवन्तमिन्द्रजितं दृष्ट्वा सुग्रीवो दशग्रीवनन्दनं दधावे ।

भामण्डलोऽपीन्द्रजितोऽवरजं मेघवाहनम् । आयोधयितुमारेभे शरभं शरभो यथा ॥९३॥
दिग्गजा इव चत्वारश्चत्वारः सागरा इव । आस्फालन्तः शुशुभिरे ते त्रिलोकीभयंकराः ॥९४॥
आयसैर्दैवतैरस्त्रैरयुध्यन्त चिराय ते । परं न कोऽपि केनापि तेषां मध्यादजीयत ॥९५॥

अथेन्द्रजिन्मेघवाहनौ रावणपुत्रौ सुग्रीवभामण्डलयोर्नागपाशास्त्रं मुमुचतुः । तेन नागपाशेन तौ द्वौ भामण्डलकपीश्वरावनी-
श्वराविव बद्धौ ।

इतश्च लब्धसंज्ञेन कुम्भकर्णेन रोषतः । गदया ताडितः पृथ्व्यां मारुतिर्मूर्च्छितोऽपतत् ॥९६॥
स कुम्भकर्णो दोष्णा तं हनुमन्तं करी करेणेव समुद्धृत्याऽन्तः कक्षं न्यधत्त च ।

ऊचे विभीषणो रामं स्वामिन्नेतौ हि ते बले। बलीयसौ सारभूतावानने नयने इव ॥९७॥

विभीषणो रामं प्रत्यूचे–हे स्वामिन्! हे श्रीरामचन्द्र! यावद्बद्धौ भामण्डलसुग्रीवाविन्द्रजिन्मेघवाहनौ लङ्कां गृहीत्वा न यातः, तावत्तौ मोचयामि, हनुमान्कुम्भकर्णेन बद्धः सोऽपि मोच्यः। यतः–स्वामिन्! भामण्डलसुग्रीवहनुमद्भिरहितं सैन्यमवीरमिव जानीहि! अतस्तत्र यामि। यथा तावहं मोचयामि। एवं तत्र ब्रुवत्येवाङ्गदो वालिपुत्रो गत्वा कुम्भकर्णमाक्षिप्य युद्धकोविदो युयुधे। कुम्भकर्णेन क्रोधारुणलोचनेन प्रोरिक्षप्तभुजपाशतो हनुमान् क्षणेन लब्धसंज्ञः पञ्जराद्विहंगम इवोत्पत्य ययौ। विभीषणो भामण्डलसुग्रीवमोचनायेन्द्रजिन्मेघवाहनाभ्यां स्वयं योद्धुमधावत। पितृव्यं विभीषणं संग्रामसज्जं दृष्ट्वेन्द्रजिच्चिन्तयति हाहेति। अनेन तातकल्पेन सह कथं योद्धव्यम्। तत इतोऽपसरणं युक्तम्। इति विचिन्त्य तौ पाशबद्धौ भामण्डलसुग्रीवौ तत्रैव मुक्त्वा तौ रावणपुत्रौ नेशतुः। विभीषणेन भामण्डलसुग्रीवौ पन्नगपाशबद्धौ दृष्टौ। तौ म्लानाननौ रामेणापि दृष्टौ। रामेण चिन्तितम्–अहो! रावणपुत्रौ बलवन्तौ याभ्यां भामण्डलसुग्रीवौ बद्धौ। ततो रावणं सपुत्रं जेतुं कमपि देवं स्मरामि। एवं विचिन्त्य स पूर्वप्रतिपन्नवरं सुरं महालोचननामानं येन पूर्वं रामपुरी निर्मिता तं सुपर्णामरपुङ्गवं स्मरति। सोऽपि स्मरणमात्रेण तत्क्षणं समागतः। तेनागत्य किं किं कृतम्। यत्कृतं तदाह। श्रीरामचन्द्राय सिंहनादाख्यां विद्यां, तथा हलं, मुशलं, स्यंदनं च देवनिर्मितं ददौ। तथा लक्ष्मणाय गारुडीविद्यां ददौ। तथा स्यन्दनं, गरुडध्वजं, विद्युद्वदनां गदां रिपुनाशनीम्, तथा वारुणास्त्रविद्यामन्यामपि शस्त्रविद्यां, तथा छत्रचामरावुभयोरपि दत्त्वा पुनः स सुपर्णामरो लक्ष्मणवाहनीभूय गरुडरूपं विधाय पुरः स्थितः। तं गरुडं दृष्ट्वा भामण्डलसुग्रीवयोः पन्नगपाशाः प्रणेशुः। अथ गरुडवर्णनम्—

आजानुकनकगौर-मानाभेः शङ्खकुन्दहरधवलम्। आकण्ठतो नवदिवा-करकान्तिमामूर्द्धतोऽजननिभम्॥९८॥

एवंभूतं गरुडदेवं लक्ष्मणवाहनीभूतं दृष्ट्वा सर्वेऽपि सैनिका जहृषुः। सकलेऽपि रामसैन्ये जयजयारवो जज्ञे। रक्षोबले कलकलो जज्ञे। तस्मिन्समयेऽब्जिनीपतिरस्तं ययौ। प्रातर्भूयोऽपि रामरावणयोः सैन्यानि सर्वाभिसारेण रणाङ्गण उपासरन्। तेषां रामरावणसुभटानामिन्द्रोपेन्द्राणामिव महारणः प्रावर्तत। क्रुद्धै रक्षोभिरक्षोभि वानराणां वरूथिनी। तस्मिन्समये भग्नप्रायां निजां चमूं प्रेक्ष्य सुग्रीवाद्या वानरेश्वरा राक्षससैन्ये विविशुर्मतङ्गजाः सरसीव। तैः सुग्रीवाद्यै रावणसैन्यं विदुद्रुवे। तदा राक्षसबलं भग्नं दृष्ट्वा रावणः संक्रुद्धः स्वयं योद्धुं दधावे। रथचित्कारेण तथा रथप्रचारेण मेदिनीं दारयन्निव वानरसैन्ये प्रससार। तस्य रावणस्य प्रसरतो वानरसैन्येषु सुग्रीवाद्याः कपीश्वरास्तस्य रावणस्य पुरः स्थातुं नहीश्वराः स्युः। तदा रावणमेवंविधं दृष्ट्वा श्रीरामो युद्धसज्जो बभूव। अथ युद्धाय चलितं रामं निरीक्ष्य विभीषणो बभाषे-हे श्रीराम! पूर्वं तावद्रावणेन सहाहं योत्स्य इति रामं निषिध्य स्वयं गत्वा विभीषणो रावणं रुरोध। ततो रावणो विभीषणं बभाषे-रे विभीषण! किं राममाश्रितः? मम सहोदरो भूत्वाऽन्यं जनं किं सेवसे? एहि मम सेवां कुरु, यथा ते राज्यं ददामि। भो विभीषण! पश्य, अनेन रामेण त्वां हन्तुकामेन मम मुख आदौ त्वमेव क्षिप्तः क्षुधितस्य मुखे कवलवत्। रामेणात्मरक्षणायेदं साधुमन्त्रितम्। अतस्त्वं हृदये विचार्यैहि, अद्यापि किञ्चिद्गतं नास्ति। हे विभीषण! त्वं मम वल्लभोऽसि, भ्रातृत्वात्। अतः पुनः पुनः कथ्यते। एहि, आवाभ्यामेकीभूयैतौ रामलक्ष्मणौ हन्येते। विभीषण उवाच-हे रावण! रामस्त्वां प्रति क्रुद्धो यमराज इव स्वयमागच्छन्मया निषिद्धः। अहं त्वां बोधयितुं युद्धव्याजादिहाऽगमम्। हे सहोदर! रावणराजेन्द्र! अद्यापि सीतां मुञ्च, मयि प्रसन्नो भव, मम वाक्यं कुरु, अद्यापि किञ्चिद्विनष्टं नास्ति, तथा सकलेऽपि संसारे तव

यशो भविष्यति। हे पान्थ! अहं मृत्युभयाद्रामसमीपं न गतोऽस्मि, न च राज्यलोभेन गतोऽस्मि। किन्त्वपवादभयाद्रामं सेवितुं गतोऽस्मि। अतः सीतार्पणेन विवादं प्रणाशय, यथाऽहं रामं विहाय पुनरेव त्वां श्रयामि।

क्रुद्धोऽथ रावणः प्रोचे किमद्यापि विभीषिकाम्। रे विभीषण! दुर्बुद्धे! प्रदर्शयसि कातर ॥९८॥

भ्रातृहत्याभयादुक्तोऽस्येवं नान्येन हेतुना। इत्युक्त्वा स्फालयामास कार्मुकं दशकन्धरः ॥९९॥

रावणं सङ्ग्रामसज्जं ज्ञात्वा विभीषणो बभाषे–भो रावण! मयापि भ्रातृहत्याभयादुक्तोऽसि, न पुनर्भीत्योक्तोऽसि, इति कथयन् विभीषणोऽपि धनुरास्फालयामास। ततस्तयोर्युद्धं प्रवृत्तं शक्रेशानयोरिव। चित्राण्यस्त्राणि वर्षन्तौ जगद्भयंकरौ जगदेकवीरौ युध्यमानौ विराजेते। अथ रावणपक्ष इन्द्रजिन्मेघवाहनकुम्भकर्णा अपरेऽपि राक्षसाः स्वामिभक्त्या विभीषणं हन्तुं दधाविरे। विभीषणपक्षे श्रीरामो, लक्ष्मणः, सुग्रीवो, हनुमान् तथाऽन्येऽपि समुत्थिताः। तदा रामः कुम्भकर्णमरौत्सीत्। लक्ष्मण इन्द्रजितमरौत्सीत्। तथा नीलः सिंहजघनं, दुर्मर्षो घटोदरं, स्वयंभूर्दुर्मतिं, शंभुं नलो, अंगदो मयं, स्कन्दश्चन्द्रणखं, चन्द्रोदरात्मजो विघ्नं, भामण्डलः केतुं, श्रीदत्तो जम्बूमालिनं, पवनंजयपुत्रः कुम्भकर्णपुत्रं कुम्भं, अङ्गदः सुमालाख्यं, कुन्दो धूम्रराक्षसमेवमन्येऽपि राक्षसा अन्येऽपि कपयः परस्परमयुध्यन्त, मत्स्यैर्मत्स्या इवार्णवे।

एवं युद्धे वर्तमाने भीषणेभ्योऽपि भीषणे। लक्ष्मणायामुचत्क्रोधादस्त्रं तामसमिन्द्रजित् ॥७००॥

तदस्त्रं तपनास्त्रेण सौमित्रिः शत्रुनाशनः। सद्यो विद्रावयामासाग्निना मदनपिण्डवत् ॥१॥

ततो लक्ष्मण इन्द्रजितं नागपाशैर्बद्ध्वा स्वसैन्येऽनैषीत्। तदा रामचन्द्रः कुम्भकर्णं नागपाशैर्बद्ध्वा स्वसैन्येऽनैषीत्। अन्यैरपि

रामसैनिकैर्मेघवाहनप्रमुखा राक्षससैनिका बद्ध्वा रामसैन्ये निन्यिरे। तदा राक्षससैन्यं हतं, भग्नं, बन्दीकृतं दृष्ट्वा राक्षसेन्द्रो रावणः क्रुद्धो विभीषणाय जयश्रियो मूलं शूलं चिक्षेप। ततो भृशं क्रुद्धो रावणो विजयाशक्तिं वामेतरपाणिना विभीषणं हन्तुं समुद्दधे। कथंभूतां शक्तिम्।

धगद्धगितिकुर्वाणा तडत्तडितिनादिनीम्। संहाराब्दतडिल्लेखामिव खेऽभ्रमयत् स ताम्॥२॥

तां शक्तिं दृष्ट्वा सर्वेऽपि रामसैनिका भयाकुला बभूवुः। तदा रामो लक्ष्मणं बभाषे–हे लक्ष्मण! एष विभीषण आगन्तुर्हन्यते, तद्वरं न, तर्हि विभीषणरक्षा क्रियते। एवं रामवचः श्रुत्वा लक्ष्मणो दशकण्ठमाक्षिपन् विभीषणाग्रेऽस्थात्। गरुडरथस्थं लक्ष्मणश्चालोक्य रावण उवाच–भो पुरुषोत्तम! मया तुभ्यं शक्तिर्नोत्क्षिप्ता। त्वं परमृत्युना मा मृथाः। एवमुक्तोऽपि लक्ष्मणो विभीषणाग्रतो नापसरत्। पुनर्लक्ष्मणो बभाषे–भो रावण! मुञ्च शक्तिम् यथाशक्ति। तद्वचः श्रुत्वा कुपितो रावणोऽमोघविजयां शक्तिं भ्रामयित्वा रामानुजन्मने मुमोच। तां शक्तिमापतन्तीं दृष्ट्वा सौमित्रिः, सुग्रीवो, हनुमान्, अङ्गदो, भामण्डलोऽन्येपि वानरेश्वराः स्वैः स्वैः प्रहरणैः खड्ग–तीर–तोमर–गदाप्रमुखैरताडयन्, परं शक्तिप्रहरणं नापसरत्, अभव्या गुरुवाक्यैः पापादिव। सा शक्तिरमोघविजयाऽऽगत्य लक्ष्मणोरःस्थलेऽपतत्।

तया भिन्नो महीपृष्ठे निपपात च लक्ष्मणः। उत्पपात च तत्सैन्ये विष्वग् हाहारवो महान्॥३॥

पतितं लक्ष्मणं दृष्ट्वा कुपितो रामो रावणं प्रति मुद्गरमुत्पाट्य हन्तुं दधावे। रामो मुद्गरघातेन रावणं विरथं व्यधात्। पुना रावणोऽन्यं रथमारुरोह।

भङ्क्त्वा भङ्क्त्वा रथानेवं पञ्च वारान्दशाननम्। काकुत्स्थो विरथीचक्रे जगदद्भुतपौरुषः ॥४॥
दशास्योऽचिन्तयच्चैवं भ्रातृस्नेहादयं स्वयम्। मरिष्यत्येव तत्किं मे योधितेनाधुनामुना ॥५॥
दशग्रीवो विमृश्यैवं ययौ लङ्कापुरीं द्रुतम्। अस्तं जगाम च रवी रामशोकादिवातुरः ॥६॥
भग्नेऽथ रावणे रामो निवृत्त्येयाय लक्ष्मणम्। तञ्च दृष्ट्वा निपतितं पपात भुवि मूर्च्छितः ॥७॥

सुग्रीवविभीषणादिभिः सैन्यैश्चन्दनादिभिरभिषिक्तः शीतलजलेन चाभिषिक्तः पल्लवैर्वीजितो लब्धसंज्ञो रामो रुदन्नेवं जगाद। हे वत्स! तव किं बाधते? ब्रूहि, किं तूष्णीं स्थितोऽसि? यदि वक्तुं न शक्तस्तर्हि संज्ञया समाख्याहि। तवाग्रजं प्रीणय वाक्यदानेन। पुना राम उवाच-हे बान्धव! तवाग्रे जीवन्रावणोऽगादिति लज्जावशाद् ध्रुवं न भाषसे-तद्भाषस्व, यत्तवेप्सितम्। इति कथयन्भ्रातृस्नेहरथं गतो रामो रावणंस्तर्जयन्धनुरास्फाल्योत्तस्थौ, तावता कपीश्वरो विनयपूर्वकमेवमूचे-स्वामिन्! निशाचरो लक्ष्मणं गाढप्रहारं कृत्वा लङ्कां गतः। स्वामिन्धैर्यमाधेहि, किंचित्सौमित्रेः प्रतिजागरणोपायं चिन्तय। तच्छ्रुत्वा राम एवं जगाद-यथा-

भूयो रामो जगादैवं हृता भार्या हतोऽनुजः। तिष्ठत्यद्यापि रामोऽयं शतधा न विदीर्यते ॥८॥
सखे सुग्रीवहनुमन्भामण्डलनलाङ्गद। विराधाद्याश्च सर्वेऽपि यात स्वौकसि सम्प्रति ॥९॥

अथ सङ्ग्रामेन किम्? सङ्ग्रामं विना सैन्येन किम्? लक्ष्मणेन विना जीवितेन किम्? आः किं जातम्? दैवेन किं कृतम्? एवं कथयन्मुहुः रोदिति। यथा—

स्थाने स्थाने कलत्राणि मित्राणि च पदे पदे। तं देशं नैव पश्यामि यत्र भ्राता सहोदरः ॥१०॥

रामसैनिकैर्मेघवाहनप्रमुखा राक्षससैनिका बद्ध्वा रामसैन्ये निन्यिरे। तदाक्षससैन्यं हतं, भग्नं, बन्धीकृतं दृष्ट्वा राक्षसेन्द्रो रावणः क्रुद्धो विभीषणाय जयश्रियो मूलं शूलं चिक्षेप। ततो भृशं क्रुद्धो रावणो विजयाशक्तिं वामेतरपाणिना विभीषणं हन्तुं समुद्दधे। कथंभूतां शक्तिम्।

धगद्धगितिकुर्वाणा तडत्तडितिनादिनीम्। संहाराब्दतडिल्लेखामिव खेऽभ्रमयत् स ताम्॥२॥

तां शक्तिं दृष्ट्वा सर्वेऽपि रामसैनिका भयाकुला बभूवुः। तदा रामो लक्ष्मणं बभाषे–हे लक्ष्मण! एष विभीषण आगन्तुर्हन्यते, तद्वरं न, तर्हि विभीषणरक्षा क्रियते। एवं रामवचः श्रुत्वा लक्ष्मणो दशकण्ठमाक्षिपन् विभीषणाग्रेऽस्थात्। गरुडरथस्थं लक्ष्मणश्चालोक्य रावण उवाच–भो पुरुषोत्तम! मया तुभ्यं शक्तिर्नोत्क्षिप्ता। त्वं परमृत्युना मा मृथाः। एवमुक्तोऽपि लक्ष्मणो विभीषणाग्रतो नापसरत्। पुनर्लक्ष्मणो बभाषे–भो रावण! मुञ्च शक्तिम् यथाशक्ति। तद्वचः श्रुत्वा कुपितो रावणोऽमोघविजयां शक्तिं भ्रामयित्वा रामानुजन्मने मुमोच। तां शक्तिमापतन्तीं दृष्ट्वा सौमित्रिः, सुग्रीवो, हनुमान्, अङ्गदो, भामण्डलोऽन्येपि वानरेश्वराः स्वैः स्वैः प्रहरणैः खड्ग–तीर–तोमर–गदाप्रमुखैरताडयन्, परं शक्तिप्रहरणं नापसरत्, अभव्या गुरुवाक्यैः पापादिव। सा शक्तिरमोघविजयाऽऽगत्य लक्ष्मणोरःस्थलेऽपतत्।

तया भिन्नो महीपृष्ठे निपपात च लक्ष्मणः। उत्पपात च तत्सैन्ये विष्वग् हाहारवो महान्॥३॥

पतितं लक्ष्मणं दृष्ट्वा कुपितो रामो रावणं प्रति मुद्गरमुत्पाटय हन्तुं दधावे। रामो मुद्गरघातेन रावणं विरथं व्यधात्। पुना रावणोऽन्यं रथमारुरोह।

भङ्क्त्वा भङ्क्त्वा रथानेवं पञ्च वारान्दशाननम्। काकुत्स्थो विरथीचक्रे जगदद्वैतपौरुषः ॥४॥

दशास्योऽचिन्तयच्चैवं भ्रातृस्नेहादयं स्वयम्। मरिष्यत्येव तत्किं मे योधितेनाधुनामुना ॥५॥

दशग्रीवो विमृश्यैवं ययौ लङ्कापुरीं द्रुतम्। अस्तं जगाम च रवी रामशोकादिवातुरः ॥६॥

भग्नेऽथ रावणे रामो निवृत्त्येयाय लक्ष्मणम्। तञ्च दृष्ट्वा निपतितं पपात भुवि मूर्च्छितः ॥७॥

सुग्रीवविभीषणादिभिः मैन्यैश्चन्दनादिभिरभिषिक्तः शीतलवारिणा चाभिषिक्तः पल्लवैर्वीजितो लब्धसंज्ञो रामो रुदन्नेवं जगाद। हे वत्स! तव किं बाधते? ब्रूहि, किं तूष्णीं स्थितोऽसि? यदि वक्तुं न शक्तस्तर्हि संज्ञया समाख्याहि। तवाग्रजं प्रीणय वाक्यदानेन। पुना राम उवाच-हे बान्धव! तवाग्रे जीवन्रावणोऽगादिति लज्जावशात् ध्रुवं न भाषसे-तद्भाषस्व, यत्तवेप्सितम्। इति कथयन्भ्रातृस्नेहवशं गतो रामो रावणंस्तर्जयन्धनुरास्फाल्योत्तस्थौ, तावता कपीश्वरो विनयपूर्वकमेवमूचे-स्वामिन्! निशाचरो लक्ष्मणं गाढप्रहारं कृत्वा लङ्कां गतः। स्वामिन्धैर्यमाधेहि, किंचित्सौमित्रेः प्रतिजागरणोपायं चिन्तय। तच्छ्रुत्वा राम एवं जगाद-यथा-

भूयो रामो जगादैवं हृता भार्या हतोऽनुजः। तिष्ठत्यद्यापि रामोऽयं शतधा न विदीर्यते ॥८॥

सखे सुग्रीवहनुमन्भामण्डलनलाङ्गद। विराधाद्याश्च सर्वेऽपि यात स्वौकसि सम्प्रति ॥९॥

अथ सङ्ग्रामेन किम्? सङ्ग्रामं विना सैन्येन किम्? लक्ष्मणेन विना जीवितेन किम्? आः किं जातम्? दैवेन किं कृतम्? एवं कथयन्भृशं रोदिति। यथा—

स्थाने स्थाने कलत्राणि मित्राणि च पदे पदे। तं देशं नैव पश्यामि यत्र भ्राता सहोदरः ॥१०॥

रामसैनिकैर्मेघवाहनप्रमुखा राक्षससैनिका बद्ध्वा रामसैन्ये निन्यिरे। तद्राक्षससैन्यं हतं, मग्नं, बन्धीकृतं दृष्ट्वा राक्षसेन्द्रो रावणः क्रुद्धो विभीषणाय जयश्रियो मूलं शूलं चिक्षेप। ततो भृशं क्रुद्धो रावणो विजयाशक्तिं वामेतरपाणिना विभीषणं हन्तुं समुद्दधे। कथंभूतां शक्तिम्।

धगद्धगितिकुर्वाणा तडत्तडितिनादिनीम्। संहाराब्दतडिल्लेखामिव खेऽभ्रमयत् स ताम् ॥२॥

तां शक्तिं दृष्ट्वा सर्वेऽपि रामसैनिका भयाकुला बभूवुः। तदा रामो लक्ष्मणं बभाषे–हे लक्ष्मण! एष विभीषण आगन्तुर्हन्यते, तद्वरं न, तर्हि विभीषणरक्षा क्रियते। एवं रामवचः श्रुत्वा लक्ष्मणो दशकण्ठमाक्षिपन् विभीषणाग्रेऽस्थात्। गरुडरथस्थं लक्ष्मणमालोक्य रावण उवाच–भो पुरुषोत्तम! मया तुभ्यं शक्तिर्नोत्क्षिप्ता। त्वं परमृत्युना मा मृथाः। एवमुक्तोऽपि लक्ष्मणो विभीषणाग्रतो नापसरत्। पुनर्लक्ष्मणो बभाषे–भो रावण! मुञ्च शक्तिम् यथाशक्ति। तद्वचः श्रुत्वा कुपितो रावणोऽमोघविजयां शक्तिं भ्रामयित्वा रामानुजन्मने मुमोच। तां शक्तिमापतन्तीं दृष्ट्वा सौमित्रिः, सुग्रीवो, हनुमान्, अङ्गदो, भामण्डलोऽन्येपि वानरेश्वराः स्वैः स्वैः प्रहरणैः खड्ग–तीर–तोमर–गदाप्रमुखैरताडयन्, परं शक्तिप्रहरणं नापसरत्, अभव्या गुरुवाक्यैः पापादिव। सा शक्तिरमोघविजयाऽऽगत्य लक्ष्मणोरःस्थलेऽपतत्।

...ष्मणः। उत्पपात च तत्सैन्ये विष्वग् हाहारवो महान् ॥३॥

... निशं न्यधात। पुना-

भव। यथेदृशं वाक्यं न शृणोमि। एवं करुणं रुदन्तीं काचिद्राक्षसी कृपावत्यवलोकिन्या विद्ययाऽवलोक्यैवं कथयति-हे सुन्दरि! सीते! ते देवरः प्रभातेऽक्षताङ्गो भविष्यति। तथा रामलक्ष्मणावत्रागत्य त्वामेवानन्दयिष्यतः। तच्छ्रुत्वा सीता स्वस्थचित्ता जाता। अथ रावणो लङ्कां समागतो मया सौमित्रिर्मारित इति क्षणं जहर्ष। पुनः क्षणानन्तरं भ्रातृपुत्रमित्रबन्धनं श्रुत्वा भृशमुच्चै रुरोद। यथा—

हा वत्स! कुम्भकर्ण! त्वं ममात्मैव परः परः। द्वितीयमेव मे बाहू इन्द्रजिन्मेघवाहनौ ॥१२॥

हा वत्सा जम्बूमाल्याद्या मम रूपान्तरोपमाः। अप्राप्तपूर्वं प्राप्ताः स्थ कथं बन्धं गजा इव ॥१३॥

स्मारं स्मारं स्वबन्धूनामित्थं बन्धादिनूतनम्। भूयो भूयो दशग्रीवो मुमूर्च्छ च रुरोद च ॥१४॥

इतश्च रामसैन्ये पूर्वं द्वारस्थकं भामण्डलमुपेत्य प्रतिचन्द्रो विद्याधरोऽवदत्-भो भामण्डल! मम रामपादान्दर्शय यथा लक्ष्मणस्य जीवनोपायमाख्यास्यामि। यतोऽहं युष्माकं हितोऽस्मि। भामण्डलस्तं प्रतिचन्द्रं बाहुना धृत्वा रामपादान्तेऽनयत्। सोऽपि रामं प्रणम्यैवं व्यजिज्ञपत्-स्वामिन्! सङ्गीतपुरं नाम नगरम्। शशिमण्डलो नाम राजा। तस्य सुप्रभा नाम राज्ञी। तयोः पुत्रः प्रतिचन्द्रो नाम्नाऽहम्। एकस्मिन्दिनेऽहं सकलत्रः क्रीडार्थमम्बरे गच्छन्सहस्रविजयनाम्ना विद्याधरेण दृष्टः। तेन मत्प्रियारूपमोहितेन कामवशं गतेन मया सह सङ्ग्रामो विहितः। तस्मिन्सङ्ग्रामे तेन विद्याधरेणाहं चण्डरवया शक्त्याऽऽहत्य भूतले पातितः। अयोध्यानगर्यामन्ते महेन्द्रोदयोद्यानमहीतले लुठन् त्वद्भ्रात्राऽतिकृपालुना भरतेनाहं दृष्टः। तेन सद्यस्तत्कालं सुगन्धाम्भोभिः सिक्तोऽहं निःशल्यो जातः। मत्तो चण्डरवा शक्तिर्निरगात् दस्युः परगृहादिव। सद्यस्तत्कालं रूढव्रणोऽहं जातो मया विस्मितचे-

न मे दुःखं हृता सीता न दुःखं लक्ष्मणो हतः। एतदेव महद् दुःखं यन्न राज्ये विभीषणः ॥११॥

श्रीरामं विलपन्तं दृष्ट्वा विभीषणो बभाषे–हे राजेन्द्र! कातरवत्किं रोदिषि? धैर्यं निधेहि। लक्ष्मणस्य प्रतीकाराय सर्वथा प्रयतस्व यतः—शक्त्या हतः पुमान् यामिनीं यावज्जीवति, विभातायां विभावर्यां मरणमाप्नोति। अतो यावद्विभावरी न विभाति, तावद्यत्नो विधीयते।

आमेति राघवेणोक्ते सुग्रीवाद्यास्तु विद्यया। सप्तवप्रांश्चतुर्द्वारान् राघवौ परितो व्यधुः ॥१२॥

पूर्वद्वारे सुग्रीवो, हनुमान्, तारः, कुन्दो, दधिमुखो, गवाक्षो, गवय एते लक्ष्मणरक्षार्थं स्थिताः सन्ति। दक्षिणद्वारे भामण्डलो, विराधो, गजो, भुवनजित्, नलो, मन्दो, विभीषणश्च एते लक्ष्मणरक्षार्थं स्थिताः सन्ति। पश्चिमद्वारे नील–समरशील–दुर्धर–मन्मथ–जय–विजय–सम्भवा एते सौमित्रिरक्षार्थं स्थिताः सन्ति। उत्तरद्वारेऽङ्गदः–कूर्माङ्गो–विहङ्गमः–सुषेणश्चन्द्ररश्मिरेते सौमित्रिरक्षार्थं स्थिताः सन्ति। एते परितः सर्वेऽपि काकुत्स्थं मध्ये कृत्वा स्थिताः सन्ति। सर्वेऽपि युद्धसज्जाः, सर्वेऽपि सन्नद्धबद्धाः, सर्वेऽपि सपरिकराः, ससैन्याः श्रीरामं श्रीलक्ष्मणं च परिवेष्ट्य स्थिताः सन्ति। तस्मिन्समये केनचिद्रक्षसा गत्वा सीतायै उक्तम्–भो सीते! रावणेन शक्तिप्रहारेण लक्ष्मणो हतः, तद्विरहपीडितो रामोऽपि मरिष्यति। तच्छ्रुत्वा सीता मूर्च्छया पृथिव्यां पपात लतेव पवनाहता। त्रिजटाप्रभृतिविद्याधरीभिः शीतलाम्भोभिः संसिक्ता लब्धचेतना सीतोत्थाय करुणस्वरमेवं विललाप। हा वत्स! लक्ष्मण! हा देवर! अग्रजमेकाकिनं मुक्त्वा क्व गतोऽसि? तव विरहे तवाग्रजो मुहूर्त्तमपि हि स्थातुं न क्षमः। अहं मन्दभाग्याऽस्मि। धिङ्मां दुर्दैवदूषितां यन्मदर्थं स्वामिदेवरयोरीदृक्कष्टं समागतम्। हे वसुन्धरे! द्विधा भव। यथा तवोदरे प्रवेशं करोमि। हे हृदय! त्वं द्विधा

भव। यथेदृशं वाक्यं न शृणोमि। एवं करुणं रुदन्तीं काचिद्राक्षसी कृपावत्यवलोकिन्या विद्ययाऽवलोक्यैवं कथयति–हे सुन्दरि! सीते! ते देवरः प्रभातेऽक्षताङ्गो भविष्यति। तथा रामलक्ष्मणावत्रागत्य त्वामेवानन्दयिष्यतः। तच्छ्रुत्वा सीता स्वस्थचित्ता जाता। अथ रावणो लङ्कां समागतो मया सौमित्रिर्मारित इति क्षणं जहर्ष। पुनः क्षणानन्तरं भ्रातृपुत्रमित्रबन्धनं श्रुत्वा भृशमुच्चै रुरोद। यथा—

हा वत्स! कुम्भकर्ण! त्वं ममात्मैव परः परः। द्वितीयमेव मे बाहू इन्द्रजिन्मेघवाहनौ ॥१२॥

हा वत्सा जम्बूमाल्याद्या मम रूपान्तरोपमाः। अप्राप्तपूर्वं प्राप्ताः स्थ कथं बन्धं गजा इव ॥१३॥

स्मारं स्मारं स्वबन्धूनामित्थं बन्धादिनूतनम्। भूयो भूयो दशग्रीवो मुमूर्च्छ च रुरोद च ॥१४॥

इतश्च रामसैन्ये पूर्वं द्वाररक्षकं भामण्डलमुपेत्य प्रतिचन्द्रो विद्याधरोऽवदत्–भो भामण्डल! मम रामपादान्दर्शय यथा लक्ष्मणस्य जीवनोपायमाख्यास्यामि। यतोऽहं युष्माकं हितोऽस्मि। भामण्डलस्तं प्रतिचन्द्रं बाहुना धृत्वा रामपादान्तेऽनयत्। सोऽपि रामं प्रणम्यैवं व्यजिज्ञपत्–स्वामिन्! सङ्गीतपुरं नाम नगरम्। शशिमण्डलो नाम राजा। तस्य सुप्रभा नाम राज्ञी। तयोः पुत्रः प्रतिचन्द्रो नाम्नाऽहम्। एकस्मिन्दिनेऽहं सकलत्रः क्रीडार्थमम्बरे गच्छन्सहस्रविजयनाम्ना विद्याधरेण दृष्टः। तेन मत्प्रियारूपमोहितेन कामवशं गतेन मया सह सङ्ग्रामो विहितः। तस्मिन्सङ्ग्रामे तेन विद्याधरेणाहं चण्डरवया शक्त्याऽऽहत्य भूतले पातितः। अयोध्यानगर्यासन्ने महेन्द्रोदयोद्यानमहीतले लुठन् त्वद्भ्रात्राऽतिकृपालुना भरतेनाहं दृष्टः। तेन सद्यस्तत्कालं सुगन्धाम्भोभिः सिक्तोऽहं निःशल्यो जातः। मत्तो चण्डरवा शक्तिर्निरगात् दस्युः परगृहादिव। सद्यस्तत्कालं रूढव्रणोऽहं जातो मया विस्मितचे-

तमा तव भ्राता भरतः पृष्टः। इदं सुगन्धाम्बु भवता कुतो लब्धं येनाहं निःशल्यो जात इति मया पृष्टो भरतोऽवोचत्–भो विद्याधरेन्द्र! गन्धाम्बुमाहात्म्यं शृणु–एकस्मिन्दिने गजपुरनगराद्विन्ध्यनामा सार्थवाह इहाभ्यागात् तस्य सार्थवाहस्यैको महिषोऽतिभाराद्युटितो मार्गेऽपतत्। तन्नगरवासिनः केचिल्लोकाः पतितमहिषमूर्द्धनि पादं विन्यस्य नगरमध्ये संचेरुः। स महिषः शुभध्यानेनाकामनिर्जरया च मृत्वा पवनपुत्रो नाम्ना वायुकुमारो देवो जातः। तेनाऽवधिज्ञानं प्रयुक्तम्। पूर्वभवं दृष्ट्वा स नगरलोकस्योपरि कुपितः। तेन कुपितेन पुरे जनपदे ग्रामे सर्वत्र नानाविधो व्याधिर्विकुर्वितः। स व्याधिः सर्वत्र प्रसृतः। परं मम मातुलनगरे कौतुकमंगलपुरे द्रोणमेघनरेन्द्रराज्ये स व्याधिर्न प्रसृतः। तदा मया पृष्टं–भो मातुल! द्रोणमेघ! नरेन्द्र! तव राज्ये व्याधिर्न प्रसृतस्तत्किं कारणम्? एतन्मया पृष्टो द्रोणमेघनरेन्द्रोऽवदत्–मम भार्या प्रियंकरा नाम। सा कर्मवशत आधिव्याधिना बाधिताऽभूत्। तस्या गर्भो जातः। गर्भप्रभावात्सा राज्ञी व्याधिना मुक्ता नीरोगा जाता। क्रमेण तया राज्ञ्या पुत्री प्रसूता क्रमेण मया तस्या नाम दत्तं शल्यविशल्या इति। यथा तव देशे व्याध्युपद्रवोऽभूत्, तथा मम देशेऽप्यभूत्परं विशल्यास्नाननीरसिक्तो लोको नीरोगो जातः। इति पुत्रीप्रभावं दृष्ट्वा हे भरतनरेन्द्र! मया सत्यभूतिर्नाम्ना मुनिः पृष्टो भो महामुने! केन पुण्येन शल्यविशल्यास्नाननीरेण व्रणसंरोहः शल्यापहारो व्याधिसंक्षयश्च जायते? मुनिनोक्तम्–एतत्प्राग्जन्मतपसः फलं भवति। कानि कानि तपांस्यनया तप्तानीति मया पृष्टे मुनिर्विशल्यापूर्वाचरितानि तपांसि वर्णयन्नाह–यथा षष्ठाष्टमदशमद्वादशमैकावलीकनकावलीमुक्तावलीरयणावल्याम्बीलवर्धमानलघुसिंहनिष्क्रीडितमहासिंहनिष्क्रीडितवर्गतपघनतपप्रतरतपमासक्षपणार्धमासक्षपणयावत्षण्मासक्षपणेत्याद्यनेकतपांसि तप्तानि। तत्तपसः प्रभावादेतस्याः स्नाननीरेण व्याधयः शल्यानि च यान्ति। तथेमां कन्यां लक्ष्मणः परिणेष्यति। अस्या भर्ता

भरतार्ध भोक्ता लक्ष्मणो भावी। तया मुनिगिरा समुत्पन्नप्रत्ययेन मया स्नानपयः प्रभावो निश्चितः। इति कथयित्वा द्रोणमेघो विशल्यास्नाननीरं ममापि दिनद्वयान्ते दिनत्रयान्तेऽर्पयति। तेन नीरेण ममापि भूर्नीरोगा जाता तेन नीरेण मया त्वमभिषिक्तो नीरुग्जातः शल्यरहितो जातः। एषा गन्धाम्बूत्पत्तिस्त्वया पृष्टा, मया कथिता। तेन विद्याधरेण प्रोक्तम्–भो श्रीरामचन्द्र! तद्विशल्यास्नानवारि सूर्योदयादर्वागानय। यथा तेन वारिणा सिक्तो लक्ष्मणस्तत्क्षणादेव निःशल्यो भविष्यति। तद्विद्याधरोक्तं श्रुत्वा श्रीरामः सर्वेषां विद्याधरनरेन्द्राणां कथयति–भो विद्याधरनरेन्द्रास्त्वर्यतां त्वर्यताम्। भो भामण्डल! हनुमन्! अङ्गदप्रभृतयः स्वामिभक्ता भवन्तो गत्वाऽयोध्यां भरतं विबोध्य भरतेन सह द्रोणपुरं गत्वा विशल्यास्नाननीरं सूर्योदयादर्वाक्समानयत। तदा सर्वविद्याधरैः सम्भूय निमृष्टं किं करिष्यते? अथ किं भविष्यति? प्रभाते सूर्योदये विशल्यास्नाननीरेऽनागते लक्ष्मणो निश्चयेन निधनं यास्येव। अथ को विशल्यास्नाननीरं समानेष्यति? तावद्धनुमानाह, यथा—

पश्चात्तापहते विभीषणबले खिन्ने प्लवंगेश्वरे, मूढे जाम्बुवति प्लवंगमगणे सम्भूय भूयःस्थिते।
शक्तिप्रौढदृढप्रहारविधुरे मूर्च्छां गते लक्ष्मणे, श्रीरामे विलपत्यहो हनुमता प्रोक्तं स्थिरैः स्थीयताम् ॥१६॥

पुना रामं प्रति हनुमानाह—

देवाज्ञापय किं करोमि किमहं लङ्कामिहेवानये, जम्बूद्वीपमितो नये किमथवा वारांनिधिं शोषये।
हेलोत्पाटितविन्ध्यमन्दरहिमस्वर्णत्रिकूटाचलः, क्षेपक्षोभविवर्धमानसलिलं बध्नामि वारां निधिम् ॥१७॥

पातालतः किमु सुधारसमानयामि, निष्पीड्य चन्द्रममृतं किमु वाऽऽनयामि।
उद्यन्तमुष्णकिरणं किमु वारयामि, कीनाशमाशु कणशः किमु चूर्णयामि ॥१८॥

हनूमन्तं प्रति रामः—

चतुर्णामपि भ्रातॄणां पञ्चमो भव मारुते। गच्छ शीघ्रं महावीर! भ्रातृभिक्षां च देहि मे ॥१९॥

रामेणेत्याद्युक्तो हनुमान्भामण्डलोऽङ्गदश्चैते त्रयोऽपि विशल्यास्नानवार्यानयनार्थं विमानारूढा निशायां गगनाध्वनाऽयोध्यां प्रति प्रययुः। निशायामेवायोध्यां प्रापुः। तत्रोपरितनभूम्यां सुप्तं निद्रावशगतं भरतं दृष्ट्वा ते त्रयोऽपि हनुमदाद्या भरतस्य प्रबोधायाम्बर एवं गानं कुर्वन्ति। यतो राजकार्य उपायतो राजोत्थाप्यन्ते। यतो भूपालरागेण गीयते।

माता नास्ति पिता नास्ति नास्ति भ्राता सहोदरः। अर्थेनैव धनेनैव तस्माज्जाग्रत जाग्रत ॥२०॥
जन्मदुःखं जरादुःखं मृत्युदुःखं पुनः पुनः। संसारसागरे दुःखं तस्माज्जाग्रत जाग्रत ॥२१॥
कामः क्रोधश्च लोभश्च देहे तिष्ठन्ति तस्कराः। ज्ञानरत्नापहारन्ति तस्माज्जाग्रत जाग्रत ॥२२॥
आशया बध्यते जन्तुः कर्मणा बहुचिन्तया। आयुःक्षयं न जानन्ति तस्माज्जाग्रत जाग्रत ॥२३॥
मा सुयह जग्गियव्वं, पलाइअव्वम्मि कीसवीसमह। तिण्हि जणा अणुलग्गा, रोगो अ जराय मच्चूअ॥
उत्थायोत्थाय बोद्धव्यं किमद्य सुकृतं कृतम्। आयुषः खण्डमादाय रविरस्तमयं गतः ॥२५॥

इति गीतं श्रुत्वा जागरितो भरतः। ते त्रयोऽप्यम्बरादवतीर्य भरतं नत्वा भरतसमीप उपरितनभूम्यां सुखासनेषूपविष्टाः। ते

त्रयोऽपि पृष्टा भरतेन किमागमनकारणम् ? यूयं के ? कुतः समागताः ? किं प्रयोजनम् ? तावता हनुमता प्रोक्तम्–वयं रामसेवका विद्याधरा इति निवेद्य सीताऽपहारादिः सर्वोऽपि वृत्तान्तः कथितः। लक्ष्मणः शक्तिप्रहारभिन्नदेहो वर्तते। तत्स्नेहमोहितो रामोऽपि महाशोकसागरे पतितोऽस्ति। यदि शल्यविशल्यास्नाननीरं लभ्यते तदा लक्ष्मणो जीवति, रामोऽपि जीवति। अन्यथा तयोर्मरणं भविष्यति। सा विशल्या तव साध्या, रामलक्ष्मणावपि तव बान्धवौ भवतः। अथ तथा कुरु, यथा तौ जीवतः। हनुमता प्रोक्तम्–स्वामिन्नुत्थीयतां विलम्बावसरो नास्ति, त्वर्यताम् त्वर्यताम् एतत्कार्यं तव साध्यं वर्तते। भरतेनोक्तम्–एवम्, हनुमता विमानं धृतं, तत्र ते त्रयोपि चतुर्थो भरतः एवं विमानारूढाः कौतुकमङ्गलं नाम नगरं सम्प्रापुः। भरतेन राज्ञा द्रोणघनो बहुमानपूर्वं विशल्यां कन्यां लक्ष्मणार्थं ययाचे। द्रोणघनो शल्यविशल्यां याचितो हर्षनिर्भरः कन्यासहस्रयुतां विशल्यां लक्ष्मणार्थं ददौ। भरतोऽपि तां विशल्यां कन्यासहस्रसहितां विमानारूढां कृत्वा तेषां समर्पयामास। हनुमान्विमानारूढोऽयोध्यां समागात्। तत्र भरतं स्वगृहे मुक्त्वा भरताऽनुज्ञां लात्वा हनुमान्भामण्डलोऽङ्गदश्चेति त्रयोऽपि विमान उपविश्य सहस्रकन्यासहितां विशल्यां च विमानाधिरूढां कृत्वा गगनाध्वना गच्छन्तः सूर्योदयात्पूर्वंग्रामसमीपं समागताः। विशल्यासहितं हनुमन्तं दृष्ट्वा हर्षिताः सर्वेऽपि सैनिका हनुमन्तं प्रशंसन्ति। धन्या एते त्रयोऽपि ये स्वामिकार्यं कृत्वा त्वरितमेव समागताः। इति प्रशंसां कर्णाभ्यां शृण्वन् हनुमान् श्रीरामं बभाषे–स्वामिन्! एषा विशल्या। रामोऽप्यवोचद्विशल्यां प्रति–हे विशल्ये! स्नानं कुरु, यथा तव स्नाननीरेण लक्ष्मणः सज्जो भवति, विशल्यो भवति। तया कन्यकया विशल्यया चिन्तितम्–अहो! अहं यस्य पाणिग्रहणं करिष्यामि तस्य शरीरे स्नाननीरं कथमभिषिञ्चामि। इति विचिन्त्य तया पाणिना स्पृष्टो लक्ष्मणस्तत्क्षणादेव विशल्यो जातः। निर्गताऽमोघविजया

शक्तिः। विशल्याप्राग्भवतपस्तेजः सोढुमशक्ता लक्ष्मणशरीरान्निर्गता। ततो निर्गतमात्रा गगने समुत्पतन्ती स्वेच्छया यान्ती समुत्पत्य हनुमता धृता, श्येनेन चिल्लिकेव। सा शक्तिरमोघविजयोचे–भो हनुमन्! न मे कश्चिद्दोषः, अहं प्रज्ञप्तीभगिनी, धरणेन्द्रेण रावणाय दत्ता, रावणेन मुक्ता लक्ष्मणं प्रति। अहं किं करोमि? मम को दोषः? देवतारूपा, यत्कश्चित्कारापयति तत्करोमि मां मुञ्च स्वस्थानं यामि। इत्युक्ते सा हनुमता मुक्ता स्वस्थानं गता लज्जितेव। सा विशल्याऽपि लक्ष्मणं भूयो भूयः पाणिना पस्पर्श। पुनः पुनर्गोशीर्षचन्दनेन शनैर्विलिलेप। तत्क्षणेन सौमित्री रूढव्रणः शीघ्रं प्रसुप्त इवोत्थितः, श्रीरामं ननाम, रामोऽपि साश्रुनयनः सर्वं विशल्यावृत्तान्तं लक्ष्मणाय शशंस। तत्स्नानपयसाऽन्येऽपि सुभटा घातजर्जराः सज्जा जाताः। अथ सौमित्री रामशासनात्तदानीमेक कन्यासहस्रसहितां विशल्यामुपयेमे। रामेण सौमित्रेर्जन्ममहोत्सववन्महामहश्चक्रे। एष वृत्तान्तः केनचिच्चरेण रावणाग्रे विज्ञप्तः। हे राक्षसेन्द्र! लक्ष्मणो विशल्याकरस्पर्शाज्जीवितः। इति श्रुत्वा रावणो मन्त्रिभिः सह मन्त्रयांचक्रे भो मन्त्रिन्! मया लक्ष्मणः शक्तिताडितः प्रातर्मरिष्यतीति चिन्तितमभूत्, तद्विरहपीडितो रामोऽपि मरिष्यति, तदा कपयः स्वयमेव नंष्ट्वा यास्यंति, ततः कुम्भकर्ण इन्द्रजिन्मेघवाहनाः स्वयमेव समेष्यन्तीति चिन्तितं वृथा जातं, यतोऽधुना दैवयोगात्सोऽपि लक्ष्मणो जीवितः। अथ मया ते कुम्भकर्णादयः कथं मोचयितव्या इति चिन्तां करोमि। एतद्रावणवचनं श्रुत्वा मन्त्रिणः प्रोचुः–स्वामिन्! सीतामोक्षणं विना रामस्तव भ्रातृपुत्रान् न मोचयिष्यति। इयत्यपि काले गते स्वामिन्! अद्यापि किञ्चिद्विनष्टं नास्ति। निजं कुलं रक्ष रक्ष, सीतां देहि। यतः—

मानुष्यौ न मनुष्यौ तौ वानरास्ते न वानराः। व्याजेन किमपि च्छन्नं देव दुर्दैवमस्ति ते ॥२३॥

एवं मन्त्रिभिः पुनः पुनः प्रोच्यमानोऽपि सीतां नामुञ्चत्। अन्योपायांश्चिन्तयन्नेकं मन्त्रिणं शिक्षयित्वा रामं प्रति प्रेषितः। सोऽपि रामसमीपं गत्वा विनयपूर्वकं विज्ञपयति यथा मत्स्वामी रावणो मन्मुखेनेदमाह–त्वं मम जानकीं समर्पय, तथा मद्बन्धुपुत्रान्मोचय, अहं तव राज्यार्धं ददामि, तथा तुभ्यं त्रीणि कन्यासहस्राणि ददामि। यदि ममोक्तं न करिष्यति तदा ते जीवितं नास्ति। यदि जीविताद्उद्विग्नोऽस्ति तर्हि सङ्ग्रामसज्जो भूत्वा मम प्राघूर्णको भव तच्छ्रुत्वा श्रीरामो बभाषे–भो मन्त्रिन्। राज्यार्धेन मम कार्यं नास्ति, तथाऽन्यप्रमदावर्गेणापि कार्यं नास्ति। यदि रावणः सीतां प्रेषयति तदा रावणभ्रातृपुत्रान्मोचयामि नान्यथा। भो मन्त्रिन्! त्वया रावणस्य वाच्यम्, यदि जीवितेन, राज्येन च कार्यं भवति, तर्हि सीतां मुञ्च। यदि सीतां न मुञ्चसि तर्हि संग्रामसज्जो भूत्वा मम प्राघूर्णको भव। पुनः रावणमन्त्रिणा प्रोक्तम्–भो श्रीरामचन्द्र! स्त्रीमात्रकृते स्वमात्मानं प्राणसंशये क्षेप्तुं तवौचित्यं नास्ति। यतः सौमित्रिरेकवार रावणघाततो जीवितः, पुनः कथं जीविष्यति। तथा रावणाग्रेऽमी प्लवंगमा नंष्ट्वा क्व यास्यन्ति वराकाः। एकोऽपि रावणो विश्वं जेतुं समर्थो भवेत्तर्हि रावणपुरतः केऽमी वराका वानरास्तस्य पुरतः स्थातुं समर्था भवेयुः? अतो हे रामचन्द्र! हृदये विचार्य रावणभ्रातृपुत्रौ समर्पय। एतद्वचनं श्रुत्वा क्रुद्धो लक्ष्मणोऽभ्यधात्–भो दूतपाशन! हतबद्धपरिवारोऽपि रावणः किं पौरुषं नाटयति, केयं तव स्वामिनो धृष्टता, त्वं गच्छ, रावणाग्रे कथय, सज्जो भूत्वेहागच्छ, यदि जीवितेन कार्यं भवति तर्हि सीतां प्रेषयेरित्युक्त्वा मन्त्रिणं कण्ठे धृत्वा सभामध्यान्निर्वासयामास। तल्लक्ष्मणवाचिकं सर्वं रावणाय गत्वाऽऽख्यत्। तच्छ्रुत्वा रावणः सचिवान्चे–यूयं ब्रूत–सम्प्रति किं कर्तव्यम्। मन्त्रिणोऽप्यूचुः–स्वामिन्! सीताऽर्पणमुचितं वर्तते; सीताऽर्पणं विनाऽनर्थो भावी।

तेषां सीताऽर्पणगिरा मर्मणीवाहतोऽधिकम्। अन्तर्दूनो दशमुखश्चिरं स्वयमचिन्तयत्॥२७॥ यतः–

विद्यया बहुरूपाया हृदि निर्णीय साधनम्। शान्तिचैत्यं ययौ शान्तः कषायीभूय रावणः ॥२८॥

रावणश्चिन्तयति–बहुरूपिणीं विद्यां साधयामीति विचिन्त्य श्रीशान्तिनाथचैत्ये मन्दोदर्या सहितो गत्वा स्नानं कृत्वा जिनपूजां विधायैवं विधां श्रीशान्तिजिनस्तुतिं विनिर्ममे। यतः—

देवाधिदेवाय जग–त्तायिने परमात्मने। श्रीमते शान्तिनाथाय षोडशायार्हते नमः ॥२९॥

श्रीशान्तिनाथ! भगवन्! भवाम्भोनिधितारण। सर्वार्थसिद्धिमन्त्राय त्वन्नाम्नेऽपि नमोनमः ॥३०॥

ये तवाष्टविधां पूजां कुर्वन्ति परमेश्वर!। अष्टाऽपि सिद्धयस्तेषां करस्था अणिमादयः ॥३१॥

देव त्वत्पादसंस्पर्शादपि स्यान्निर्मलो जनः। अयोऽपि हेमीभवति स्पर्शवेधिरसान्न किम् ॥३२॥

त्वत्पादाब्जप्रणामेन नित्यं भूलुण्ठनैः प्रभो। शृङ्गारतिलकीभूयान्मम भाले कीणावलिः ॥३३॥

स्तुत्वेति शान्तिं लङ्केशः पुरो रत्नशीलास्थितः। तां साधयितुमारेभे विद्यामक्षस्रजं दधत् ॥३४॥

एवं श्रीशान्तिजिनं नत्वा ततः स्तुत्वा ततः पूजां कृत्वा श्रीशान्तिनाथपुरतो रत्नशीलां स्थितः पद्मासनेनोपविश्य नासाग्रन्यस्तदृग्द्वन्द्वोऽक्षमालाप्राप्तकरो योगीन्द्र इव स्तिमितनयनो बहुरूपिणीविद्यासाधनतत्परो विधिना विद्यां साधयामास। अथ मन्दोदरी रावणपट्टराज्ञ्युत्तरसाधकीभूय भूयो भूयः परितो भ्रमति। अथ मन्दोदरी द्वारपालं यमदण्डनामानमदोऽवदत्–भो यमदण्ड! सकलेऽपि नगर एवंविधामाघोषणां कारापय–भो भो लोकाः! सकलेऽपि पुरे ऽष्टाह्निकामहोत्सवं कुरुत। यमदण्डेन नगरमध्ये गत्वा सर्वत्राघोषणा कृता। भो भो लोका! नगरमध्ये जिनचैत्यालयेऽष्टाह्निकामहोत्सवं कुरुत। यो जिनपूजां न करिष्यति तस्य वधात्मको

दण्डः करिष्यते। इत्याघोषणां कृत्वा मन्दोदरीसमीपे पुनरागतो यमदण्डः। स्वामिन्यग्रे यथा कृतं तथा निवेदितम्। अथैतत्स्वरूपं वानरैरागत्य सुग्रीवाय निवेदितम्। यथा हे स्वामिन्! वानरेन्द्र! रावणो बहुरूपिणीं विद्यां साधयति। सुग्रीवेणागत्य रामचन्द्राय निवेदितम्–हे स्वामिन्! हे श्रीरामचन्द्र! रावणः श्रीशान्तिनाथचैत्ये गत्वा बहुरूपिणीं विद्यां साधयति। यावत्सा विद्या साधिता न भवति तावत्साध्यो वर्तते। साधनानन्तरमसाध्यो भविष्यति। अथातो रावणो ध्यानस्थो गृह्यते। श्रीरामेणोक्तं–भो सुग्रीव! ध्यानस्थः शान्तः शस्त्रादिरहितः श्रीशान्तिनाथप्रासादे स्थितश्छलेन गृह्यते नह्येतत्पुरुषधर्मोऽस्मत्कुलोचितं नह्येतत्। यद्भाव्यं तद्भविष्यति।

इति रामवचः श्रुत्वा छद्मनैवाङ्गदादयः। विद्याभ्रंशाय लङ्केशं शान्तिचैत्यस्थितं ययुः ॥३५॥
विदधुर्विविधांस्तत्रोपसर्गांस्ते निरर्गलाः। मनागपि न तु ध्यानादचालीद् दशकन्धरः ॥३६॥
अथाङ्गदो जगादैवं रामाज्ञीतेन किं त्वया। इदं पाखण्डमारब्धमप्राप्तशरणेन भो ॥३७॥
त्वया परोक्षे मद्भर्तुर्हृता भार्या महासती। मन्दोदरीं तु ते पत्नीं पश्यतोऽपि हराम्यहम् ॥३८॥

इत्युक्त्वा महाक्रोधारुणलोचनोऽङ्गदोऽनाथामिव रुदतीं मन्दोदरीं करुणस्वरं विलपन्तीं केशैर्धृत्वाऽऽचकर्ष, परं रावणो ध्यानतल्लीनस्तां न हि वीक्षांचक्रे। तस्मिन्समये सा बहुरूपिणी विद्या नभःस्थलं द्योतयन्त्यम्बरादवततार। रावणाग्र आगत्यैवमवदत्–

सेत्यूचे तव सिद्धाऽस्मि ब्रूहि किं करवाणि भोः। करोमि ते वशे विश्वं कियन्मात्रो हि राघवः ॥३९॥
रावणः प्रत्युवाचैवं सर्वं निष्पद्यते त्वया। स्मृता समापतेः काले स्वस्थानं गच्छ सम्प्रति ॥४०॥

तद्विसृष्टा तिरोऽधत्त सा विद्या तेऽपि वानराः । स्कन्धावारं निजं जग्मुरुत्पत्य पवमानवत् ॥४१॥
मन्दोदर्यङ्गदोदन्तं शुश्राव च दशाननः । चक्रे च सद्योऽहंकारगर्भं हुंकारमुच्चकैः ॥४२॥

ततो रावणः स्नानं कृत्वा, जिनं पूजयित्वा, दानं दत्वा, पश्चाद्भुक्त्वा देवरमणोद्यान आगात् । गत्वा सीतामुवाच-हे सीते ! मया बहुरूपिणी विद्या साधिता, मा प्रत्यक्षीभूता, अथाहं त्वत्पतिदेवरौ हत्वा त्वां बलात्कारेण सेविष्येऽतस्त्वं प्रसन्ना भव, यथा मम नियमभङ्गो न भवति। तद्वचनं श्रुत्वा जनकात्मजा मूर्च्छित्वा निपपात ।

कथंचिल्लब्धसंज्ञा सा जग्राहैवमभिग्रहम् । मृत्युश्चेद्रामसौमित्र्योस्तदास्त्वनशनं मम ॥४३॥

तच्छ्रुत्वा रावणो दध्यौ रामे स्नेहो निसर्गजः । अस्यास्तदस्यां मे रागः स्थले कमलरोपणम् ॥ ४४ ॥

ततः पश्चात्तापहतो रावणश्चिन्तयति-अयुक्तं कृतम्, यदस्या अर्थे विभीषणोऽवज्ञातः, बुद्धिसारप्रमुखा मन्त्रिमुख्या अपि न मानिताः, तथा मया कुलमपि कलङ्कितम्, यदि सीतां मुञ्चामि तर्हि सर्वोऽपिलोको मां कथयिष्यति-रामाद्भीतेन रावणेन सीता मुक्ता, इति लोकेऽपयशः स्यात्तर्हि सीतां न ददामि, इति निश्चित्य तद्दिनं तां निशां चातिक्रम्य प्रातःसमये युद्धसज्जो भूत्वा लङ्कातो निर्ययौ, एवं कथयन् यथा-

अरावणमरामं वा जगदद्यकरोम्यहम् । निर्ययावथ पौलस्त्यःपुनर्युध्याय मन्दिरात् ॥४५॥

निर्गमनसमयेऽपशकुनानि जातानि तैर्वार्यमाणोऽपि दुर्मदःसङ्ग्रामान्न विरराम। भूयः प्रववृते युद्धम् रामरावणयोरतिभयंकरं महाघोरमत्युद्भटसुभटकोटिभुजाऽऽस्फोटितत्रासिताशेषदिग्गजम् । तथा--

शरजालतिरस्कृतदृष्टिपथं पथिरोधसमाकुलतीव्रभटम् ।
भटकोटिविपाटितकुम्भितटं तटविभ्रमहस्तिशरीरचितम् ॥४६॥
रचितप्रथितोरुसुहस्तिघटं घटनागतभीरुकृतार्तरवम् ।
रवपूरितभूधरदिग्विवरं वरहेतिनिवारणखिन्ननृपम् ॥४७॥
नृपभिन्नमदोद्धुरवैरिगणं गणसिद्धनभश्चरघुष्टजयम् ।
जयलम्पटयोधशतैश्चटुलम् चटुलाश्वसहस्रविमर्दकरम् ॥४८॥
करमुष्टशरौघविघर्णरथं रथभङ्गविवर्धितपाल(घोल)बलम् ।
पलशालि भटेरितसिंहनदम् नदभीपणरक्तनदीप्रवहम् ॥४९॥

एवंविधं सङ्ग्रामं कुर्वाणो रावणो रामलक्ष्मणाभ्यां भृशं युयुधे । तावल्लक्ष्मणोऽशेपरक्षांसि विधूय तीक्ष्णैर्बाणै रावणं ताडयामास । तदा रावणः सौमित्रेर्विक्रमं दृष्ट्वा दुर्जयं ज्ञात्वा बहुरूपिणीं विद्यां विश्वभयंकरीं सस्मार । तया विद्यया स्मृतमात्रया रावण एकोऽप्यनेकरूपाणि चक्रिरे ।

भूमौ नभसि पृष्ठेऽग्रे पार्श्वयोरपि लक्ष्मणः । अपश्यद्रावणानेव विविधायुधवर्षिणः ॥५०॥
तावद्भूप इवैकोऽपि तार्क्ष्यस्थो लक्ष्मणोऽपि तान् । जघान रावणान्बाणैश्चिन्तितोपनतैः शरैः ॥५१॥
नारायणस्य तैर्बाणैर्विधुरो दशकन्धरः । सस्मार जाज्वलच्चक्रमर्धचक्रित्वलाञ्छनम् ॥५२॥

रोपारुणाक्षस्तच्चक्रं भ्रमयित्वा नभस्तले। मुमोच रावणः शस्त्रमन्त्यं रामानुजन्मने ॥५३॥

तच्चक्रं रामानुजन्मने प्रदक्षिणां कृत्वा दक्षिणे करेऽवतस्थे रविरिव, यथा रविरुदयाचलमूर्द्धन्यवतस्थे। तच्चक्रं लक्ष्मणदक्षिणे करे स्थितं दृष्ट्वा विषण्णो रावणश्चिन्तयति—मुनेर्वचः सत्यं जातं, तथा विभीषणादिभिरालोचितं मम कथितं परं मया न मानितमथ किं भविष्यति? विषण्णं भ्रातरं प्रेक्ष्य विभीषणो बभाषे—हे भ्रातर्यदि जीवितेच्छा वर्तते, तर्हि सीतां मुञ्च, श्रीरामं नमस्कुरु, यथा ते लक्ष्मणो राज्यं दत्त्वा विसृजति। विभीषणस्यैतद्वचनं श्रुत्वा कुपितो रावणो विभीषणंस्तर्जयति। रे कुलध्वंसकृद् रे विभीषण! त्वं मां चक्रविभीषिकां दर्शयसि, अनेन लक्ष्मणेन मच्चक्रं प्राप्तं तर्हि किं मत्तोऽधिको जातो यथा मया मुक्तं चक्रमस्मै निष्फलं जातं तथाऽनेनाऽपि मुक्तं चक्रं मयि निष्फलं भविष्यति। किं मम चक्रेण, एषोऽहं युद्धसज्जो मुष्टिप्रहारेण लक्ष्मणं तथा लक्ष्मणचक्रं च चूर्णयिष्यामि, तर्ह्यहं रावणः। इत्यादिवचनैर्हुंकारं कुर्वाणो रावणो लक्ष्मणेनाभापि—भो रावण! अद्यापि किञ्चिद्गतं नास्ति तव किञ्चिद्विनष्टं नास्ति। सीतां देहि सीतां दत्त्वा स्वस्थचित्तो मां नत्वा स्वस्थानं गच्छ। त्वं मया मुक्तः। एवं सौमित्रिणोक्तो रावणः पुनर्बभाषे—मुञ्च चक्रं यथा मुष्टिना चूर्णयामि लेष्ठुवत्। तच्छ्रुत्वा कुपितेन लक्ष्मणेन करेण चक्रमुद्भ्राम्य रावणाय मुक्तम्। तेन चक्रेण रावणो वक्षसि ताडितः कुष्माण्डवद्धृदयस्फोटतो भूमावपतत्।

तदा च ज्येष्ठकृष्णैकादश्यामह्नश्च पश्चिमे। यामे मृतो दशग्रीवश्चतुर्थं नरकं ययौ ॥५४॥

तदाऽऽकाशे जयजयारावो जातः। देवैर्लक्ष्मणस्योपरि कुसुमवृष्टिः कृता। कपीनां कपीश्वराणां च महान्हर्षो जज्ञे। सकले राक्षसबले कलकलो जज्ञे। यतः—

क्वचिद्वीणानादः क्वचिदपि च हाहेतिरुदितम्, क्वचिद्विद्वद्गोष्ठिः क्वचिदपि सुरामत्तकलहः।
क्वचिद्रम्या रामा क्वचिदपि जराजर्जरवपुः, न जाने संसारः किममृतमयः किं विषमयः ॥५५॥

धिग् धिक् परस्त्रीलाम्पट्यम्। यतः—

आत्मा दुर्नरके धनं नरपतौ प्राणास्तुलायां कुलं, वाच्यत्वे हृदि दीनता त्रिभुवने तेनायशःस्थापितम्।
येनेदं बहु दुःखदायिसुहृदं हास्यं खलानां कृतं, शौचं साधुजनस्य निन्दितपरस्त्रीसंगमेवासुखम् ॥५६॥

परिहरत पराङ्गनानुषङ्गं बत यदि जीवितमस्ति वल्लभं वः।
हरिहरिणीदृशो निमित्तं दश दशकन्धरमौलयो लुठन्ति ॥५७॥

आवासं परिमार्ष्टि वायु ऋतवः पुष्पोत्करं तन्वते, कीनाशो महिषेण वारि वहति ब्रह्मा पुरोधाः पुरः।
खट्वायां च नियन्त्रिता ग्रहगणा निर्णेजकः पावकः, चामुण्डा तलरक्षिका गणपतिश्चक्रीवतां चारकः ॥५८॥

एतत्सर्वमिन्द्रविद्याधरसत्कं ज्ञेयं न पुनः साक्षादिदम्। तथा च—

स्थानं त्रिकूटः परिखा समुद्रो रक्षांसि योधा धनदाच्चवित्तम्।
सञ्जीवनी यस्य मुखे च विद्या स रावणो दैववशाद्विपन्नः ॥५९॥

हर्षितं वानरबलं, त्रस्तं राक्षसबलम्। यतः—

कुसुदवनमपश्रि श्रीमदम्भोजखण्डम्, त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरोचिर्याति शीतांशुरस्तम्, हत विधिललितानां हि विचित्रो विपाकः ॥५९॥

सज्जनानां परस्त्रीसङ्गो न सुखायते, यथेन्दुः स्वैरिणीनां न सुखायते, उद्योतः स्वैरिणाम्, दीपः पतङ्गानाम्, सूर्यः कौशिकानां, दिवसो नक्तञ्चराणाम्, चन्द्रोदयश्च चौराणाम्, सुभिक्षं धान्यसङ्ग्रहिणाम्, गर्जितं शरभानाम्, चन्दनं विरहिणीनाम्, वर्षाकालः प्रावहणिकानाम्, मृदङ्गशब्दः शोकाकुलानां, गुरुवचः कुशिष्याणाम्, शृङ्गारकथा महात्मनाम्, मयूरनादो वियोगिनीनाम्, दुर्जनगोष्ठी सज्जनानां, तीव्रतपः सुकुमाराणाम्, दानवार्ता कृपणानाम्, शूरवृत्तिः कापुरुषाणाम्, परस्तुतिः खलानाम् सुखाय न भवति तथा परस्त्रीसङ्गोऽपि महापुरुषाणां सुखाय न भवति ।

इति श्रीमत्तपागच्छे विजयहीरसूरिराज्ये विजयसेनसूरियौवराज्ये पण्डितदेवविजयगणिविरचिते श्रीरामचरित्रे रावणवधो नाम सप्तमः सर्गः ।

# अष्टमः सर्गः ।

अथ विभीषणो रावणबान्धवो भयत्रस्तान्निशाचरान्दृष्ट्वा तानाश्वासयामास । ज्ञातिस्नेहवशाद्विभीषणो निशाचरानेवं बभाषे–भो भो राक्षसा ! एतौ रामलक्ष्मणावष्टमबलशार्ङ्गिणौ शरणार्हौ यूयमाश्रयध्वम् । इति विभीषणोक्तं श्रुत्वा सर्वेऽपि निशाचरा निःशंकिताः श्रीरामं शिश्रियुः । श्रीरामोऽपि तेषां राक्षसानां प्रसादं चकार । यतः–सन्तो हि नतवत्सलाः । तथा हतं पतितं रावणं दृष्ट्वा शोकाकुलितमानसो विभीषणो मर्तुकामो निजकटितटाच्छुरिकां चकर्ष । तया छुरिकयोदरमाघ्नन्रामेण करे धृतः । भ्रातृदुःखेन रोदिति ।

मन्दोदर्यादिभिः सार्धं रुदन्तमुपरावणम् । इति तं बोधयामास पद्मनाभः सलक्ष्मणः ॥६०॥

ईदृक्पराक्रमः सोऽयं न हि शोच्यो दशाननः । यस्याऽऽशशंकिरे दूरे समरेष्वमरा अपि ॥६१॥

वीरवृत्त्याऽनया मृत्युं गतोऽसौ कीर्तिभाजनम् । तदस्योत्तरकार्याणि कुरुध्वं रुदितैरलम् ॥६२॥

इति कथयित्वा श्रीरामः पूर्वं बन्धितान्कुम्भकर्णेन्द्रजिन्मेघवाहनादीन्राक्षसान्बन्धनान्मोचयामास । ते सर्वेऽपि विभीषणाद्या राक्षसा वानराश्च यथा विभीषणः कुम्भकर्ण इन्द्रजिन्मेघवाहनः, मन्दोदरीप्रभृतयोऽन्तःपुर्योऽपरेऽपि राक्षसाः, सुग्रीवाद्या वानराश्च सर्वेऽपि राजानः सम्भूय दशग्रीवाङ्गसंस्कारं चक्रुः । सद्यस्कगोशीर्षचन्दनैः कर्पूरागरादिसुगन्धधूपसंमिश्रैर्ज्वालितानलैः पद्मोऽपि

रावणाङ्गसंस्कारं चक्रे । कृत्वा सर्वेऽपि पद्मसरसि गत्वा स्नानं कृत्वा कुम्भकर्णविभीषणाद्या भ्रातृपुत्राः साश्रुनयना दशमौलये जलाञ्जलिं प्रददुः । यतः—

कुङ्कुमवन्नी देह परजाली पाछुं वल्युं । फिटकारी मा सनेह जलपीसी छाडुलीऊ ॥६३॥

तित्थयरा गणहारी सुरवइणो चक्की केसवा रामा । अवहरिआ हयविहिणा अवर जीवाण का वत्ता ॥६४॥

रामः कुम्भकर्णादीन्प्रतिबोध्य सुधामधुरया गिरैवमुवाच—भो कुम्भकर्णेन्द्रजिन्मेघवाहनाद्याः ! सर्वेऽपि शृण्वन्तु—युष्मल्लक्ष्म्या अस्माकं कृत्यं नास्ति । पूर्ववत्स्वस्वराज्यानि कुरुध्वम् । हे वीराः ! युष्माकं क्षेममस्तु । अथ काचिद्भीतिर्न कार्या । ते कुम्भकर्णाद्या युगपच्छोकविस्मयौ बिभ्राणा गद्गदाक्षरमेवं जगदुः । यथा—

नार्थो राज्येन नः कश्चित्प्राज्येनापि महाभुज ! । ग्रहीष्यामः परिव्रज्यां मोक्षसाम्राज्यसाधनीम् ॥६५॥

अस्मिन्समये कुसुमायुधोद्यानेऽप्रमेयबलो नाम महामुनिश्चतुर्ज्ञानी समाययौ । तत्र वने तस्मिन्नेव रात्रौ तस्य महामुनेरुज्ज्वलं केवलज्ञानमुत्पेदे । समागता देवाः, केवलिमहिमानं चक्रुः । प्रभातसमये रामसौमित्रिविभीषणकुम्भकर्णसुग्रीवेन्द्रजिन्मेघवाहनमन्दोदरीप्रमुखा देशनां शृण्वन्ति । सुवर्णपङ्कजासीनो महामुनिरप्रमेयबलकेवली धर्मदेशनां चक्रुः । यथा—

संसारे नत्थि सुहं जम्मजरामरणरोगसोगेहिं । तह विहु मित्थंधजिआ न कुणइ जिणीन्दवर धम्मं ॥६६॥

माइंदजालसरीसं विज्जुचमक्कारसच्छहं सव्वं । सामन्नं खणदिट्ठं खणनट्ठं कोत्थ पडिबन्धो ॥६७॥

को कस्सइत्थसयणो को व परो भवसमुद्दभवणम्मि । मच्छुव्व भमंभि जीआ मिलन्ति पुण जंति अइदूरं ॥

जम्मे जम्मे सयणावलीओ मुक्काओ जाउ जीवेण। तावु सव्वागासे संगहिआओ न मायन्ति ॥६९॥
जीवेण भवे भवे मेल्लिआइं देहाइं जाइं संसारे। ताणं न सागरेहिं किरई सव्वा अणंतेहिं ॥७०॥
छायामिसेण कालो सयल जीआण छलगवेसंतो। पासं कहवि न मुंचई ता धम्मे उज्जमं कुणह ॥७१॥
इत्यादि देशनां श्रुत्वेन्द्रजिन्मेघवाहनौ। परमवैराग्यमापन्नौ पप्रच्छ च भवान्निजान् ॥७२॥

स अप्रमेयबलो नाम केवली तयोः पूर्वभवानाह। यथा–इह भारते क्षेत्रे कौशाम्बी नगर्यस्ति। तस्यां नगर्यां निःस्वौ द्वौ बान्धवौ, प्रथमपश्चिमनामानावभूताम्। तावन्यदा गुर्वन्तिके गतौ। तत्र गुर्वन्तिके धर्मं श्रुत्वा व्रतं जगृहतुः। कथंभूतौ तौ? शान्तकषायौ जितेन्द्रियावेवंविधौ तौ पृथिव्यां कर्मक्षयार्थं विजहतुः। अन्येद्युस्तौ भ्रातरौ मह्यां विहरन्तौ कौशाम्ब्यां गतौ। तत्र पत्न्या सह क्रीडन्तं नन्दीघोषं नृपं दृष्ट्वा पश्चिमः साधुर्निदानमकरोत्। यदि मम अस्य तपसः फलं भवति तदाऽनयो राजराज्ञ्योः पुत्रो भूयासम्। साधुना निवार्यमाणोऽपि निदानमकरोत्। ततो मृत्वा तयो राजराज्ञ्योः पुत्रो जातो रतिवर्धननामा क्रमेण वर्धमानः पित्रा परिणायितो राज्ये स्थापितश्च। स्त्रिया समं वैषयिकं सुखमनुबभूव। पितेव रेमे विविधरमणीभिः समावृतः।

मृत्वा प्रथमसाधुस्तु निर्निदानतपोवशात्। बभूव पञ्चमे कल्पे त्रिदशः परमर्धिकः ॥७३॥
सोऽवधेर्भ्रातरं ज्ञात्वा तत्रोत्पन्नं महीपतिम्। तं बोधयितुमभ्यागान्मुनिरूपधरः सुरः ॥७४॥

साधुरूपेण पूर्वभवभ्राता सुर आगत्य रतिवर्धनं राजानं पूर्वभवभ्रातरं प्रत्यवदत्–भो राजन्! आवां पूर्वभवे भ्रातरावभूताम्। प्रथमपश्चिमनामानौ। द्वाभ्यां दीक्षा गृहीता। त्वया निदानं कृतं तेन त्वं राजा जातः। मया संयमः पालितो निदानरहितस्तेनाहं

ब्रह्मदेवलोके सुरो जातस्तपसः प्रभावात् । तद्वचः श्रुत्वा जातिस्मरणज्ञानमुत्पन्नम् । तेन ज्ञानेन पूर्वभवो दृष्टः । वैराग्याद्दीक्षां लात्वा कतिचिद्वर्षाणि संयमं प्रपाल्यान्ते समाधिना मृत्वा सोऽपि ब्रह्मदेवलोके गतः । तयोर्देवयोः परस्परं प्रीतिर्जाता नेत्रयोरिव परम-प्रीतिर्वर्धिता । अत्र दृष्टान्तमाह—यथा सुवचनेन मैत्रीवर्धते, इन्दुदर्शनेन समुद्रः, शृङ्गारेण रागः, विनयेन गुणः, दानेन कीर्तिः, उद्यमेन श्रीः, सत्येन धर्मः, पालनेनोद्यानम् , अभ्यासेन विद्या, न्यायेन राज्यम् , औचित्येन महत्त्वम् , औदार्येण प्रभुत्वम् , क्षमया तपः, पूर्ववायुना जलदः, वृष्टिभिर्धान्यानि, घृताहुत्या वह्निः, भोजनेन शरीरम् , वर्षाकालेन नदी, लाभेन लोभः, प्रियगानेन कर्णः, पुत्रदर्शनेन हर्षः, मित्रदर्शनेनाह्लादः, जिनगुरुदर्शनेन पुण्यं वर्धत इति सर्वत्र सम्बध्यते । तथा तयोर्देवतयोः प्रीतिर्वर्धते । ततोऽपि पञ्चमदेवलोकाच्च्युत्वा महाविदेहे विबुद्धनगरे युवां श्रेष्ठकुले भ्रातरावभूताम् । तत्रापि सद्गुरुसमीपे धर्मं श्रुत्वा प्रव्रज्यां गृहीत्वाऽच्युते द्वादशे कल्पे सुरावभूताम् । ततोऽपि च्युत्वा सम्प्रति रावणपुत्रौ जाताविन्द्रजिन्मेघवाहननामानौ चन्द्रसूर्याविवापरौ । रतिवर्धनभवे या तव मातेन्दुमुखी नाम्नाऽभूत् , सा भवं भ्रान्त्वा तपांसि तप्त्वा क्रमेणेह भवेऽप्येषा मन्दोदरी तव माता जाता । इति साधूक्तं पूर्वभवचरित्रं श्रुत्वा वैराग्यमापन्ना कुम्भकर्णेन्द्रजिन्मेघवाहनाद्या अन्येऽपि रावणपुत्रा मित्राश्च मन्दोदर्यादयो राज्यस्तदैव साधुसमीपे व्रतं जगृहीरे । इतीन्द्रजिन्मेघवाहनमन्दोदरीपूर्वभवकथानकम् ॥

ततो रामः सलक्ष्मणः सुग्रीवभामण्डलप्रभृतिविद्याधरैः परिवृतो द्वारपालेनेव विभीषणेन दर्शितमार्गो विमानारूढो विद्याधरीभिः कृतमङ्गलो महत्या ऋध्यैरावणारूढ इन्द्रोऽमरावतीमिव शकुनैः प्रेरितो लङ्कां नगरीं प्राविशत् । गिरेः पुष्पगिरेर्मूर्धनि देवरमणोद्याने रामो गत्वा हनुमतोक्तां सीतां ददर्श तत्क्षणादेव श्रीरामः सीतामुत्थाप्य निजोत्संगे धारयामास । इयं महासती सीतेत्याकाशवाण्य-

भूत्। कथंभूता वाणी ? देवैर्विद्याधरैः सिद्धैर्मुनिभिः कृता। सुमित्रापुत्रो लक्ष्मणः सीतापादौ प्रणनाम। सीताऽपि लक्ष्मणाय चिरं नन्द चिरं जीवेत्याद्याशिषं ददौ। भामण्डलोऽपि सीतां नत्वा पुरो निषण्णः। सुग्रीवाद्या अपि रामसेवकाः सीतां नत्वा सीतया दत्ताशिषः पुरो निषण्णाः। एवं विभीषणोऽप्येवं हनुमानप्येवमङ्गदोऽप्येवमन्ये सीतां नत्वा सीतया दत्ताशिषः पुरो निषण्णाः। अथ रामः सीतासहितो भुवनालङ्कारगजेन्द्रं समारूढो लक्ष्मणसुग्रीवाद्यैः परिवृतो विभीषणदर्शितमार्गो रावणागारमाजगाम।

तदन्तश्च मणिस्तम्भसहस्राङ्कं जिनेशितुः। चैत्यं श्रीशान्तिनाथस्य प्रविवेश विवन्दिषुः॥७५॥

विभीषणार्पितैस्तत्र कुसुमाद्यैरुपस्करैः। शान्तिमानर्च्य काकुत्स्थः सीतासौमित्रिसंयुतः॥७६॥

ततो रामो विभीषणाऽभ्यर्थितो लक्ष्मणसीतासुग्रीवाद्यैः परिवृतो विभीषणगृहं ययौ। तत्राऽपि देवार्चनं कृत्वा सपरिवारः स्नानभोजनं विधाय देवदूष्यवाससी परिधाय सिंहासने निषण्णः। तं रामं कृताञ्जलिर्विभीषणो बभाषे-भो श्रीरामचन्द्र! रावणगृहं विलोकय। एष स्वर्णरत्नादिकोशः, एषा गजशाला, एतदन्तः पुरमेवं सर्वं दर्शितम्। तथा स्वामिन्नेष राक्षसद्वीपोऽनेकद्वीपैः परिवृतः, स्वामिन्नस्मिन्रावणसिंहासन उपविश, यथा ते राज्याभिषेकं कुर्महे भवदाज्ञया। राज्यग्रहणेन पुरीं लङ्कां पवित्रय। मामनुगृहाण। अहं तव सेवकोऽस्मि। तव सेवांकरिष्ये। राम उवाच-भो विभीषण! मया पुरा लङ्काराज्यं तव दत्तं, तत्त्वं किं व्यस्मार्षीः? हे महात्मन्! भक्तिमोहितस्य ते सर्वं विस्मृतम्। मया तुभ्यं राज्यं दत्तमस्ति। अथ किं पुनः पुनः कथितेन? लङ्काराज्यं निश्चितं मया तुभ्यं दत्तमिति कथयित्वा तदैव हि रामो विभीषणं लङ्काराज्येऽभ्यषिंचत्। कथंभूतो रामः, प्रतिज्ञातार्थपालकः। अथ रामो लक्ष्मणादिभिः परिवृतो रावणगृहे ययौ सुधर्मसभायामिन्द्र इव। तत्र लङ्कायां श्रीरामलक्ष्मणौ पूर्वदत्ता विद्याधरराक्षसवानरकन्यकाः

श्रीराम उपयेमे। रामाज्ञया लक्ष्मणोऽप्युपयेमे गीतमङ्गलपूर्वकम्।

भोगांस्तत्रोपभुंजानौ निर्विघ्नं रामलक्ष्मणौ। सुग्रीवाद्यैः सेव्यमानौ षडब्दीमतिनिन्यतुः ॥७६॥

अत्रान्तरे विन्ध्यस्थल्यामिन्द्रजिन्मेघवाहननामानौ साधू सिद्धिं प्रापतुः। तन्नाम्ना तीर्थं प्रवृत्तम्। नर्मदानद्यां कुम्भकर्णो मुनिः सिद्धिमियाय, तद्दिनादारभ्य तत्तीर्थं प्रवृत्तम्।

इतश्चायोध्यायां रामलक्ष्मणमातरौ रामलक्ष्मणवार्तामप्यजानन्त्यौ भृशं दुःस्थिते तस्थतुः। तदा धातकीखण्डान्नारदोऽयोध्यामागतो गगनमार्गेण। अपराजितासुमित्राभ्यामभ्युत्थानादिना मानितस्ततः पूजितः स्तुतश्च संतुष्टेन नारदेन पृष्टम्–युवां कुतो विमनस्के? किं बाधते युवयोः, किं दुःखं वर्तते। तावताऽपराजितोवाच–पुत्रौ मे रामलक्ष्मणौ। पित्राज्ञया स्नूषया सीतया सहितौ वनं यातौ। सीतापहारादिना लङ्कायां जग्मतुः। रावणेन लक्ष्मणोऽमोघविजयाशक्त्या भिन्नस्तच्छल्यकर्षणाय विशल्याग्रहणाऽर्थं हनुमानागतः, स हनुमान् सहस्रकन्यासहितां विशल्यां गृहीत्वा गतः पश्चान्न ज्ञायते किं जातमिति चिन्ताविमनस्ककारणं, न ज्ञायते वत्सो जीवति वा न वेत्यभिधायापराजिता पुत्रगुणान्स्मृत्वा हा वत्स! इति करुणस्वरं रुरोद, सुमित्रापि तथैव। ततो नारदोऽप्योचत्–हे अपराजिते! हे सुमित्रे! युवां सुस्थिते तिष्ठतम्। अहं रामलक्ष्मणौ स्तोकदिनमध्य इहाऽऽनेष्यामि। युवाभ्यां काचिच्चिन्ता न विधेया। तयोर्द्वयोरेवं प्रतिश्रुत्य नारदो गगनगामिन्या विद्यया गगनमार्गे गच्छञ्जनश्रुत्या रामलक्ष्मणौ लङ्कायां श्रुत्वा तत्राऽऽगात्। आगच्छन्तं नारदं दृष्ट्वा रामलक्ष्मणाभ्यामभ्युत्थानादिना सत्कृतो नारदो रामेण पृष्टः–हे मुने! त्वं किमर्थमत्रागात्? रामेण पृष्टो नारद इत्यवोचत्–भो रामलक्ष्मणौ! तव मातरौ दुःखसागरे निमग्ने वर्तेते। एकस्मिन्दिने मया तत्र गतेन सर्वं दृष्टम्। अतो युवामाकारणाय

देशादेशं भ्रमन्जनश्रुत्या युवामत्र श्रुत्वाऽहमनागतः। अथ यूयं चलध्वम् मातृमिलनाय, विलम्बो न विधेयः। रामेणोक्तं विभीषणं प्रति। भो विभीषण! तव भक्त्या मोहिता वयम्। षडब्दी षड्दिनवद्गता, परं न ज्ञाता। त्वद्भक्त्या मातृणामपि दुःखं विस्मृतम्। रामेणोक्तम्–भो लक्ष्मण! अयोध्यायां गम्यते। लक्ष्मणेनोक्तम्–भो बान्धव! तत्र गत्वा किं करिष्यते? अत्रैव स्थीयते। रामेणोक्तम्–

यदि स्वर्णमयी लङ्का न मे लक्ष्मण रोचते। पितृपर्यागताऽयोध्या निर्धनाऽपि सुखावहा ॥७७॥

अतो गम्यते। तत्र गते मातृणां सुखं भविष्यति। अस्माद्दुःखान्नूनमावयोर्मातरौ विपद्येते। हे लक्ष्मण! अतः स्वराज्ये गम्यते। लक्ष्मणेनोक्तमेवं भवतु। पुना रामेण विभीषणं प्रत्युक्तम्–भो विभीषण! पुष्पकं विमानं सज्जीयताम्। यथा पुष्पकमारुह्य स्वनगर्यामयोध्यायां गम्यते। विभीषणेनोक्तम्–स्वामिन्! षोडश दिनानि यावदत्र तिष्ठ। यथा स्वैः शिल्पिभी रम्यामयोध्यां करोमि। रामेणोक्तमेवमस्तु। ततो विभीषणोऽयोध्यां गत्वा विद्याधरशिल्पिभिः षोडशभिर्दिनैरयोध्यां स्वर्गपुरीसन्निभां व्यधात्। तदा रामेण सत्कृत्य विसृष्टो नारदोऽयोध्यामागत्य तद्वृत्तान्तं राममातृणां पुत्रागमनादिसम्बन्धं निवेद्य स्वस्थानं गतः। नारदाख्यातं श्रुत्वा हर्षिताऽपराजिता सुमित्रा च। अथाह्नि षोडशे विभीषणेन सज्जितं पुष्पकं विमानम्। तत्र विमाने रामः स्वान्तःपुरपरिवृतस्तथैव लक्ष्मणः स्वान्तपुरपरिवृत उभावपि पालकारूढौ शक्रेशानाविव शुशुभाते। एवं विभीषणो राक्षसैः परिवृतः सुग्रीवोऽपि वानरैः परिवृतो भामण्डलोऽपि विद्याधरैः परिवृत एवं हनुमानपि एवं सर्वेऽपि विद्याधराः स्वैः स्वैर्विमानैः स्वैः स्वैर्वाहनैरुपविष्टाः श्रीराममनुययुः। देवैः परिवृताविन्द्रा इव रेजाते। द्वादशतूर्यनिर्घोषैर्निःस्वाननिनादैर्घण्टानां क्वणितैर्दिशोनादैर्बधिरयन् सहानुजः श्रीरामोऽयोध्याभिमुख चचाल। अथ राममायान्तं श्रुत्वा दूरादपि निरीक्ष्य भरतोऽपि शत्रुघ्नेन सहितः उभावपि कुञ्जरारूढौ स्वसैन्यपरिवृतौ

श्रीरामसन्मुखमभ्यागाताम्। श्रीरामोऽपि भरतं शत्रुघ्नसहितं सन्मुखमागच्छन्तं दृष्ट्वा पुष्पकविमानादुत्तेरतु रामलक्ष्मणौ। तथा भरतशत्रुघ्नावपि गजादवतेरतुः। सोत्कण्ठौ रामलक्ष्मणौ सोत्कण्ठावपि भरतशत्रुघ्नौ परस्परं सम्मिलितौ। भरतः साश्रुलोचनो रामपादेऽपतत्। रामोऽपि भरतं बाहुभ्यां धृत्वा कण्ठाश्लेषमालिङ्ग्य मूर्धनि चुचुम्ब। वारंवारं कुशलं चापृच्छत्। शत्रुघ्नमपि पादान्ते लुठन्तं श्रीराम उत्थाप्य परिमृज्य तथैवालिलिङ्ग। ततो भरतशत्रुघ्नौ नमन्तौ लक्ष्मणोऽपि प्रसारितभुजः ससंभ्रमस्तथैवालिलिङ्ग। ततो रामस्त्रिभिरनुजैर्भ्रातृभिः सार्धं पुनः पुष्पकं विमानमारुह्यायोध्यां प्राविशत्। यथा—

तूर्येषु व्योम्नि भूमौ च वाद्यमानेष्वथोन्मुदौ। अयोध्यां रामसौमित्री निजां प्राविशतां पुरीम् ॥७८॥
सोत्कण्ठैरुन्मुखैः पौरैर्मयूरैरिव वारिदौ। निर्निमेषैः प्रेक्ष्यमाणौ स्तूयमानौ च निर्भरम् ॥७९॥
अर्कवद्दीयमानार्घ्यौ स्थाने स्थाने पुरीजनैः। स्वं प्रासादं प्रसन्नास्यौ जग्मतू रामलक्ष्मणौ ॥८०॥

अनया ऋद्ध्या श्रीरामो लक्ष्मणसीतासहितः पुष्पकविमानादुत्तीर्य श्रीऋषभप्रासादे गत्वा श्रीजिनान्नत्वा ततो मातृसदनं जगाम। श्रीरामः पूर्वं स्वां मातरमपराजितां नत्वा पश्चादपरं मातृवर्गं नमश्चक्रे, कथं भूतो रामः, ससौमित्रिः। अथ सीताविशल्याद्या वध्वोऽपराजितां प्रणेमुः। ततः श्वश्रूरन्याश्च प्रणेमुः। प्रणमन्त्यो वधूर्दृष्ट्वा ताश्च श्वश्रूरिमामाशिषं ददुः। हे वध्वो! यूयमस्मद्वद्वीरप्रसविन्यो भूयास्तास्मदाशिषा। अथापराजिता राममाता लक्ष्मणं भूयो भूयः पाणिना स्पृशन्ती मूर्धनि चुम्बन्त्येवमब्रवीत्–हे वत्स! अद्य त्वं दिष्ट्या दृष्टोऽसि। अथवा हे वत्स! अधुना त्वं पुनर्जातोऽसि। हे वत्स! त्वं धन्योऽसि। यद्विदेशे गमनं कृत्वा विजयीभूयागतोसि। हे वत्स! त्वया तानि तानि बहूनि कष्टानि सोढानि। यानि यान्यस्माभिर्वक्तुमपि नो शक्यन्ते। तथा हे वत्स! तवैव परिचर्यया

सीतासहितो रामः सुखीनो जातः । अथ लक्ष्मणोऽप्युवाच–हे मातः! श्रीरामेणाहं तातेव लालितः । त्वयेव सीतादेव्या वनेऽहं सुखमास्थाम् । हे मातः! युष्मदाशीर्भिर्वैरसागरं लङ्घित्वा सपरिवारोऽपि क्षेमेणाऽऽर्यसहितोऽहमिहागतः। इत्यादि वार्तां मातृभिः सार्धं कुर्वाणौ रामलक्ष्मणौ सुखेनास्ताम् । तथा भरतोऽपि श्रीरामलक्ष्मणपादानां भक्तिमकरोत् ।

एकस्मिन्दिने सुखासीनं श्रीरामचन्द्रं प्रति भरतोऽवदत्–हे बान्धव! त्वया न्यासीकृतं राज्यं स्वं गृहाण । एतावन्ति दिनानि मया तवोपानहौ सिंहासने निधाय तवपादवत्सेविते । त्वया न्यासीकृतं राज्यं मया रक्षितम् । अथ स्वं राज्यं गृहाण । अहं तवाज्ञया प्रव्रजिष्यामि । अहं तदैव तातपादैः सह माव्रजिष्यम्पर बलात्कारेण राज्यंदत्त्वारक्षितः । अथाहं त्वदाज्ञया प्रव्रज्यां ग्रहीष्ये । तावता समीपस्थाऽपराजिता राममातोचे–यथा—

रामवन्न पितुः पुत्रान्भृत्या हनुमतःसमाः । जायन्ते भ्रातरः सर्वे न भ्राता भरतोपमः ॥८१॥

तावच्छ्रीरामो भरतं बभाषे–भो बान्धव! त्वं किं भाषसे राज्यं कुरु। त्वयाऽऽहूता वयमत्रागताः । पुनस्त्वं राज्यं त्यजन्भूयोऽस्माकं विरहव्यथां किं दत्से । वत्स! तत्तिष्ठ पूर्ववन्ममाज्ञां कुरु । इत्याग्रहपरं रामं ज्ञात्वा नत्वा च यावदचलत्तावत्सौमित्रिणोत्थाय पाणिनाऽधारि । इतश्च भरतं व्रताय यान्तं कृतनिश्चयं ज्ञात्वा सीताविशल्याद्या रामलक्ष्मणपत्न्यो वैराग्यं विस्मारयितुकामा भरतस्य जलक्रीडाविनोदार्थमर्थनांचक्रिरे। तासामाग्रहेण भरतः सान्तःपुरो विरक्तोऽपि मुहूर्तमेकं क्रीडासरसि चिक्रीड । जलक्रीडां कृत्वा भरतः क्रीडासरस्तीरे यावदस्थाद् राजहंसवत् तावत्स्तम्भमुन्मूल्य भुवनालङ्कारो नाम हस्ती तत्राऽऽययौ । मदान्धोऽपि हस्ती भरतं दृष्ट्वाऽमदोऽभूत् । भरतोऽपि भुवनालङ्कारं गजेन्द्रं दृष्ट्वा परमां मुदमाप । तदा रामसौमित्री उपद्रवकारिणं गजेन्द्रं ज्ञात्वा सामन्तै-

र्यन्धयामासतुः। रामाज्ञया हस्तिपकैः सामन्तैश्च सम्भूय भुवनालङ्कारो गजेन्द्र आलानस्तम्भे बद्धः।

इतश्चायोध्यायां देशभूषणकुलभूषणनामानौ मुनी आगतौ। उद्याने समवसृतौ श्रुत्वा रामलक्ष्मणाद्या भरतः अपराजिता सुमित्राद्या मातरः सपरिच्छदा वन्दितुं प्रययुः। तौ साधू वन्दित्वा देशनां श्रुत्वा श्रीरामो मुनिं पप्रच्छ। भो मुने! भुवनालङ्कारो नाम मम करी भरतेक्षणात् कथममदोऽजनि? अथ देशभूषणो नाम केवली मुनिः श्रीरामेण पृष्टो भरतभुवनालङ्कारगजयोः पूर्वभवानाह। यथा–भो रामचन्द्र! श्रूयताम्। पूर्वं श्रीऋषभदेवेन सार्धं चत्वारः सहस्राणि राजानः प्राव्रजन्। ते तु स्वामिनि ऋषभदेवेऽनाहारे कृतमौने विहारिणि ते राजर्षयो निर्विण्णा जज्ञिरे। आहारमलभमानास्ते सर्वेऽपि वनमध्ये तापसा जाताः। तेषु चतुःसहस्रतापसेषु प्रह्लादसुप्रभतापसयो द्वौ पुत्रौ चन्द्रोदयसुरोदयनामानौ। तयोर्मध्ये चन्द्रोदयो भवं भ्रान्त्वा गजपुरे नगरे हरिमते राज्यां चन्द्रलेखायां भार्यायां कुलंकरो नाम्ना पुत्रो जातः। सुरोदयोऽपि तत्रैव नगरे गजपुरे विप्रकुले विश्वभूतेर्द्विजन्मनोऽग्निकुण्डायां भार्यायां श्रुतिरतिनाम्ना पुत्रो जातः। क्रमेण कुलङ्करो राजा जातः। स कुलङ्करो राजा एकस्मिन्दिने तापसाश्रमं गतः। तत्रावधिज्ञानिनाऽभिनन्दनमुनिना काष्ठमध्ये दह्यमानः पन्नगोऽवधिज्ञानेन दृष्टः। तेन ज्ञानिना तापसाय प्रोक्तम्–भो तापस! तव पञ्चाग्निसाधना जीवदयां विना वृथैव। तद्वचो राज्ञा श्रुतं काष्ठं विदार्य पन्नगो निष्कासितः। मुनिज्ञानेन राजा विस्मितो वैराग्यात्कुलंकरो राजा दीक्षासज्जोऽभूत्। तावता पूर्वभवमित्रेण विप्रेण श्रुतिरतिनाम्ना पुरोहितेन निषिद्धः। स्वामिन्! वृद्धावस्थायां दीक्षा गृह्यते। इत्याद्युक्त्वा निवारितो राजाऽपि तद्गिरा भग्नदीक्षोत्साहोऽभवत्। क्रमेण राज्यं करोति। एवं कुर्वाणस्य राज्ञः कालो याति। एकस्मिन्दिने कुलङ्कर-राजस्य राज्ञी श्रीदामा श्रुतिरतिपुरोधसा सह सदासक्ताऽऽसीत् तत्स्वरूपं किंचिद्राज्ञा ज्ञातम्। पुरोधसाऽपि चिन्तितम्। अहमन्यायं

कुर्वन्राज्ञा ज्ञातस्तर्हि न ज्ञायते राजा मां किं करिष्यति। अतो राजानं मारयामि। पुरोहितेनैवं विचिन्त्य श्रीदामा राज्ञी भाषिता। आवयोः स्वरूपं राज्ञा ज्ञातम्। अतो यावद्राजाऽऽवां न हन्ति तावत्त्वं राज्ञो विषं देहि। तत्पुरोहितवचनं श्रुत्वा तया पापिन्या श्रीदामाराज्ञ्या विषं दत्तम्। तेन विषेण कुलङ्करो राजा मृतः। धिग्धिक्स्त्रीणां निर्दयत्वमहो असमीक्षितकारित्वम्। यतः—

न विश्वसेत्कृष्णसर्पस्य खड्गपाणेर्न विश्वसेत्। नायिकाचलचित्तायाः स्त्रीचरित्रं न विश्वसेत् ॥८२॥

कवयः किं न पश्यन्ति किं न जानन्ति योगिनः। मद्यपाः किं न जल्पन्ति किं न कुर्वन्ति योषितः ॥८३॥

ततः क्रमेण श्रुतिरतिपुरोहितोऽपि तस्मिन्नेव दिने विषपातेन मृतः। उभावप्येकस्मिन्दिने मृत्वा नरकं गतौ। आयुःपर्यन्त उभावपि नरकादुद्धृत्य चिरं भवं भ्रेमतुः। तिर्यग्योनिषु, नरकेषु पुनस्तथैव। एवं बहून्भवान्कृत्वा नानायोनिषु भ्रान्त्वाऽकामनिर्जरया कर्माणि क्षिप्त्वा यत्रोत्पन्नौ तदाह। राजगृहे नगरे कपिलनाम्नो विप्रस्य सावित्र्यां पत्न्यां द्वावपि पुत्रौ जातौ, युग्मिनौ विनोदरमणनामानौ। एकस्मिन्समये रमणो वेदमध्येतुं देशान्तरं गतः। स वेदशास्त्रं पठित्वा पुना राजगृहीनगर्या बहिरेकस्मिन्यक्षमन्दिरे सुप्तः। प्रभाते स्वगृहं यास्यामि। सम्प्रत्यकालो जात इति ध्यात्वा सुखेन सुप्तः। तदा विनोदभार्या शाखा नाम तन्नगरवासिदत्तेन ब्राह्मणेन समं कृतसंकेतैकाकिनी निशायां तस्मिन्यक्षमन्दिरे तत्राऽऽगात्। तदनु विनोदोऽपि तत्राऽऽगात्। तत्र विनोदो विनोदेन पश्यति। यतः—पश्याम्येषा किं करोति तावत्तया किं कृतम्? दत्तबुद्ध्या रमण उत्थापितः। रमणोऽप्युत्थितो तया सह रेमे विनोदेन तत्पतिना खड्गेन रमणो हतः शाखया रमणच्छुर्या विनोदो निजपतिर्मारितः। ततो द्वावपि मृत्वा नरके गतौ। चिरकालं संसारे भ्रान्त्वा यत्रोत्पन्नौ तदाह—विनोदो राजगृहनगरे व्यवहारिसुतो धननामा जातः। रमणोऽपि बहून्भवान्भ्रान्त्वा धनपत्नी

लक्ष्मीर्नाम तस्याः कुक्षौ पुत्रो जातो भूषणनामा। उभावपि पितृपुत्रत्वेनोत्पन्नौ क्रमेण वर्धमानौ भूषणो धनेन पित्रा द्वात्रिंशदिभ्यकन्यका एकस्मिन्दिने परिणायितः। ताभिः पत्नीभिः समं क्रीडन्स्वगृहमूर्धनि सुखमनुभवन्नास्ते। तत्र निशायां तुर्ये यामे श्रीधरस्य महामुनेः केवलज्ञानमुत्पेदे। सुरैः केवलिमहिमा विदधे। तदा भूषणनामा धनपुत्रो जातधर्मपरिणामो वेश्मत उत्तीर्य तं मुनिं केवलिनं वन्दितुमचालीत्। मार्गे गच्छन्सर्पेण दष्टो मृत्वा देवो जातः। ततश्च्युत्वाऽत्र जम्बूद्वीपे पूर्वमहाविदेहे रत्नपुरे नगरेऽचलनामा चक्री, हरिणनाम्नी राज्ञी, तस्याः कुक्षौ सूनुत्वेनोपपद्यत। क्रमेण जातो नाम दत्तम् प्रियदर्शन इति। क्रमेण वृद्धिं प्राप्तः। परं धर्मतत्परः प्रव्रजितुकामः पित्राऽचलचक्रिणा त्रीणि कन्यासहस्राणि परिणायितः। ताभिः समं वैषयिकं सुखं भेजे। परं गृहवासेऽपि तपसि लीनोऽनेकानि तपांसि विदधाति। यथा–एकावली–कनकावली–श्रेणि–प्रतर–घन–मुक्तावलि–वर्धमानेत्याद्यनेकतपांसि तप्यमानस्य चतुःषष्ठिसहस्राणि वर्षाणि जातानि। श्रावकव्रतस्थोऽपि धर्मं समाराध्य मृत्वा ब्रह्मलोके सुरोऽभवत्। धनोऽपि मृत्वा संसारं भ्रान्त्वा पोतनपुरे नगरे शकुनिनाम्नो विप्रस्याग्निमुखास्त्री, तस्याः कुक्षौ मृदुमतिनामा पुत्रो जातः। स पित्रा दुर्विनीतत्वात् गृहान्निर्वासितः। क्रमेण धूर्तो जातः। द्यूतक्रीडया क्रीडन्केनाऽपि न जीयते स द्यूतेन रममाणो भूयिष्ठं धनमार्जयत्। वसन्तसेनया वेश्यया सार्धं भोगान्भुंक्त्वा परं मायां करोति। अन्ते श्रामण्यं गृहीत्वा सोऽपि ब्रह्मलोके सुरोऽभवत्। च्युत्वा पूर्वभवे मायादोषतो वैताढ्यपर्वते भुवनालङ्कारनामाऽयं श्वेतभद्रजातिःकुञ्जरो जातः।

प्रियदर्शनजीवोऽपि ब्रह्मलोकात्परिच्युतः। बभूव भरतो भ्राता भवतोऽयं महाभुजः ॥८४॥

भरतालोकनादस्य जातिस्मृतिरुत्पन्ना। तेन ज्ञानेन गतमदो जज्ञे। इति पूर्वभवान् श्रुत्वा भरतोऽप्यधिकं विरक्तो जातः। राज-

सहस्रेण सहितो भरतो व्रतं गृहीत्वा संयमं प्रपाल्योत्पन्नकेवलो मोक्षमियाय । तेऽपि सहस्रराजानश्चिरं व्रतं पालयित्वा नानालब्धिमन्तोभूत्वा केवलज्ञानं लब्ध्वा शिवपदमासदन् । भुवनालङ्कारगजोऽपि संस्मृतजातिस्मरणो वैराग्याद्विविधं तपो विधाय प्रपन्नानशनो मृत्वा पुनर्ब्रह्मलोके सुरोऽभवत् ।

व्रतं भरतमाताऽपि कैकेयी समुपाददे । पालयित्वा निष्कलङ्कं प्रपेदे पदमव्ययम् ॥८५॥

भरते प्रव्रजिते भूचरखेचरराजानो भक्तितोऽभिषेकाय राममर्थयांचक्रिरे। रामेणोक्तम्–अयं मद्बान्धवो लक्ष्मणो वासुदेवो वासुदेवराज्याभिषेकेऽभिषिच्यताम्। ते राजानो लक्ष्मणं वासुदेवराज्येऽभ्यषिञ्चन्। तथा बलदेवपदे रामभद्रमभ्यषिञ्चन् । एवं द्वावपि राज्यं कुर्वाणौ सुखेनास्ताम्। राज्यप्रदानसमये आकाशे देवैराघोषणा चक्रे। जयेतामम् अष्टमबलदेववासुदेवौ बलवन्तौ रामलक्ष्मणौ। श्रीरामो राक्षसद्वीपं क्रमागतं विभीषणायादात्। तथा सुग्रीवाय कपिद्वीपमदात् । तथा श्रीपुरं हनुमतेऽदात् । विराधाय पाताललङ्कामदात् । ऋक्षपुरं पुनर्नीलायादात् । प्रतिसूर्याय हनुपुरमदात् । सुरसङ्गितपुरं रत्नजटिले विद्याधरेऽदात् । भामण्डलाय वैताढ्ये रथनूपुरचक्रवालनगरमदात् । एवं सर्वेषां राज्ञां यथायोग्यं राज्यानि दत्त्वा शत्रुघ्नबान्धवं प्रत्यूचे–भो बान्धव शत्रुघ्न ! यस्तुभ्यं रोचते तं देशमुररीकुरु। शत्रुघ्नेन मधुरा याचिता । मह्यं मधुरां देहि । रामो जगाद–हे वत्स ! सा मधुरा दुःसाध्या वर्तते तत्र मधो राज्ञः शूलं चमरेन्द्रेण पुरार्पितं तच्छूलं योजनसहस्रं गत्वा दूरात्परबलं सर्वं निहत्य पुना मधुराजस्य करेऽभ्येति। अतः सा मधुरा दुःसाध्या वर्तते । शत्रुघ्नो रामं जगाद–हे श्रीराम ! स्वयमेवाहं मधोः प्रतीकारं करिष्यामि । रामेणोक्तम्–भो शत्रुघ्न ! मधुस्त्वया प्रमत्तोऽपशूलश्च योद्धव्यः । एवं शिक्षां दत्त्वा मधुरां च दत्त्वा शत्रुघ्नो विसृष्टः। रामेण कृतान्तवदनः सेनानीः शत्रुघ्नेन सह प्रेषितः, लक्ष्मणोऽप्य-

भूत् । मधुदेहस्योपरिष्टात्तद्विमानवासिसुराः पुष्पवृष्टिं व्यधुः । मधुदेवो जयत्वित्याघोषणां सुराश्चक्रुः । तच्छूलं देवतारूपं पुनश्चमरेन्द्रान्तिके गतम् । गत्वा शूलाधिष्ठायिकेन देवेनोक्तम् मधुराट् शत्रुघ्नेन च्छलं कृत्वा मारितस्ततो मित्रमधुवधामर्षाच्चमरेन्द्रः स्वयं प्राचलच्छत्रुघ्नमारणाय वेणुदारिणा तार्क्ष्यस्वामिना पृष्टश्चमरेन्द्रः सुरः, त्वं क्व यासीति । चमरेन्द्रेणोक्तं मधुमित्रहन्तारं शत्रुघ्नं मथुरास्थितं हन्तुं यास्यामि । वेणुदारिरवदत् चमर प्रति–भो चमर ! धरणेन्द्राद्रावणेन प्राप्ता शक्तिः । साऽपि निर्जिता सौमित्रिणा पुण्यप्रकृष्टेन येन लक्ष्मणेन रावणोपि हतः । तदाग्रपत्तिमात्रो मधुः कियान् । लक्ष्मणादेशाच्छत्रुघ्नः सङ्ग्रामे मधुमवधीत् । उवाच चमरः, (स्वामिन् !) सौमित्रिणा यच्छक्तिर्जिता, तत्कन्या विशल्याप्रभावेण । सा तु साम्प्रतं परिणीता । अधुना तस्याः प्रभावो गतः । अतः शत्रुघ्नं हन्तुं यास्यामि । मम मित्रघातकं घातयिष्यामीत्युक्त्वा चमरो देवो रोषारुणलोचनो शत्रुघ्नविषयं ययौ । तत्र सर्वं लोकं सर्वं राज्यं सुस्थितं दृष्ट्वा देवेन चिन्तितम्–अहो ! मम मित्रं मधुं हत्वा सर्वे सुखमनुभवन्ति पूर्वमस्य शत्रुघ्नस्य प्रजां पीडयामि । पश्चाच्छत्रुघ्नं पीडयिष्य इति बुध्वा तेन पापिना चमरो देवः शत्रुघ्नराज्ये शत्रुघ्नप्रजासु विविधान्व्याधीन्व्यधात् । शत्रुघ्नस्य राज्ञः कुलदेवतया विज्ञापितम्–स्वमितोऽयोध्यां याहि रामलक्ष्मणसन्निधौ । यतः–एष चमरदेवस्तव देशं व्याधिना पीडयिष्यति । तत्कुलदेवतावचनं श्रुत्वा शत्रुघ्नोऽयोध्यायां रामलक्ष्मणसमीप आगात् । तत्र रामसमीपे सुखेनास्थात् । तत्र चमरस्य किमपि न चलति रामलक्ष्मणपुण्यप्रभावात् । पुण्यं सर्वत्र सौख्याय भवति । यतः—

वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा । सुप्तं प्रमत्तं विषमं स्थितं वा रक्षन्ति पुण्यानि पुराकृतानि ॥

तस्मिन्समयेऽयोध्यायां विहरन्तौ देशभूषणकुलभूषणनामानौ केवलिमुनी समागतौ । रामलक्ष्मण शत्रुघ्नास्तौ मुनी वन्दित्वा

ग्निमुखान्बाणान्दत्त्वाऽर्णवावर्तधनुः समारोप्य शत्रुघ्नं दत्त्वैवमवादीत्। अस्य धनुषो नादेन ते विजयो भविष्यति। अतस्त्वं गच्छ ते पन्थानः कुशलिनः सन्तु। इति कथयित्वा लक्ष्मणेनापि विसृष्टः शत्रुघ्नो मथुरां प्रति याति। ततः प्रतस्थे शत्रुघ्नः। अविच्छिन्नप्रयाणैर्मार्गे गच्छन् मथुरासमीपं यमुनानदीतटेऽवात्सीत्। छलेनाऽस्थात्। मधुना गर्वपर्वतेनैवं न ज्ञातं यद्वयं ममोपर्यागतः। किन्तु स्वेच्छया कुत्रचिद्याति। शत्रुघ्नो रामबान्धव एकदा मधुराजः स्वेच्छया मथुरापूर्वस्थिते कुबेरोद्याने जयन्त्या पट्टराज्ञ्या सार्धं क्रीडापरो वर्तते तच्छूलमस्त्रागारे वर्तते तस्मिन्समये पूर्वं वानरान्प्रेषितवान्। तैस्तत्स्वरूपमुक्तम् यथा—मधुनरेन्द्रो वनमध्ये जयन्त्या पट्टदेव्या समं क्रीडति, तथा शूलमस्त्रागारे वर्तते। तच्छ्रुत्वा छलज्ञः शत्रुघ्नो रात्रौ मथुरां प्राविशत्। स्वकीयबलैर्मधुं तत्रैव वनेरुरोध। शत्रुघ्नो मथुरां प्राविशन्मधुपुत्रं लवणं च रणरङ्गतत्परं जघान। पुत्रवधोदन्तं श्रुत्वा रुद्धोऽपि मधुराट् क्रुद्धो धावितः। धनुरास्फालयन्दशरथपुत्रेण सह युयुधे। कथं यथा—

अन्योन्यमस्त्रैरस्त्राणि च्छिन्दानौ तावुभावपि। शस्त्राशस्त्रि प्रचक्राते चिरं देवासुराविव ॥८६॥
धनुः समुद्रावर्तं चाग्निमुखांश्च शिलीमुखान्। सौमित्रिदत्तानस्मार्षीत् तुर्यो दशरथात्मजः ॥८७॥
तत्स्मृतोपनतं धन्वाधिज्यीकृत्याग्निपत्रिभिः। तैर्जघान मधुं वीरः शार्दूलमिव लुब्धकः ॥८८॥
तद्बाणघातविधुरो मधुरेवमचिन्तयत्। शूलं पाणौ न मेऽभ्यागान्न हतो लक्ष्मणानुजः ॥८९॥
गतं मम मुधा जन्म जिनेन्द्रो न यदर्चितः। कारितानि न चैत्यानि दत्तं पात्रेषु न मया ॥९०॥

इति चिन्तयित्वा भावचारित्रं प्रतिपद्यानशनं विधाय नमस्कारपरायणो मधुराट् मृत्वा सनत्कुमारदेवलोके महर्धिको देवोऽ-

भूत् । मधुदेहस्योपरिष्टात्तद्विमानवासिसुराः पुष्पवृष्टिं व्यधुः । मधुदेवो जयत्वित्याघोषणां सुराश्चक्रुः । तच्छूलं देवतारूपं पुनश्चमरेन्द्रान्तिके गतम् । गत्वा शूलाधिष्ठायिकेन देवेनोक्तम् मधुराद् शत्रुघ्नेन च्छलं कृत्वा मारितस्ततो मित्रमधुवधामर्षाच्चमरेन्द्रः स्वयं प्राचलच्छत्रुघ्नमारणाय वेणुदारिणा तार्क्ष्यस्वामिना पृष्टश्चमरेन्द्रः सुरः, त्वं क्व यासीति । चमरेन्द्रेणोक्तं मधुमित्रहन्तारं शत्रुघ्नं मथुरास्थितं हन्तुं यास्यामि । वेणुदारिरवदत् चमरं प्रति–भो चमर! धरणेन्द्राद्रावणेन प्राप्ता शक्तिः । साऽपि निर्जिता सौमित्रिणा पुण्यप्रकृष्टेन येन लक्ष्मणेन रावणोपि हतः । तदाग्रपत्तिमात्रो मधुः कियान् । लक्ष्मणादेशाच्छत्रुघ्नः सङ्ग्रामे मधुमवधीत् । उवाच चमरः, (स्वामिन् !) सौमित्रिणा यच्छक्तिर्जिता, तत्कन्या विशल्याप्रभावेण । सा तु साम्प्रतं परिणीता । अधुना तस्याः प्रभावो गतः । अतः शत्रुघ्नं हन्तुं यास्यामि । मम मित्रघातकं घातयिष्यामीत्युक्त्वा चमरो देवो रोषारुणलोचनो शत्रुघ्नविषयं ययौ । तत्र सर्वं लोकं सर्वं राज्यं सुस्थितं दृष्ट्वा देवेन चिन्तितम्–अहो ! मम मित्रं मधुं हत्वा सर्वे सुखमनुभवन्ति पूर्वमस्य शत्रुघ्नस्य प्रजां पीडयामि । पश्चाच्छत्रुघ्नं पीडयिष्य इति बुध्या तेन पापिना चमरो देवः शत्रुघ्नराज्ये शत्रुघ्नप्रजासु विविधान्व्याधीन्व्यधात् । शत्रुघ्नस्य राज्ञः कुलदेवतया विज्ञापितम्–त्वमितोऽयोध्यां याहि रामलक्ष्मणसन्निधौ । यतः–एष चमरदेवस्तव देशं व्याधिना पीडयिष्यति । तत्कुलदेवतावचनं श्रुत्वा शत्रुघ्नोऽयोध्यायां रामलक्ष्मणसमीप आगात् । तत्र रामसमीपे सुखेनास्थात् । तत्र चमरस्य किमपि न चलति रामलक्ष्मणपुण्यप्रभावात् । पुण्यं सर्वत्र सौख्याय भवति । यतः—

वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा। सुप्तं प्रमत्तं विषमं स्थितं वा रक्षन्ति पुण्यानि पुराकृतानि ॥

तस्मिन्समयेऽयोध्यायां विहरन्तौ देशभूषणकुलभूषणनामानौ केवलिमुनी समागतौ । रामलक्ष्मण शत्रुघ्नास्तौ मुनी वन्दित्वा

देशनां श्रुतवन्तः रामेण मुनिः पृष्टः, स्वामिन्! केन हेतुना शत्रुघ्नेनान्यां राजधानीं दीयमानामप्यनिच्छता मथुरां मार्गिता? मथुराया उपरि कोयं प्रतिबन्धः? देशभूषणमुनिनोक्तम्–शत्रुघ्नपूर्वभवकथानकं कथ्यते। यथा–भो रामचन्द्र! श्रूयतामयं तव भ्राता शत्रुघ्नजीवो मथुरायामनेकशो मृत्वा मृत्वोत्पन्नः। एकस्मिन्भवे श्रीधरो नाम रूपवान्विप्रोऽभूत् साधुसेवकः। सोऽन्यदा राजमार्गे गच्छन् राजमहिष्या ललिताख्यया दृष्टः। तद्रूपेण मोहितया राज्ञ्या रन्तुकामया निजदासीं प्रेष्यानायितः। तेन सह यावता किञ्चिज्जल्पति तावदतर्कितो राजा समागात्। राजानमागतं ज्ञात्वा राज्ञ्या स्त्रीचरित्रचतुरया पूत्कृतम्–भो भो सेवकाश्चोरोऽयं धनं गृहीत्वा याति तच्छ्रुत्वा राज्ञा चौरो ग्राहितः राजादेशात् सेवकैश्चौरः शूलिकां नीतः। तावत्कल्याणमुनिना प्रतिज्ञातव्रतोऽमोचि। सोऽपि संयमं लात्वा तीव्रं तपस्तप्त्वाऽन्तेऽनशनेन मृत्वा सौधर्मदेवलोकं गतः। ततोऽपि च्युत्वा मथुरापुर्यां चन्द्रप्रभराजस्य काञ्चनप्रभाराज्ञीकुक्षौ जातोऽचलनामा पुत्रः चन्द्रप्रभराजस्यात्यन्तवल्लभ आसीत्। अष्टपुत्रस्योपरि जातः सर्वेषां भ्रातॄणां कनिष्ठः परं सकलगुणैर्ज्येष्ठ। तस्मै राजा राज्यं दातुमना वर्तते। तत्स्वरूपमन्यैः पुत्रैर्ज्ञातम्। तैरष्टभिर्भ्रातृभिरचलं व्यापादयितुमारेभे अयं राजा मास्मभूदिति भिया तैश्चिन्तितम्। तत्स्वरूपं केनचिन्मन्त्रिणाऽचलाग्रे निवेदितम्। अचलो मरणभीत्या गृहं मुक्त्वा राज्यं त्यक्त्वाऽन्यत्र गतः। ग्रामान्तरं भ्रमन् मार्गे गच्छन्नेकस्मिन्दिने गरीयसा कण्टकेन वामपादे विद्धः। भूमौ पतितो महता स्वरेणाक्रन्दति। अहो विधेर्विलसितम्। यतः—

जं चिअ विहिणा लिहिअं तं चिअ परिणमइ सयललोआणं।
इअजाणिऊण धीरा विहुरेवि न कायरा हुन्ति ॥९२॥

एवं विचार्याचलश्चिन्तयति–रे आत्मन्! त्वं कातरो मा भव, धीरो भव। यावदेवं वक्ति तावता श्रावस्तिवासिनैनांकनाम्ना पुरुषेण काष्ठभारं त्यक्त्वाऽचलस्य कंटको निष्कासितः। हृष्टोऽचल एवमवोचत्–भो एनांक! यदि मथुरापुर्यामचलं नृपं शृणोषि तदा तत्र समागच्छेः। तवाभीप्सितं दास्ये। यतस्त्वं परमोपकार्यसीत्युक्त्वैनांको विसृष्टः स्वस्थानं गतः। अचलोऽपि राजपुत्रस्ततश्चलितः क्रमेण कौशाम्ब्यां नगर्यां समागतः। तत्र सिंहगुरोः पुर इन्द्रदत्तनृपं धनुरभ्यासं कुर्वन्तं समुदैक्षत। अचलोऽपि सिंहेन्द्रदत्तयोर्धनुर्विद्यां स्वामदर्शयत्। तत्कलया रञ्जित इन्द्रदत्तो राट् त्रिभुवनसुन्दरीं निजपुत्रीमदात्। करमोचने कांश्चिद्देशानप्यदात्। अहो! विद्याया माहात्म्यम्। यतः—

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनम्, विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं, विद्याराजसु पूज्यते न हि धनं विद्याविहीनः पशुः ॥९३॥

सोऽचलस्तया राजपुत्र्या सह सुखमनुभवन्नास्ते। सोऽचल इन्द्रदत्तेन श्वशुरराजेन देशसाधनकृते प्रेषितः। तेन पुण्यवताऽनेके देशाः साधिताः। तन्नामान्यमूनि। यथा–पूर्वस्यां दिशि गौड–कान्यकुब्ज–कलिङ्ग–अङ्ग–वङ्ग–कुरङ्गेत्यादीन्। पश्चिमायां दिशि यथा–कोच्छण–वालम्ब–सौराष्ट्र–कुंकण–लाडा–बुंदेत्यादीन्। दक्षिणस्यां गुर्जर–सिंधु–सवालख–केकाणेत्यादीन्। उत्तरस्यां मलय–सिंहलेत्यादीन् साधयन् जातबलोऽङ्गवङ्गादि साधयन्मथुरायां चाययौ। तत्राष्टभिरग्रजैः सह भृशं युयुधे। भानुप्रभादीनष्टानपि बद्ध्वा स्वबलेऽऽनैषीत्। पुण्येन जयः। पुण्यं सर्वत्र प्रधानम्। यतः—

पुण्यैः सम्भाव्यते पुंसामसंभाव्यमपि क्षितौ। तेरुर्मेरुसमाः शैलाः किं न रामस्य वारिधौ ॥९४॥

ततश्चन्द्रप्रभो राजाऽष्टावपि स्वान्पुत्रान्मोचयितुमचलान्तिके मन्त्रिणोऽप्रैषीत् । तेऽपि मन्त्रिणोऽचलान्तिके गत्वा यावद्विज्ञपयन्ति, तावत्तेनाचलेन मन्त्रिण उपलक्षिताः मन्त्रिभिरप्यचल उपलक्षितः । अचलेन स्ववृत्तान्तो गृहान्निर्गमानन्तरं यथा शक्रेन्द्रदत्तेन पाणिग्रहणं कारितः, यथा देशादिकं दत्तम् , यथा देशसाधनकार्ये निर्गतः, यथा सङ्ग्रामे भानुप्रभाद्योऽष्टावपि निजभ्रातरो बद्धास्तथा सर्वं मन्त्रिणामग्रे निवेदितम् । मन्त्रिणोऽपि त्वरितं गत्वा स्वराजाय चन्द्रप्रभायाचख्युः । अथ चन्द्रप्रभो राजा स्वयं तत्र गत्वा पुत्रं संमानितवान् । पुत्रोऽपि पितुः पादौ प्रणम्य स्वापराधं क्षमयामास । ततो हृष्टश्चन्द्रप्रभो गज आरुह्योत्संगे पुत्रं लघुमचलं निधायान्यैः पुत्रैरष्टभिः परिवृतो मथुरापुर्यामवीविशत् । क्रमेण चन्द्रप्रभो राजा निजं पुत्रं लघीयांसमचलं निजे मथुराराज्ये संस्थाप्य स्वयं दीक्षामङ्गीचक्रे । अचलो राजा स्वभ्रातॄणां पृथक्पृथग्राज्यानि दत्त्वाऽदृष्टसेवकांश्चक्रे । स्वजनो विकृतिं न याति । यतः—

स्वजनो न याति विकृतिं परहितनिरतो विनाशकालेऽपि । छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥९५॥

एकस्मिन्दिन एनांकः कण्टकोद्धारकारको राज्ञाऽचलेन दृष्टः, स्वान्तिक आनायितः । राज्ञाऽचलेन तुष्टेन श्रावस्ती दत्ता । तस्यां नगर्यामेनाकश्छत्रचामरौ दत्त्वा राज्ये स्थापितः । एनांको राजा जातः । अहो ! सुजनत्वम् , अहो ! गुणज्ञत्वं यतः—

विरला जाणंति गुणा विरला पालंति निद्धणा नेहा । विरला परकज्जकरा परदुःखे दुःखिआ विरला ॥९६॥

तौ द्वावेनाङ्काचलौ सम्भूयाद्वैतं राज्यं चक्राते । कथंभूतौ तौ द्वौ, अद्वैतसौहृदौ । क्रमेण द्वावप्यचलैनाङ्कौ समुद्राचार्यसन्निधौ प्राव्रजताम् । द्वावपि संयमं प्रपाल्य मृत्वा कालेन ब्रह्मदेवलोके सुरोत्तमावभूताम् । ततश्च्युत्वाऽचलजीवस्तवानुजः शत्रुघ्नो जातः । तेन प्राग्जन्ममोहेन मथुरा मार्गिता । मधुराजं हत्वा शत्रुघ्नेन मथुरा गृहीता । एनांकजीवोऽपि ब्रह्मदेवलोकाच्च्युत्वाऽयं तव सेनानीः

कृतान्तवदननामाऽभूत् । इति शत्रुघ्नकृतान्तवदनसेनान्योः पूर्वभवकथा ॥

इतश्च प्रभापुरनगरे श्रीनन्दनस्य राज्ञो पत्नी धारणी नाम्नी । तस्यां क्रमात्सप्त सुता अभूवन् । तेषां नामान्यमूनि सुरनन्द-श्रीनन्द-श्रीतिलक-सर्वसुन्दर-जयन्त-चमर-जयमित्राश्च । एकस्मिन्दिने श्रीनन्दनो राजा वैराग्यमापन्नो मासजातमष्टमं सुतं राज्ये न्यस्य मन्त्रिणः शिक्षां दत्त्वा तैः सप्तपुत्रैः सह प्रीतिकरस्य गुरोः पार्श्वे दीक्षां जगृहे । दीक्षां लात्वा दुस्तपस्तपस्तप्त्वा श्रीनन्दनो राजर्षिर्मोक्षं ययौ । सुरनन्दादयः सप्त पुत्रास्तपःशक्ताः समुत्पन्नलब्धयो जङ्घाचारणविद्याचारणाद्यनेकलब्धिमन्तः पृथिव्यां विहरन्तो मथुरासमीपवर्तिपर्वतगह्वरेषु चतुर्मासं तस्थुः । ते सप्तर्षयः षष्ठाष्टमादीनि तपांसि तप्यमानाः पुनर्गगनाध्वना गत्वा दूरदेशेषु ग्राम-नगरादिषु विहृत्य पारणं कुर्वन्ति । पुनस्तत्र गह्वरे समायान्ति । एवं दिनानि यान्ति । तन्मुनिस्तपःप्रभावाच्चमरकृतोपद्रवादि-व्याधिः क्षयं ययौ । पारणायान्यदा चतुर्मासमध्येऽयोध्यायां ते साधवो ययुः । अर्हद्दत्तश्रेष्ठिनो गृहे ते मुनयो भिक्षार्थं प्राविशन् । अर्ह-द्दत्तश्रेष्ठिना ते मुनयोऽवज्ञाताः यूयं के ? कुतः समागताः ? चतुर्मासीमध्ये यूयं कथं समागताः ? यूयं पाखण्डिनो मुनिवेषधारका इत्यवज्ञातास्ते मुनयो गगनाध्वना मथुरां पुनः समागताः । एतद्वृत्तान्तस्तत्रस्थमुनीनामग्रे तेन श्रेष्ठिनोक्तः-ईदृशा मुनयो गगना-ध्वनाऽत्रागताः परमस्माभिर्न मानिताः । तत्रस्थमुनिभिरुक्तं भवद्भिर्भव्यं न कृतं यत्ते मुनयो न वन्दिता न स्तुता न प्रतिलाभिताः । तन्मुनिवचः श्रुत्वाऽर्हद्दत्तः पश्चात्तापं व्यधात् । सोऽर्हद्दत्तः कार्त्तिकश्वेतसप्तम्यां तान्मुनीन् वन्दनार्थं मथुरां ययौ । तत्र चैत्यान्यर्च-यित्वा तान्सप्तर्षीनवन्दत । पूर्वकृतामवज्ञां क्षमयामास । सप्तर्षीणां तपःप्रभावात्तन्मथुरामण्डलं शान्तरोगं जातम् । शान्तरोगं स्वमण्डलं ज्ञात्वा शत्रुघ्नोऽपि स्वां मथुरापुरीं समाययौ । प्रत्यहं साधून्नन्तुमायाति । साधवोऽपि धर्मदेशनां ददति । एकस्मिन्दिने शत्रुघ्नेनोक्तम्-

भो मुनयः ! यूयं मय्युपकारिणो जाताः । युष्मत्तपःप्रसादादस्मद्देशे शान्तिर्जाता । अतो यूयं पुनर्लोकानुग्रहबुद्ध्या कतिचिद्दिनानि तिष्ठन्तु । ते मुनयोऽप्यूचुः-हे राजेन्द्र ! गतः प्रावृट्कालोऽथ मुनीनां स्थातुमेकत्रावस्थानं न कल्पते । यतः—

स्त्री पिहर नर सासरी संयमी आ सहवास । ए त्रीणि असुहामणा जा मंडइ थिरवास ॥९७॥

अतो मुनीनामेकत्रावस्थानं न कल्पते । अतो वयं विहरिष्यामः । हे राजेन्द्र ! गृहे गृहे त्वमार्हतं बिम्बं कारय । तद्बिम्बमाहात्म्यतोऽस्यां पुर्यां शान्तिर्भविष्यति । यतः—

दालिद्दं दोहग्गं कुजाइ कुसरीर कुगइ कुमईओ । अवमाणरोगसोगा न हुंति जिणबिंबकारिणं ॥९८॥

इत्युक्त्वा ते सप्तर्षयो गगनाध्वना समुत्पत्याऽन्यत्र ययुः । शत्रुघ्नोऽपि यथा मुनिभिरुक्तं तथा चक्रे, तत्क्षणादेव लोका निरामया जाताः । अहो जिनबिंबानां महात्म्यमहो महामुनिवचनमाहात्म्यं येन सर्वोपि लोकः सुखी जातः । ततस्तेन लोकेन तेषां सप्तर्षीणां चतसृषु दिक्षु रत्ननिर्मिता मुनिप्रतिमाः कारापिताः । इतिसप्तर्षिकथा ।

इतश्च वैताढ्यगिरौ दक्षिणश्रेणिभूषणे रत्नपुरे नगरे रत्नरथो राजाऽभवत् । तस्य राज्ञश्चंद्रमुखा नाम्ना पट्टराज्ञी तयोः पुत्री मनोरमा नाम्ना, उदौरना रूपेणापि मनोरमा । एकस्मिन्दिने सा मनोरमा यौवनोन्मुखा राज्ञा दृष्टा चिन्तोत्पन्ना, एषा कन्यका मया कस्य देया कोऽस्या अनुरूपो वरो भावीति चिन्तापरो राजा चिंतयति । यतः—

कुलञ्च शीलञ्च सनाथता च विद्या च वित्तञ्च वपुर्वयश्च ।
वरे गुणाः सप्तविलोकनीयास्ततः परं भाग्यवशा हि कन्यका ॥९९॥

राजा यावत्तैवं चिंतयति, तावत्तत्र नारदः समागतस्तेन नारदेनोक्तम्—तव पुत्र्या मनोरमाया योग्यो वरो लक्ष्मणो वर्तते। तच्छ्रुत्वा कुपितो रत्नरथो राजा पूर्ववैरतः। यतोऽनेन लक्ष्मणेनास्य रत्नरथस्यानेके विद्याधराः पूर्वं हतास्तेन वैरेण नारदोपरिकुपितो रत्नरथो भ्रूसंज्ञया स्वान्पत्तीन्समादिशत्। विटोऽयं नारदः कुट्यताम्। कुट्टनायोत्थितांस्तान्सेवकान्दृष्ट्वा धीमान्नारदः पक्षिवत्समुत्पत्य नंष्ट्वा लक्ष्मणान्तिके गतः। लक्ष्मणेनाभ्युत्थानादिना सन्मानितः पृष्टश्चागमनकारणम्। नारद उवाच—भो लक्ष्मण! अहं वैताढ्यपर्वते रत्नपुरे गतस्तत्र मया रत्नरथराजस्य पुत्री दृष्टा, परं नेदृशी काचिदन्या देवकन्या वा नागकन्या वा सुरी वा विद्याधरी वा। एवं वर्णयित्वा तस्याः कन्याया रूपं पटे लिखित्वा नारदो लक्ष्मणाय दर्शयामास। स्वकुट्टनादिवृत्तान्तमपि कथयामास। लक्ष्मणः पट्टलिखितरूपदर्शनान्मनोरमां प्रति जातानुरागो रामेण सहितोऽनेकैर्विद्याधरसैन्यैः परिवृतः पुष्पकविमानारूढः क्षणेन रत्नपुरे नगरे समागात्। रत्नरथो विद्याधरो राजा संग्रामे जितः। पश्चाच्छ्रीरामलक्ष्मणपादयोः पतित्वा स्वापराधः क्षमितः। राजा रत्नधरविद्याधरः श्रीरामचन्द्राय श्रीदामां कन्यां ददौ तथा लक्ष्मणाय मनोरमां कन्यां ददौ। तां कन्यां परिणीयान्या अपि विद्याधरीः कन्याः परिणीय वैताढ्यदक्षिणश्रेणीं जित्वा भूयोऽयोध्यामीयतुः। सुखेन तौ रामलक्ष्मणौ क्ष्मां पालयन्तौ तस्थतुः।

षोडशान्तःपुरवधूसहस्रं लक्ष्मणस्य तु। महिष्योऽष्टावभूवंस्तत्र विशल्या रूपवत्यपि॥

वनमाला च कल्याणमालिका रत्नमालिका। जितपद्मा भयवती चाष्टमा तु मनोरमा॥८००॥ युग्मम्॥

तासामष्टानामग्रमहिषीणां सार्धे द्वे शते पुत्रा बभूवुः। तेषां नामान्यमूनि। श्रीधन–पृथ्वीतिलक–श्रीकेशीत्यादयो लक्ष्मणपट्टराज्ञीपुत्राः। रामस्यापि चतस्रो महादेव्योऽभवन्। तासां नामान्यमूनि–सीता, प्रभावती रतिनिभा–श्रीदामा एताश्चतस्रो रामपत्न्यः।

तातां पुरा अप्यनेरशः।

सीतैकदा ऋतुस्नाता निशान्ते स्वप्नमैक्षत। च्युतौ विमानाच्छरभौ प्रविशन्तौ निजानने ॥१॥

सीतया रामचन्द्राग्रे गत्वा निवेदितम्। स्वामिन्! मया स्वप्ने मुखे प्रविशन्तौ विमानाच्च्युतौ शरभौ दृष्टौ, तयोः किं फलं भावि। रामेणोक्तम्-वीरौ तव सुतौ भाविनौ। तच्छ्रुत्वा सीता परमानन्दनन्दिता गर्भं बभार रामस्य पूर्वं सीताऽत्यन्तवल्लभाऽऽसीत्। प्राप्तगर्भा विशेषतो वल्लभा बभूव। किं बहु कथ्यते-सीता लोचनानंदचन्द्रिका जाता। इतश्च मायाविन्य ईर्ष्यालवः सपत्न्यः सीतामदोऽब्रुवन्-हे सखि! हे सीते! कीदृग्रूपो रावणोऽभूत्। त लिखित्वा प्रदर्शय। सीताऽप्यूचे-मया रावणः सर्वाङ्गं नहि दृष्टः। किन्तु मया तच्चरणावेव दृष्टौ। तर्हि रावणरूपं कथं लिखामि? ततः सपत्न्या पुनः प्रोक्तं-हे सीते! तर्हि त्वं तस्य पादावप्यालिख। अस्माकं तत्पादयोरपीक्षणे महत्कौतुकं वर्तते। सपत्न्येति प्रोक्ता सीता सरलस्वभावा रावणस्याङ्घ्री लिलेख। तत्र स्थाने राम आगमत्। सीतासपत्न्या रामचन्द्राग्रे निवेदितम्। स्वामिन्! एषा सीता रावणे मोहिता। रावणांह्री भूमौ लिखित्वा पुष्पादिभिः पूजयति। सुचिरं निरीक्षते। तत्तथा दृष्ट्वा श्रीरामो महामना गम्भीरत्वात् सीतादेव्या अनुपलक्षितस्तथैव वर्तते। देव्यः सर्वा निजैर्दासीजनैः सीता दोषपदं जने प्रकाशयामासुः। प्रायः सपत्नीजनोऽसन्तमपि दोषं प्रकाशयति। तथा प्रायः प्रवादो लोकनिर्मितो भवति। एकस्मिन्दिने रामेणोक्तम्-हे सीते! त्वां गर्भखेदितां विनोदयितुकामो वसन्तः समागात्। एहि माहेन्द्रोद्यानं रन्तुं व्रजामः। सीताऽप्यूचे-हे नाथ! मम दोहद उत्पन्नो वर्तते। यदहं देवान्पूजयामि। तद्दोहद उद्यानभवैर्नानापुष्पैः सुगन्धिभिर्देवार्चनमनोरथं पूरय। सीतावचनं श्रुत्वा रामोऽपि नवीनपुष्पैर्महेन्द्रोद्यानभवैर्देवाना पूजामकारयत्। पूजां कारयित्वा सीतया सह मधूत्सवं पश्य-

न्नास्ते। अत्रान्तरे सीताया दक्षिणं चक्षुरस्फुरत्। तदा सीता साशंका रामचन्द्राय सर्वमाचचक्षे। रामोऽप्याह–हे सीते! तव दक्षिणचक्षुस्फुरणतः किञ्चिन्नवीनं भविष्यति परं न ज्ञायते किं भविष्यति? ततः सीता रामं प्रोवाच–स्वामिन्! रावणगृहे दुःखं दत्त्वा विधिरद्यापि सन्तुष्टो नास्ति। अथ न ज्ञायते किं करिष्यति।

रामोऽपि तामुवाचैवं देवि! मा खेदमुद्वह। अवश्यमेव भोक्तव्ये कर्माधीने सुखासुखे ॥२॥

तद्गच्छ मन्दिरे स्वस्मिन् देवानामर्चनं कुरु। प्रयच्छ दानं पात्रेभ्यो धर्मः शरणमापदि ॥३॥

सीताऽपि सदनं गत्वा संयमेन महीयसा। अर्हतोऽपूजयद्दानं प्रददे चावदानवत् ॥४॥

'राघवोऽपि वने सकलं दिनं वनक्रीडां कृत्वा सायमयोध्यां नगरीं समागात्। तावन्महाजनेनागत्यैवं कथितम्–स्वामिन्नभयं याचयामः। रामेणोक्तम्–युष्माकमभयं भवतु। प्रोच्यताम् यद्भवति तत्तथैव। अतस्तेषां मध्ये वृद्धेन मन्त्रिणा जयदेवेनोक्तम्—स्वामिन्! रावणेन सीता हृता तद्वेश्मन्येकाकिन्येव स्थिता षण्मासान्यावत्, रावणः स्त्रीलम्पटः, सीतया शीलं कथं रक्षितं भविष्यति। परं काममोहितेन रामेण सीता संगृहीता, राजानं को निवारयति। इति लोके सीताया अपयशो जातमस्ति। हे स्वामिन्! श्रीरामचन्द्र! भवता तथा विधेयं यथा शशिसोदरे कुले कलङ्को नायाति। रामेणोक्तम्–भो महत्तराः! अहं तथा विधास्ये यथा कुले कलंको न भविष्यतीत्युक्त्वा प्रकृतिमहत्तरा श्रीरामेण विसृष्टाः। निशायां रामो निजांश्चरानादिदेश। भो सेवका! यूयं शृण्वन्तु, लोकाः किं वदन्तीत्युक्त्वा चराः प्रेषिताः। रामोऽपि स्वयं नष्टचर्यायां निर्गतः। स्थाने स्थाने वार्तां शृण्वन्नगरमध्ये बभ्राम। प्रभाते चरेणाऽप्यागत्य मन्त्रिवत्तथैव विज्ञप्तम्। रामेणापि स्वयं कर्णाभ्यां श्रुतम्। यथैकस्य मालाकारस्य गृहपृष्ठे स्थितो रामः शृणोति।

मालाकारो मालाकारीं वक्ति–हे प्रिये! त्वं कुत्र गतासीः? तयोक्तम्–अहं सखीगृहे गताऽऽसम्। मालिकेनोक्तम्–प्रमदाजनस्य निशायां गमनं न युक्तम्। अतस्त्वमेकाकिनी निशायां यदि कस्यचिद्गृहे यास्यसि तदा त्वां गृहान्निष्कासयिष्यामि। तच्छ्रुत्वा मालाकार्याह–भो प्राणप्रिय! रामपत्नी सीता रावणगृहे षण्मासान्यावत्स्थिता तथापि रामेण किमपि नोक्तम्। त्वं मम पुनः पुनः कथयसि "यन्निशायां न गन्तव्यं" तर्हि त्वं रामादप्यधिकः? मालाकारेणोक्तम्–हे प्रिये! रामगृह एवं भ्राजते, परं मम गृहे त्वेवं न भ्राजते। यदि निशायां कस्यापि गृहे यास्यसि तदा तव जीवितं नास्ति। इति तयोर्वार्तां श्रुत्वा श्रीरामचन्द्रश्चिन्तयति–किं करोमि? अहं जानामि सीतां निष्कलंकाम्। पुरदेवतयोक्तं मुनिभिरुक्तमेषा सीता महासती। परं लोकापवादादेनां त्यजामि। इति विचिन्त्य रामेण लक्ष्मणाग्र उक्तम्। लक्ष्मणेनोक्तम्–नगरे पटहं वादयामि। यः सीतां सकलंकां कथयिष्यति तं जीवरहितं करिष्यामि। रामेणोक्तम्—भो बान्धव! एवं कृते जनापवादो भृशं भवेत्। पुनर्लक्ष्मणेनोक्तम्—भो बान्धव! जनापवादात्सीतां मा त्यज। यतः–देवेनोक्ता, मुनिनाऽप्युक्तैषा महासती, हे रामचन्द्र! अतस्त्वमेनां मा त्यज। एवं लक्ष्मणेनोक्तोऽपि रामः कृतान्तवदनं सेनान्यमाकार्योक्तवान्–यथा भो कृतान्तवदन! एनां सीतां रथ आरोप्य गर्भवतीमप्यरण्ये मुञ्च। अत्रार्थे पुनः किञ्चिन्न वाच्यम्। तदा लक्ष्मणः प्राह—

पतित्वा रामपादेषु बभाषे लक्ष्मणो रुदन्। सीतादेव्या महासत्यास्त्यागोऽयमुचितो न हि ॥५॥
नातः परं त्वया वाच्यमिति रामेण भाषिते। नीरङ्गीच्छन्नवक्त्रोऽगात्सौमित्रिः स्वं गृहं रुदन् ॥६॥

रामः कृतान्तवदनमूचे–हे कृतान्तवदन! सम्मेतयात्रामिषेण सीतां रथ आरोप्य महाकान्तारे वने मोचय। एतदर्थे पुनर्न

प्रष्टव्यम् । कृतान्तवदनस्तथेति कृत्वा सीतासमीपे गतः । गत्वोक्तम्–हे मातः सीते ! श्रीरामः सम्मेतशिखरयात्रायै चलितः । तवाऽपि पूर्वं यात्रामनोरथोऽभवत् । अथ तं मनोरथं पूरय । शीघ्रं स्यन्दनमारोह । हर्षिता सीता स्नानमज्जनादिकं कृत्वा रथ आरूढा । मृदुहृदया रथस्था कृतान्तेनेव कृतान्तवदनेन नीयमाना पथि चचाल । मार्गे गच्छन्दुर्निमित्तैर्वार्यमाणोऽपि कृतान्तवदनः सीतासहित एकां भीमामटवीं प्राप । कथंभूतां–अनेकोत्कटवृक्षगहनां, विविधव्यालशार्दूलकालकंकालवेतालक्षेत्रपालशाकिनीडाकिनीयोगिनीराक्षसगान्धर्वविद्याधरखेचरभूतप्रेतपिशाचभिल्लकर्बरशबरतस्करसंवरशरभकासरव्याघ्रसिंहशृगालघूकशूकरादिश्वापदरौद्राकारघूकशिवाफेत्कारयक्षराक्षसमहाहुंकारभयंकरामटवीं समागतः कृतान्तवदनो रथं ररक्ष । रथस्थं कृतान्तवदनं साश्रुनयनं म्लानमुखं प्रेक्ष्य सीताऽब्रवीत्–रे कृतान्तवदन ! त्वं सशोकवत्कथं दृश्यसे ? कृतान्तवदनोऽप्यूचे–हे मातः सीते ! अहं दुर्वचनं कथं वच्मि । सीतयोक्तम्–किं दुर्वचनम् ? पुनः कृतान्तवदनेनोक्तम्–हे देवि ! त्वं दैवेन दूषिता, तवोपरि दैवं रुष्टम्, तव दुर्दशा समायाता । तत्किं रे कृतान्तवदन ? हे देवि ! राक्षसवासवासापवादाल्लोकभीत्या रामेण त्वं भीषणे वने त्याजिताऽसि । लक्ष्मणेन निषिद्धोऽपि रामो न मन्यते, अहं च प्रेषितोऽमुष्मिन्कार्ये, पापोऽस्मि देवि ! किमहं करोमि ? किं कथयामि ? हे देवि ! रथादवतर । तद्वचनं श्रुत्वा सीता मूर्च्छिता भूमौ पतिता मृतेव कृतान्तवदनेन दृष्टा । सीतां भूमौ पतितां दृष्ट्वा धिङ् मां सेवाजीविनं स्वामिकार्यकरणक्षमम् । स्वामिनापीदं कार्यं दत्तम् । आः किं भविष्यति ? एषा कथं जीविष्यतीति भिया सोऽपि भृशं रुरोद । सीताऽपि शीतलवातोपचारैर्लब्धसंज्ञा विलापानकरोत् । पुनर्मूर्च्छिता पुनर्लब्धचेतनैवं कुर्वाणा कृतान्तवदनेन दृष्टा । क्षणेन स्वस्थीभूय कृतान्तवदनं प्रत्युवाच–भो कृतान्तवदन ! अयोध्येतः कियद्दूरेऽस्ति ? सेनानीरभ्यधात्–हे मातः ! अनया पृच्छया किम् ? रामस्त्वां सर्वथा नाङ्गीकरोति ।

हे सीते ! रामवार्तया पर्याप्तम् । इति श्रुत्वाऽपि सीता रामभक्ता भूयोऽप्यभाषत–भद्र ! मद्वचनमिदं रामस्याशंसेः । यदि निर्वादभीतस्त्वं तर्हि परीक्षां कथं नाकृथाः ? सर्वोऽपि जनः शङ्कास्थाने दिव्यं कारयति । त्वया मह्यं दिव्यं काराप्य सत्या वाऽसत्या वा कृत्वा कथं न त्याजिता । यतः—

अनुमोक्ष्ये स्वकर्माणि मन्दभाग्या वनेऽप्यहम् । नानुरूपं त्वकार्षीस्त्वं विवेकस्य कुलस्य च ॥७॥
यथा खलगिराऽत्याक्षीः स्वामिन्नेकपदेऽपि माम् । तथा मिथ्यादृशां वाचा मा धर्मं जिनभाषितम् ॥८॥
जिम जनवयणे ज्युं त्यजी तीम जउ धर्म त्यजेसि । सीता प्रणामी विनवी तुं संसार रलेसि ॥९॥

इत्याद्युक्त्वा मूर्च्छिता भूमौ पतिता । पुनर्लब्धसंज्ञा कृतान्तवदनसेनान्यमभ्यधात्–हे सेनानीर्मया विना कथं रामो जीविष्यति ? हे कृतान्वदन ! रामचन्द्राय ममाशीर्वाच्या । यथा—

स्वस्त्यस्तु ते कुशलमस्तु चिरायुरस्तु, गोहस्तिवाजिधनधान्यसमृद्धिरस्तु ।
ऐश्वर्यमस्तु विजयोऽस्तु रिपुक्षयोऽस्तु, कल्याणमस्तु भवतां जिनभक्तिरस्तु ॥१०॥
रामाय स्वस्त्यथाशंसेराशिषं लक्ष्मणस्य च । शिवास्ते सन्तु पन्थानो वत्स गच्छोपराघवम् ॥११॥

एवंविधे दयिते सीतैवंविधामाशिषं ददौ । कृतान्तवदनोऽपि सीताऽऽशिषं लब्ध्वा कथंचिद्वलते ।

इति श्रीमत्तपागच्छे विजयहीरसूरिराज्ये आचार्यश्रीविजयसेनसूरियौवराज्ये पण्डितदेवविजयगणिविरचिते श्रीरामचरित्रे गद्यबन्धे सीतापरित्यागो नामाष्टमः सर्गः ।

# नवमः सर्गः ।

अथ सीता कृतान्तवदनेन परित्यक्ता भयोद्भ्रान्तेतस्ततो वने चभ्राम । सीताऽऽत्मानं निन्दन्ती पूर्वकृतं कर्म गर्हन्ती यथा—

यथा धेनुसहस्रेषु वत्सो वदति मातरम् । एवं पूर्वकृतं कर्म कर्तारमनुगच्छति ॥१२॥

भूयो भूयः पदे पदे स्खलन्ती भृशं रोदिति । तरूनपि पक्षिणोऽपि विलापै रोदयन्ती किं बहूक्तेन तस्मिन्नटव्यां तस्मिन्समये तत्रास्ति येन न रुदितम् । तस्मिन्समये तया रुदन्त्याऽग्रेगच्छन्त्यैकं महत्सैन्यं पुरतोऽदृश्यत । तत्सैन्यं दृष्ट्वैकस्य वटवृक्षस्याध उपविश्य निर्भीका तस्थौ । यावद्भयं नागच्छति तावद्भेतव्यमागते तु सोढव्यं निःशंकितैः सद्धैर्यैश्च । यतः—

तावद्भयाद्धि भेतव्यं यावद्भयमनागतम् । आगतं तु भयं दृष्ट्वा प्रहर्तव्यमशङ्कितैः ॥१३॥

तथा सीता निर्भीका नमस्कारपरायणा चकितहरिणीवत्तरललोचना सैन्यं विलोकयन्ती तस्थौ । केचित्सैनिका सीतासमीपे समागताः । दिव्यरूपां सीतां दृष्ट्वा ते चिन्तयन्ति । कैषा ? अस्मिन्वन एकाकिनी कथं दृश्यते ? एवं यावता चिन्तयन्ति, तावत्तत्र राजा समागतः । तं सैन्याधीशं विलोक्य स्वनेपथ्यं ढौकयित्वा सीता भृशं रुरोद । तां रुदन्तीं दृष्ट्वा राजोचे–हे भगिनि ! त्वं किं रोदिषि ? किं ते दुःखकारणम् ? एतानि भूषणानि तवैवाङ्गे तिष्ठन्तु । हे भगिनि ! त्वं मा बिभेषि । का त्वम् ? कस्य प्रिया ? कस्य पुत्री ? एकाकिन्यस्मिन्वने किं तिष्ठसि ? त्वं गर्भवत्यासन्नप्रसवा निर्घृणादपि निर्घृणेन केनचिद्दयितेन त्यक्ता । सर्वं सत्यमा-

ख्याहि। मा स्म शंकिष्ठाः। अहं तव कष्टेन कष्टितोऽस्मि। तावत्तन्मन्त्री सुमतिर्नाम्ना सीतासमीपमागत्यैवमब्रवीद्–हे सुन्दरि! एष गजवाहनराजस्य पुत्रो बन्धुदेव्या राज्ञ्या नन्दनो वज्रजङ्घो नाम्ना पुण्डरीकपुरेश्वरो महाश्रावको महासत्त्वः परनारीसहोदरो गजान्गृहीतु वने गतोऽभूत्। अथ कृतकृत्यो गजान्गृहीत्वाऽत्र समागतोऽस्ति। अनेन राज्ञाऽत्राऽऽगतेन त्वां दृष्ट्वा तव दुःखेन दुःखितः पुनः पुनस्त्वां पृच्छति। अतस्त्वं निर्भीका सत्यमाख्याहि। इति मन्त्रिणोक्ते सीता निर्भीका स्ववृत्तान्तं यथातथमाचख्यौ–यथा–अहं जनकराजस्य पुत्री, भामण्डलभगिनी, श्रीरामपत्नी, लक्ष्मणभ्रातृजाया, राजदशरथवधूटी सीता नाम्ना। एवं स्ववृत्तान्तमुक्त्वा तूष्णीकाऽस्थात्। ततो वज्रजङ्घोऽप्यूचे–हे भगिनि! सीते! यथा तव भ्राता भामण्डलस्तथा त्वं मां विद्धि। अतस्त्वं ममौकस्यागच्छ। यतः–स्त्रीणां पतिगृहादन्यत्र स्थानं भ्रातृनिकेतनम्। त्वं मम साधर्मिकी, एकधर्मत्वात्। त्वं मम भगिनी यतः—

अन्नन्नदेशजाया अन्ननाहारवड्ढिआ सरीरा। जिणसासणं पवन्ना सव्वे ते बन्धवा भणिआ ॥१४॥

रामोऽपि त्वां लोकापवादेनात्याक्षीन्न तु स्वयम्। अथ पश्चात्तापेन रामोऽपि त्वमिव कष्टभाग्भविष्यति। धिगविचार्यकारिणम्। यतः—

अपरीक्षितं न कर्तव्यं कर्तव्यं सुपरीक्षितम्। पश्चाद्भवति सन्तापो ब्राह्मणी नकुलं यथा ॥१५॥

इति कथयित्वा वज्रजङ्घेन धर्मबान्धवेन निर्विकारेण शिबिका समानायिता। द्रुतमारुह्यतां हे भगिनि! इति कथयित्वा सीतां शिबिकामारोप्य क्षेमेण पुण्डरीकं पुरं चागात्। तद्वसतिगृहे अहर्निशं दानशीलतपोभावनाभावितात्मा पितृवेश्मनीव सुखेनास्थात्।

इतश्च कृतान्तवदनो रामसेनानी रामसमीपं गत्वा सीतापरित्यागादि सर्वं स्वरूपं निवेदितवान्–स्वामिन्! मया सीता सिंह

निनादाख्ये भीषणे वने परित्यक्ता। सा मूर्च्छिता भूमौ पतिता। पुनर्लब्धसंज्ञा विलापं कुर्वाणा कथंचिद्धैर्यमालम्ब्य भवन्तमेवमादिशत्। यथा—

सदा विमृश्यकर्तुस्तेऽप्यविमृश्यविधायिता। मन्ये मद्भाग्यदोषेण निर्दोषस्त्वं सदाऽप्यसि ॥१६॥

खलोक्त्याऽहं यथा त्यक्ता निर्दोषाऽपि त्वया प्रभो!। तथा मिथ्यादृशां वाचा मा त्याक्षीर्धर्ममार्हतम् ॥१७॥

तथा–जिम जनवयणे हुं त्यजी तिम ज्युं धर्म त्यजेसि। सीता प्रणमी विनवी तुं संसार रखेसि ॥१८॥

इत्याद्युक्त्वा मूर्च्छिता भूमौ पतिता। पुनर्लब्धसंज्ञा विलपति–मया विना कथं रामो जीविष्यति? हतास्मि हा इत्यादि वचनानि सेनानीमुखाच्छ्रुत्वा मूर्च्छया रामो भूमौ पपात। तावल्लक्ष्मणेनागत्य चन्दनादिनाऽभिषिच्य वातव्यजनैः सज्जितो राम उत्थायैवं विललाप। हा! खलानां लोकानां वचसा मया सीता भीषणे वन उज्झिता। हा सीते! पापभीते! मां विना कथं जीविष्यसि। अथ लक्ष्मण ऊचे–स्वामिन्! तस्मिन्वने गम्यते, तत्र गत्वा सीता विलोक्यते। एवं श्रुत्वा रामः कृतान्तवदनं सेनान्यं सह नीत्वा तत्र वने गतः। यत्र वने सीता मुक्ता तद्वनं विलोकितम्। परं सीता न लब्धा। यत्र विलोकिता तानि स्थानान्याह–

प्रतिस्थलं प्रतिजलं प्रतिशैलं प्रतिद्रुमम्। रामो गवेषयामास ददर्श न तु जानकीम् ॥१९॥

मन्ये व्याघ्रेण सिंहेन श्वापदेनापरेण वा। सीता जग्धेति सुचिरं दध्यौ रामोऽतिदुःखितः ॥२०॥

सीताऽप्राप्तौ विमुक्ताशो निर्वृत्य स्वपुरीं ययौ। पौरैः सीतागुणग्राहं निन्द्यमानो मुहुर्मुहुः ॥२१॥

एवं श्रीरामो लोकैर्निन्द्यमानः स्वां पुरीमयोध्यामागत्य सीतायाः प्रेतकार्यमकार्षीत्। कतिचिद्दिनान्ते श्रीरामो विगतशोको

बभूव। यतः—

कुंकुमवन्नी देह परजाली पाछुं वल्युं। फिटकारी मा सनेह जल पइसी छांडु लिओ ॥२२॥

सीताऽपि वज्रजङ्घराजस्य गृहे तथा स्थिता, यथा केनाऽपि न ज्ञाता। एवं सुखेनास्थात्।

इतश्च तस्मिन्नगरे वज्रजङ्घवेश्मनि स्थिता युग्मजातौ पुत्रौ सुषुवे। क्रमेण तयोर्नाम चक्रे लवणाङ्कुशो मदनाङ्कुश इति। तौ मनोज्ञावपरौ चन्द्रसूर्याविव धात्रीभिर्लाल्यमानौ क्रमेणाष्टवर्षीयौ जातौ कलाग्रहणयोग्यौ विन्ध्यभूमौ कलभाविव मातृमनोरथैर्वर्धितौ नेत्रानन्ददायकौ नरेन्द्रनयनोत्सवौ महाभुजावपरौ रामलक्ष्मणाविति लोकोक्तिं शृण्वानौ वृद्धिं प्रापतुः।

इतश्च तस्मिन्समये सिद्धार्थो नाम श्रावकः सिद्धपुत्रोऽणुव्रतधारी सिद्धविद्यो विद्याबलर्धिसम्पन्नः कलागमविचक्षणः सीतागृहे समागात्। हे सीते ! अहं सिद्धार्थनामा श्रावको गगनगामिन्या विद्यया शत्रुञ्जयगिरिनारसम्मेतशिखरनन्दीश्वरादिषु यात्रां कृत्वाऽथ भिक्षार्थं त्वद्गृह आगतोऽस्मि। सीतया प्रोक्तम्–हे धर्मबान्धव ! मम भाग्यं फलितम्। समागतः कल्पतरुर्ममाङ्गणे फलितः। मम धर्मतरुः सुप्रसन्नः। मम श्रीजिनपादा सुप्रसन्नाः यत्त्वं जंगमकल्पपादपो मद्गेहे समागाः। एवं कथयित्वा गेहमध्ये नीत्वा स्नानं का राप्य गृहचैत्यानि पूजयित्वा भद्रासने निवेश्य वरभोज्यैः पक्वान्नशालिव्यंजनादिभिर्भोजितः। भोजनानन्तरं सिंहासने निवेश्यैला-लवङ्गकर्पूरादिसम्मिश्रं ताम्बुलं दत्त्वा भृशं तोषितः सिद्धार्थः सीतां प्रत्यूचे–हे सीते ! हे धर्मभगिनि ! त्वं रामं त्यक्त्वाऽत्र वज्रजङ्घ-गृह एकाकिनी स्वजनादिरहिता परगृहे कथं तिष्ठसि ? इति पृष्टा सीता निजवृत्तान्तं सर्वं कथयति। रामेण यथा त्यक्ता यावद्वज्रज-ङ्घेनेहानीता। इत्यादिनिजवृत्तान्तं पुत्रजन्मावधिपर्यन्तं सर्वं निवेदितम्। भ्रातुरग्रे भगिनीव सर्वमुक्त्वा तोषितः सिद्धार्थः। ततः सि-

द्धार्थेन सीतां चिन्ताकुलां ताम्यन्तीं दुःखभारभराक्रान्तां दृष्ट्वा पृष्टा हे सीते ! तव चेतसि का चिन्ता वर्तते, यस्य पुत्रौ लवाङ्कुशौ। बलशालिनौ प्रशस्तलक्षणोपेतौ साक्षादिव तौ रामलक्ष्मणावेतौ तव पुत्रावचिरात्तव मनोरथं पूरयिष्यतः। अथ तव का चिन्ता ? सीतया प्रोक्तम्—हे धर्मबान्धव ! अन्यः कोऽपि तादृशो मम पुत्रपाठको नास्त्यतस्त्वं मम पुत्रौ पाठय, कलां शिक्षापय, विद्यां देहि। एषा चिन्ता वर्तते मम चेतसि, अन्या काचिच्चिन्ता नास्ति। सिद्धार्थेनोक्तं तव पुत्रौ पाठयिष्यामि, एषा चिन्ता न विधेया। इति कथयित्वा सीताऽऽश्वासिता। पुत्राऽध्यापनहेतवे सिद्धार्थं स्वगृहे सीता स्थापयामास। ततः सिद्धार्थस्तौ सीतापुत्रावध्यापयत्। सिद्धार्थेन तौ तथाऽध्यापितौ, यथा शस्त्रशास्त्रकलापारीणौ जातौ। किं बहु वर्ण्यते, त्रिदशानामपि दुर्जयौ जातौ ततः सिद्धार्थस्तौ पाठयित्वा सीताशिषं लात्वा स्वस्थानं गतः।

तावधीताखिलकलौ प्रपेदाते च यौवनम्। नूतनाविव कन्दर्पवसन्तौ सहचारिणौ ॥२३॥

वज्रजङ्घो नाम मातुले लक्ष्मीवतीकुक्षोत्पन्नां शशिचूलां स्वां पुत्रीं लवणायोदवाहयत्। अन्या अपि द्वात्रिंशतं कन्या लवणः पर्यणैषीत्। ततो वज्रजङ्घो मातुलो पृथ्वीपुरनगरेशितु राजपृथोरमृतवतीराज्ञीकुक्षोद्भवां कनकमालिकां पुत्रीमङ्कुशाय ययाचे। पृथुराज ऊचे—भो वज्रजङ्घ ! यस्य वंशो न ज्ञायते, तस्मै स्वदुहिता कथं दीयते ? इति तद्वचनं श्रुत्वा कुपितो वज्रजङ्घः क्रोधारुणलोचनः पृथुं प्रति सङ्ग्रामसज्जो बभूव। उभावपि परस्परं युयुधाते। पृथुराजः पोतनपुराधीशं स्वमित्रं जितशत्रुं साहाय्याय समाह्वयत्। वज्रजङ्घोऽपि स्वान्पुत्रांस्तथालवाङ्कुशौ समाह्वयत्। एवं तयोः सङ्ग्रामो बभूव। तस्मिन्सङ्ग्रामे वज्रजङ्घसेना पृथुराजेन भग्ना। मातुलसेनाभङ्गेन संकुपितौ लवाङ्कुशौ निरङ्कुशगजाविव प्रणिघ्नन्तावधावताम्।

अभज्यत ससैन्योऽपि पृथुर्यावन्नरेश्वरः। ऊचतुस्तावदेवं तौ स्मेरास्यौ रामनन्दनौ ॥२४॥

हे राजंस्त्वं सुवंशजोऽज्ञातवंशस्याग्रे कथं पलायित इति तद्वचनं श्रुत्वा राजा पृथुर्वलित्वा लवाङ्कुशपुरतो नमस्कारं विधायैवमवादीत् भो महापुरुषौ! युष्माकं वंशो मया विज्ञातोऽमुना विक्रमेण। यतो युवां सुकुलोत्पन्नौ। इति कथयित्वा पूर्वं वज्रजङ्घेन मार्गितां कन्यां कनकमालिकां निजपुत्रीमङ्कुशाय ददौ। तथा पृथुनृपो वज्रजङ्घेन सह सर्वभूभुजां समक्षं सन्धानं चक्रे। तस्मिन्समये तत्र नारदमुनिः समागात्। पृथुराड् नारदं महामुनिं पप्रच्छ भो नारदमुने! त्वं ज्ञानवानसि, अतः स्वज्ञानेन लवाङ्कुशयोर्वंशादिकं समाख्याहि यथा जामातृवंशपरिज्ञानेन श्वशुरस्यातिसुखं भवति। तदा नारदमुनिः किञ्चिद्धास्यं विधायोचे–भो वज्रजङ्घ! अनयोर्वंशादिकं को न वेत्ति? यस्योत्पत्यादिकंदो वृषभध्वजः। यतः—

चक्रिणोर्ह्यनयोर्वंशो भरताद्याः कथाश्रुताः। को न वेत्त्यनयोस्तातौ प्रत्यक्षौ रामलक्ष्मणौ ॥२५॥

नारदमुनिं लवणः पप्रच्छ–भो मुने! सा नगरी कियद्दूरेऽस्ति? यस्यामयोध्यायां सानुजः सपरिच्छदो मे तातो वसति। मुनिरूचे–भो लवण! यस्यां नगर्यामयोध्यायां तव पिता वसति साऽयोध्येतः षष्ठ्यधिकयोजनशतम् (शतद्वयं)। ततो राजा पृथु नारदमुनिं नमस्कृत्य निससर्ज। शुभे लग्ने शुभे मुहूर्ते पृथुराडङ्कुशं पर्यणाययत्। बह्वीभी राजकन्याभिः सार्धं कनकमालामङ्कुशः पर्यणैषीत्। ततस्तौ लवाङ्कुशौ देशान्साधयन्तावनेकसैन्यपरिवृतौ पृथ्वीं परिभ्रेमतुः। अनेकराजमण्डलीसमुपचोभुज्यमानचरणारविन्दौ देशाद्देशं परिव्रजन्तौ मध्यखण्डान्तर्वर्तिकतिचिद्देशान्साधयित्वा गङ्गामुत्तीर्य कैलासस्योत्तरां दिशमियतुः। तत्र नन्दनचारूणां देशानां जयं कृत्वा तवथलितौ। रुप–कुन्तल–कालाम्बु–नन्दी–नन्दन–सिंहल–शलभ–नल–शूल–शबर–बर्ब्बरादिदेशाञ्जित्वा परकूलं गतौ।

तत्राऽप्यार्याननार्यांश्च साधयित्वा तैर्नृपैः परिवृतस्तस्माद्देशान्निर्वृत्तौ लवाङ्कुशौ पुण्डरीकपुरमुपेयतुः। लोकोक्तिर्यथा—

अहो धन्यो वज्रजङ्घो यदीयौ जामिनन्दनौ। ईदृशाविति जल्पद्भिर्वीक्ष्यमाणौ पुरीजनैः ॥२६॥

जग्मतुः स्वगृहं वीरौ भूपवीरैः समावृतौ। प्रणेमतुश्च जानक्याश्चरणौ विश्वपावनौ ॥२७॥ युग्मम् ॥

चुचुम्ब मूर्ध्नि तौ सीता स्नपयन्ती मुदश्रुभिः। रामलक्ष्मणयोस्तुल्यौ भूयास्तमितिचावदत् ॥२८॥

तौ लवाङ्कुशौ कतिचिद्दिनानि मातृसमीपे स्थित्वैकस्मिन्दिने लवाङ्कुशाभ्यां माता सीता पृष्टा–हे मातः सीते! तवाज्ञया रामलक्ष्मणौ पश्यावः। येन त्वमेकाकिनी वने त्यक्ता तस्य पराक्रमं पश्यावः। तयोरेतद्वचनं श्रुत्वा सीताऽपि सद्यो रुदत्येवं जगाद–हे पुत्रौ! युवयोः केयमनर्थेच्छा? हे पुत्रौ! युवयोः पितृपितृव्यौ देवानामपि दुर्जयौ वर्तेते। याभ्यां त्रैलोक्यकण्टको राक्षसपतिः सङ्ग्रामे निहतः। तयोरग्रे के युवाम्? केऽन्ये दैत्या वा दानवा वा मानवा वा? अतो यदि युवयोः पितरं द्रष्टुमुत्कण्ठा वर्तते तर्हि विनीतीभूय पितृपितृव्ययोः पादौ यूयम् प्रणमत। यतः–पूज्ये विनयोऽर्हति। ततस्तावेवमूचाते–हे मातः! तस्मिन्कथं विनयः क्रियते? स त्वावयोः शत्रुः, येन त्वं निर्दोषाऽपि दोषमुत्पाद्य वने त्याजिता, अतो जनकस्याऽपि युद्धाह्वानमानन्दकरं कुलद्वययशस्करं च युज्यते। अतोऽस्माकमाज्ञां देहि। वयं तत्र यास्याम इति कथयित्वा सीतायां रुदत्यामपि स्वयं चेलतुः। तौ लवाङ्कुशौ महासैन्यौ महोत्साहौ रामनगरीं प्रति प्रतस्थाते।

कुठारकुद्दालभृतां सहस्राणि नृणां दश। तयोः पथ्यच्छिदन्वृक्षादिकं क्ष्मां च समां व्यधुः ॥२९॥

क्रमेण मार्गे गच्छतोस्तयोर्लवाङ्कुशयोः सेनानी रामलक्ष्मणयोर्देशान्भञ्जतोर्व्यामार्गं रुद्धा स्थितः। लवाङ्कुशावपि योद्धु-

कामावयोध्यासमीपमागच्छतुः । रामलक्ष्मणावपि विरुद्धं भूरि बलं श्रुत्वा सङ्ग्रामायायोध्यानगरीतो निर्ययतुः । अथ सौमित्रिरूचे-केऽमी मर्तुकामा मम क्रोधानले पतङ्गवद्भवितारः समायाताः ।

इत्युक्त्वा सह रामेण सुग्रीवादिभिरावृतः । युद्धे चचाल सौमित्रिरमित्रध्वान्तभास्करः ॥३०॥

इतश्च नारदाद् भामण्डलभूपतिस्तद् वृत्तान्तं श्रुत्वा सीतासमीपं ससंभ्रमः समागात् । ततो भामण्डलं समागतं दृष्ट्वा सीता साश्रुनयना भामण्डलं प्रत्यूचे-भो बान्धव ! तव भागिनेयौ मम पुत्रौ लवाङ्कुशौ मत्त्यागासहिष्णुत्वाद्रामलक्ष्मणोपरि युद्धाय गतौ वर्त्तेते। भामण्डलेनोक्तम्-हे भगिनि सीते ! रामेण तावदेकमकार्यमविमृश्य कृतं यत्त्वां लोकगिरा च वने त्यक्ता, तथा द्वितीयन्त्वकार्यं पुत्रयोर्वधलक्षणं रभसवशान्मा कार्षीदिति मम मनसि महती चिन्ता वर्तते। अविमृश्य कार्ये कृते पुत्रैः सह सङ्ग्रामे विहिते पश्चाद्रामस्यापि चिन्ता भविष्यति, अत उत्तिष्ठ, आवां लवान्तिके द्रुतं गच्छावः ।

इत्युक्त्वा जानकीमात्मविमानमधिरोप्य च । लवणाङ्कुशयोः स्कन्धावारे भामण्डलो ययौ ॥३१॥

तौ नमश्चक्रतुः सीतां कुमारौ लवणाङ्कुशौ । मातुलोऽयमिति सीताऽऽख्यातं भामण्डलं तथा ॥३२॥

स तौ शिरसि चुम्बित्वा स्वोत्सङ्गमधिरोप्य च । हर्षरोमाञ्चितवपुरित्यूचे गद्गदाक्षरम् ॥३३॥

हे भागिनेयौ तव माता पूर्वं वीरपत्न्यासीत्, साम्प्रतं युवाभ्यां वीरसूर्जाता। कथं भूतौ युवाम् ? यामिनीपतिनिर्मलौ । यद्यपि युवां वीरौ तथा वीरपुत्रौ च वर्तेते तथापि पितृपितृव्याभ्यां रणं मा कुरुथाम् । यतो यस्याग्रे विश्वकण्टको रावणः सङ्ग्रामे न स्थितः । तस्य पुरतः के युवाम् ? केऽन्ये ? के देवाः ? के दानवाः ? किं बहु कथ्यते ? अस्मिन्भरते स कोऽपि नास्ति यो रामलक्ष्मणौ प्रति-

योद्धुं समर्थो भवति । अतो युवां पितृपितृव्याभ्यां रणं मा कुर्पाथाम् । एवं भामण्डलेन स्नेहवशाद्वार्यमाणावपि तावूचतुः–यथा—

ताचूचतुर्मातुलालं स्नेहभीरुतयाऽनया । त्वत्स्वसाऽप्यस्मदम्बेयमूचेऽदः कातरं वचः ॥२४॥

एवं तयोर्ब्रुवाणयोरेव सैन्यानां रामसैनिकैः समं युद्धं प्रवृत्ते संवर्तावर्तदर्शकम् । इतः कुमारावपि युद्धायोत्तस्थाते भामण्डलेन सह । ततो रामलक्ष्मणावपि वानरराक्षससैन्यैः सहितौ लवाङ्कुशैः समं युयुधाते । सुग्रीवाद्या नभश्चरा रामलक्ष्मणाज्ञया युद्ध्यमाना भामण्डलं ददर्श । ततः सुग्रीवाद्यैः पृष्टो भामण्डलः, इमौ लवाङ्कुशौ कौ, कस्य पुत्रौ ? यौ रामलक्ष्मणाभ्यां सार्धं सङ्ग्रामं कुर्वाते । भामण्डलेन यथास्थिते प्रोक्ते हर्षितः सुग्रीवः सीतासमीपं गतः । सीतां नमस्कृत्य पुरः पृथिव्यां न्यपदत् । इतश्च तौ लवणाङ्कुशौ दोष्मन्तौ रामसैन्यं दुद्रुवतुः । यत्र यत्र तौ भ्रेमतुः सिंहसदृशपराक्रमौ, तत्र तत्र तयोः पुरतोऽन्यः कोऽपि स्थातुं नो शक्नोति । एवं संग्रामे भ्रममाणौ न केनापि स्खलितौ, रामसौमित्रिपुरतः समागतौ । तौ प्रेक्ष्य रामसौमित्री परस्परमेवमूचतुः । आवयोर्विद्विपावेतौ कौ कुमारौ कस्य पुत्रकौ । एवं रामसौमित्रिभ्यां चिन्त्यमाने सति श्रीरामं लवणोऽवोचत् । भो राम ! रावणेन तव रणश्रद्धा नापूर्यत । तथा लक्ष्मणं प्रति चाङ्कुशोऽवोचत्–भो लक्ष्मण ! रावणेन तव रणश्रद्धानापूर्यत । एषोऽहं तव रणेच्छां पूरयिष्यामि ।

इत्युक्ते रामसौमित्री द्वौ तौ च लवणाङ्कुशौ । आस्फालयामासतुः स्वं स्वं धनुर्ध्वानभीषणम् ॥२५॥

रामस्यन्दनसारथिः कृतान्तवदनोऽभवत् । लवराजस्य रथसारथिर्वज्रजङ्घोऽभवत् । लक्ष्मणरथस्य सारथिर्विराधोऽभवत् । अङ्कुशरथस्य सारथिः पृथुरभवत् । एवमन्योन्यं महारणं तयोरभवत् । परं केनाऽपि न जितम् , न पराजितम् । ततस्तेऽग्रसारथयश्चतुरो रथान्भृशं भ्रामयामासुः । प्रजह्रुर्विविधं ते च चत्वारो द्वन्द्वयोधिनः ।

विज्ञातज्ञातिसम्बन्धौ सापेक्षौ लवणाङ्कुशौ। युयुधाते निरपेक्षौ त्वज्ञानाद्रामलक्ष्मणौ ॥३६॥

रामलक्ष्मणौ विविधैरायुधैर्युध्वा श्रीरामः कृतान्तवदनं प्रत्याह–भो कृतान्तवदन! शत्रुं प्रति रथं वाहय। कृतान्तवदनेनोक्तम्-स्वामिन्! अमी हयाः खेदं प्राप्ताः। कथंभूता हयाः, लवबाणैर्भृशं विद्धाः। अतोऽमी तुरङ्गाः कशाभिस्ताडिता अपि न च चेलुः। तथा मुद्गरघातप्रहारेण तव रथोऽपि जर्जरतामगमत्। तथैतौ मम दोर्दण्डौ द्विट्काण्डाघातजर्जरौ तावप्यश्वरश्मिं चालयितुमसमर्थौ वर्तेते।

पद्मनाभोऽप्यभाषिष्ट ममापि शिथिलायते। धनुश्चित्रस्थितमिव वज्रावर्तं न कार्यकृत् ॥३७॥

अभून्मुशलरत्नं च वैरिनिर्दलनाक्षमम्। कर्णकण्डनमात्रार्हमेवैतदपि सम्प्रति ॥३८॥

अनेकशोऽङ्कुशीभूतं यद्दुष्टनृपदन्तिनाम्। हलरत्नं तदप्येतदभूद् भूपाटनोचितम् ॥३९॥

तथा विपक्षक्षयकारिणां ममास्त्राणां केयमवस्थाऽऽगता। न ज्ञायते किं भविष्यति। पुनश्चिन्तितं रामेण यथा ममाऽस्त्राणि लवं प्रति मोघीभूतानि तथा लक्ष्मणस्याप्यङ्कुशविषये मोघीभूतानि। अत्रान्तरेऽतितीक्ष्णेनाङ्कुशबाणेन ताडितो लक्ष्मणो मूर्च्छाविधुरो रथोत्सङ्गे न्यपतत्। ततो विराधो लक्ष्मणं रथोत्संगे पतितं दृष्ट्वा रथमयोध्यां प्रत्यचालयत्। तावल्लब्धसंज्ञो लक्ष्मणः साक्षेपं विराधं प्रत्यवोचत्–भो विराध! त्वमयोध्यां प्रति किं रथं प्रेरयसि? यतो रामभ्रातुर्दशरथसूनोरिदमनुचितम्। अतस्त्वं मम रथं तत्रैव प्रापय। यत्र ते मद्वैरिणौ वर्तेते। एषोऽहं यथा तस्य शीर्षं चक्रेणच्छिनद्मि। एवं लक्ष्मणेनोक्ते विराधो रथमङ्कुशं प्रत्यनैषीत्। ततो लक्ष्मणोऽङ्कुशं प्रति सङ्ग्रामसज्जो भूत्वा दधावे। अङ्कुशोऽपि तथैव सज्जो भूत्वा लक्ष्मणं प्रति दधावे। एवं तयोः सङ्ग्रामो बभूव। तस्मिन्सङ्ग्रामे तयोः पुरः स्थातुमन्यः कोऽपि न समर्थः। क्रुद्धो लक्ष्मणोऽङ्कुशं दिव्यशस्त्रैर्युद्ध्वा यावता जेतुं न शक्नोति तावता सुदर्शनचक्रं स्मृ-

तम् । सुदर्शनमपि तत्क्षणादेव करतले समागतम् । अथ लक्ष्मणेन चक्रमागतं दृष्ट्वा किं कृतम् ।

भ्राम्यदर्कभ्रमकरं भ्रमयित्वा च तद्दिवि । क्रुद्धो मुमोच सौमित्रिरङ्कुशायास्खलद्रयम् ॥४०॥

आपतत्ताडयामासानेकशोऽस्त्रैस्तदङ्कुशः । सर्वात्मना लवणोऽपि न तु तत्प्रत्यहन्यत ॥४१॥

वेगेनापत्य तच्चक्रमङ्कुशस्य प्रदक्षिणाम् । कृत्वा लक्ष्मणहस्तेऽगात्पुनर्नीड इवाण्डजः ॥४२॥

तद्भूयो लक्ष्मणोऽमुञ्चत्कृत्वा तद्वत्प्रदक्षिणाम् । पुनस्तत्पाणिमेवागाच्छालां भग्न इव द्विपः ॥४३॥

चिन्तयामासतुश्चैवं विषण्णौ रामलक्ष्मणौ । किं श्रीशार्ङ्गिणावेतौ न त्वावामिह भारते ॥४४॥

अत्रान्तरे नारदर्षिः सिद्धार्थेन समं तत्राऽऽगत्य खिन्नं रामलक्ष्मणमेवमवोचत्–भो रामलक्ष्मणौ ! युवयोर्हर्षस्थाने किं विषादः ? यतः पुत्रात्पराजयो वंशोद्योतनाय कस्य न स्यात् ? सीताकुक्षिसमुत्पन्नौ श्रीरामपुत्रौ लवणाङ्कुशौ युवां द्रष्टुमागतौ युद्धव्याजेन न तु अरी । अत्रेदमभिज्ञानं यच्चक्रं गोत्रे न प्रभवति यथा भरतमुक्तं चक्रं बाहुबलौ मुधाऽभूत्, तथा लक्ष्मणमुक्तचक्रमङ्कुशे मुधाऽभूत्, एतदेवाभिज्ञानम् ।

त्यागात्प्रभृति सीताया वृत्तान्तं नारदोऽखिलम् । पुत्रयुद्धान्तमाचख्यौ विश्वविस्मयदायकम् ॥४५॥

रामोऽपि विस्मयव्रीडाखेदहर्षसमाकुलः । मुमूर्च्छ संज्ञां लेभे च संसिक्तश्चन्दनाम्भसा ॥४६॥

ततो लक्ष्मणेन सहितो रामो हर्षाञ्चितशरीरो विस्मयस्मेरमानसः साश्रुनयनः पुत्रवात्सल्यपूरितो लवणाङ्कुशयोः समीपं जगाम । ततो विनीतौ लवणाङ्कुशौ श्रीराममायान्तं दृष्ट्वा रथादवतीर्य सन्मुखमागत्य रामलक्ष्मणयोः पादेषु पेततुः । श्रीरामो लवणाङ्कुशावा-

लिङ्ग्य ततो निजोत्सङ्गे निवेश्य मूर्धनि चुम्बन् शोकस्नेहसमाकुल उच्चैरुरोद। ततो लक्ष्मणोऽपि रामोत्सङ्गाल्लवाङ्कुशौ निजोत्सङ्गे निवेश्य शिरसि चुम्बन्बाहुभ्यां समालिङ्ग्याश्रुपूर्णदृक्कुशलं पप्रच्छ। लवाङ्कुशावपि रामलक्ष्मणयोः पादौ पतित्वा सर्वं स्वं कुशलवृत्तान्तमाचख्यौ। शत्रुघ्नोऽपि तथैव लवाङ्कुशावप्यालिलिङ्ग।

अपरेऽपि हि भूपालाः सेनयोरुभयोरपि। प्रमोदन्ते स्म सम्भूय विवाहमिलिताविव ॥४७॥

पुत्रयोर्विक्रमं दृष्ट्वा पित्रा च सह सङ्गमम्। हृष्टा सीता विमानेन पुण्डरीकपुरं ययौ ॥४८॥

सद्दक्षपुत्रलाभेन मुदितौ रामलक्ष्मणौ। जहृषुः स्वामिहर्षेण भूचराः खेचराश्च ते ॥४९॥

भामण्डलनृपाख्यातो वज्रजङ्घनृपोऽपि हि। ननाम रामसौमित्री विनीतश्चिरपत्तिवत् ॥५०॥

रामोऽपि वज्रजङ्घं नृपं बभाषे–भो वज्रजङ्घ! त्वं मम भामण्डलसमोऽसि। येन त्वया मम पुत्रौ वर्द्धितौ। येन त्वया मम सीता रक्षिता। अतस्त्वं मम भ्रातृतुल्योऽसि। इत्युक्त्वा पुष्पकारूढः श्रीरामचन्द्रः सलक्ष्मणोऽर्धासनोपविष्टाभ्यां पुत्राभ्यां सहितोऽयोध्यापुरीं प्राविशत्। उद्ग्रीवपार्ष्णिभिः पौरलोकैर्मार्गे प्रेक्ष्यमाणो नागरिकैः स्तूयमानोऽयोध्यापुरीमगमत्। पुष्पकविमानाच्छ्रीरामो भ्रातृपुत्राभ्यां सहित उत्ततार। ततः श्रीरामो नगर्यामुत्सवं कारयामास। अथ श्रीरामं प्रति लक्ष्मणः, कपीश्वरविभीषणौ, हनुमानङ्गदाद्या विद्याधराः सम्भूय व्यजिज्ञपन्। हे स्वामिन्! हे श्री रामचन्द्र! सीतादेवी परदेशस्थिता त्वयैव रहिता विरहविधुरा कुमाराभ्यां रहिता चातिकष्टेन तिष्ठति। अतः स्वामिन्! तवाज्ञया सीतादेव्यत्रानीयते। तच्छ्रुत्वा किञ्चिद्विचिन्त्य श्रीरामो बभाषे–भो विद्याधरेन्द्राः! जानकी लोकापवादत्वात्कथमत्राऽऽनीयते। यतो लोकापवादो बलवान्, सुखान्तरायकृत्। राम ऊचे–अहं जाने एषा सीता महासती,

मुनिनाप्युक्ता एषा सती, साऽपि स्वं वेत्ति निर्मलम्, परं तथापि लोकापवादो बलवान्। अतः कथमानाय्यते सीता। तदा लवाङ्कुशाभ्यामुक्तम्–राजन्! सीताया दिव्यं देहि दिव्ये कृते शुद्धाशुद्धेति निर्णयो भवेत् सुवर्णवत्। रामेणोक्तम्—

प्रत्यक्षं सर्वलोकानां दिव्यं देवी करोतु सा। शुद्धया च तया सार्द्धं गृहवासोऽस्तु मे पुनः ॥५१॥

ततो रामाज्ञयोत्थाय हनुमान्विभीषणो सुग्रीवोऽन्येऽपि मन्त्रिमहामन्त्र्याद्या विद्याधराः पुष्पकविमान आरुह्य पुण्डरीकपुरे गत्वा सीतां नत्वा कपीश्वर इत्यवोचत्–हे देवि! त्वत्कृते रामेण वयं प्रेषिताः सन्ति, तथा त्वत्कृत इह पुष्पकं विमानं प्रेषितमस्ति। हे देवि सीते! त्वमस्मिन्विमान उपविश। यथा त्वां रामोपान्ते नयामि। सीताऽप्यूचे–अद्यापि मेऽरण्यत्यागजं दुःखं न शाम्यति। ततो भूयो दुःखतरप्रदं रामसमीपं कथं यामि। नत्वा भूयोपि कपीश्वरो बभाषे–हे देवि! तव शुद्धिकृते लवाङ्कुशाभ्यां तव पुत्राभ्यां श्रीरामचन्द्राग्रे दिव्यं स्थापितं वर्तते। अतः स्वामिनि! अस्मिन्विमान आरुह्य श्रीरामोपान्त एहि। तच्छ्रुत्वा शुद्धिकाङ्क्षिणी जानकी विमानमारुरोह, अयोध्यां चाजगाम। ततः सा सीताऽयोध्याबहिरुद्याने माहेन्द्रोदयनाम्नि वने पुष्पकविमानादुत्ततार। तत्र सर्वैर्विद्याधरैः सीता नमस्कृता। लक्ष्मणेनापि नमस्कृता। ततो लक्ष्मण उवाच—हे देवि सीते! निजां पुरीमयोध्यां तथा निजं वेश्म प्रवेशादेव पावय।

सीताऽप्यूचे प्राप्तशुद्धिः प्रवेक्ष्यामि पुरीमिमाम्। गृहं च नान्यथा वत्साऽपवादो जातु शाम्यति ॥५२॥

इति सीताप्रतिज्ञान्तेऽशंसन् रामाय भूभुजः। रामोऽप्युपेत्य वैदेहीमित्यूचे न्यायनिष्ठुरम् ॥५३॥

हे देवि सीते! अहं जाने त्वं शुद्धाऽसि परं तथापि सर्वलोकसमक्षमात्मनः शुद्धये दिव्यं कुरु। स्मित्वा सीतैवमुवाच—हे

नाथ ! त्वत्तोऽपरः कश्चिद्विज्ञो नास्ति, अतः कथ्यते स्वामिन् ! त्वया किं कृतम्, आदौ दण्डं विधायाथ दिव्यादिना मत्परीक्षणं कुरुषे ? सीतावचनं श्रुत्वा रामोऽप्यूचे–हे देवि ! अहं जाने तव कश्चिद्दोषो नास्ति परं लोकोत्पादितदोषस्योत्तारणायेदं मयोच्यते । तच्छ्रुत्वा सीता रामं प्रति जगाद–यथा—

जलमग्निर्घटः कोशो विषं माषाश्च तण्डुलाः । फालस्तुला पुनः स्पर्शो दिव्यानां दशकं जगुः ॥५४॥

जगाद जानकी दिव्यपञ्चकं स्वीकृतं मया । विशामि वह्नौ ज्वलिते भक्षयाम्यथ तण्डुलान् ॥५५॥

तुलां समधिरोहामि तप्तकोशं पिबाम्यहम् । गृह्णाति जिह्वया फालं किं तुभ्यं रोचते वद ॥५६॥ युग्मम् ॥

रामेणोक्तम्–प्रथममग्निदिव्यं कुरु, यथैते लोकाः सत्यासत्यं पश्यन्ति । सीतयोक्तम्–एवं करोमि दिव्यम् । अथ रामः खातिकां कारापयति । तस्या मानं, यथा–

रामेण तउ भणिया पासत्था किंकरा पण उवापी । तिन्नेव य हत्थ सया समचउरंसा समो गाढा ॥५७॥

एवंविधां वापीं कृत्वा खदिराङ्गारैः परिपूर्णां विधाय सीता समाहूता । सीताऽपि समागता स्नानं विधाय वाप्युपकण्ठे समागता ।

अत्रान्तरेन्तरिक्षस्थः सिद्धार्थो नारदोऽप्यथ । लोकः सर्वश्च तुमुलं निषिध्येदमभाषत ॥५८॥

भो भो राघव सीतेयं निश्चयेन सती सती । महासतीति मा कार्षीर्विकल्पमिह जातुचित् ॥५९॥

रामोऽप्युवाच हे लोका मर्यादा कापि नास्ति वः । सङ्कल्प्य दोषं युष्माभिरेवेयं दूषिता पुरा ॥६०॥

भो भो लोकाः ! सीता पूर्वं सदोषा कथमासीत्, सम्प्रति निर्दोषा कथं जाता । युष्माकं वदने काऽप्यर्गला नास्ति । इति

लोकान्निवार्य रामः सीतां प्रत्यूचे–हे सीते ! अस्मिन्ज्वलिताऽनले प्रवेशं कुरु। रामोक्तमिदं श्रुत्वा सीता कृतस्नाना कृतांगविलेपना करौ संयोज्य सूर्याभिमुखीभूय यावदुवाच तावत्किं जातम्। अत्रान्तरे वैताढ्यपर्वत उत्तरश्रेणिभूषणे जयपुरे नगरे हरिविक्रमो नाम राजा राज्यं करोति। तस्य राज्ञो जयमाला नाम राज्ञी। तयोः पुत्रो जयभूषणनामा कुमारः। तेन जयभूषणकुमारेण विद्याधरराजानां पुत्र्यः किरणमण्डलाप्रमुखा अष्टोत्तरशतकन्याः परिणीताः। तस्य कुमारस्य ताभिः कन्याभिः सार्द्धं वैषयिकं सुखं भुञ्जानस्यैवं कालो याति। एकस्मिन्समये किरणमण्डलानाम्नीं निजपत्नीं हेमशिखरनाम्ना मातुलपुत्रेण समं सुप्तां दृष्ट्वा जयभूषणकुमारस्य द्वेषो जातः। तदा जयभूषणकुमारेण निजपत्नी किरणमण्डला यष्टिमुष्ट्यादिना हत्वा गृहान्निर्वासिता। स्वयं कुमारः सद्गुरुसमीपे गत्वा तेन वैराग्येण दिक्षां जगृहे। साऽपि किरणमण्डला कुमारपत्नी गृहान्निर्वासिता ग्रामाद्ग्रामान्तरं भ्रान्त्वा किञ्चिच्छुभध्यानेन मृत्वा विद्युद्दंष्ट्रेति नाम्ना राक्षसी जाता। अथ स जयभूषणो मुनिः कर्मक्षयार्थं विहारं कुर्वन्नयोध्याबहिरुद्यानेऽशोकवृक्षतले कायोत्सर्गेण स्थितः। तावता जयभूषणसाधुपूर्वभवपत्नी किरणमण्डला नाम्नी मुनिं दृष्ट्वा पूर्वभववैरं स्मृत्वा विद्युद्दंष्ट्रा राक्षसी मुनिसमीपे समागता। तया राक्षस्या तस्य मुनेरनेकोपसर्गा विहिताः। तेन मुनिनोपसर्गाः सम्यक्सोढाः, परं धर्मध्यानात्तस्य मनो न चलितम्। घनघातिकर्मक्षयात्तदा तस्य मुनेः केवलज्ञानमुत्पन्नम्। तत्केवलोत्सवकरणाय सौधर्मेन्द्रप्रमुखा देवाः समाजग्मुः। अयोध्याया एकस्मिन्पार्श्वे जयभूषणमुनेः केवलमहिमोत्सवो देवैः क्रियते। अयोध्याया अन्यस्मिन्पार्श्वे सीतादेव्या दिव्योत्सवः क्रियते। सौधर्मेन्द्रो मनसि चिन्तयति। अहो अहो अकार्यं क्रियते। यल्लोकापवादेन सीता वह्नौ प्रवेक्ष्यति, तदस्याः साहाय्यं करोमीति विचिन्त्य हरिणैगमेपिपदात्यनीकपतिं सीतासाहाय्यकृते प्रेषयामास। हरिणैगमेषी सीतादिव्योत्सवे गतः। स्वयमिन्द्रः केवल्युत्सवे गतः। अथ रामाज्ञया सीता वह्निसमीपे

गता। रामश्चिन्तयति।

ज्वालाकरालं तं प्रेक्ष्य रामो दध्याविदं हृदि। अहो अत्यन्तविषमं किं ममेदमुपस्थितम् ॥६१॥

इयं महासती निःशंकाऽग्नौ प्रवेक्ष्यति। पश्चाज्ज्ञायते किं भविष्यति। यतो दिव्यस्य दैवस्य च प्रायेण विषमा गतिः। एवं रामेण चिन्तिते सति सीता देवान्गुरूंश्च स्मृत्वैवमुवाच–हे लोकाः! हे लोकपालाः! यूयं मद्वचः शृण्वन्तु। यदहं रामादन्यं पुरुषं मनसा वाचा कायेनाभ्यलपम्, तदाग्निर्मां दहतु। अन्यथा सुखस्पर्शो भवतु, तथाऽग्नेः स्थाने जलं भवतु। यतः—

मनसि वचसि काये जागरे स्वप्नमार्गे, यदि मम पतिभावो राघवादन्यपुंसि।
तदिह दह ममाङ्गं पावकं पावकेदं, सुकृतकुकृतभाजां येन लोकैकसाक्षी ॥६२॥

सीतया दुरपवादभीतया पावके स्वतनुराहुतीकृता।
पावकस्तु जलतां जगाम यत्तच्छीलमहिमा विजृम्भितम् ॥६३॥

तत्सीताशीलमाहात्म्यतोऽग्निस्थाने जलं जातम्, जलोपरि कमलं, कमलोपरि सिंहासनं, सिंहासनोपरि सीतोपविष्टा शोभते। यथा पद्मसरसि पद्मे पद्मा शुशुभे। हरिप्रेषितहरिणेगमेषिदेवप्रभावतस्तद्वाप्या जलं वारिधिवेलेवोच्छलद्ववृधे।

विद्याधरा भयोद्भ्रान्ताः समुत्पत्त्येयुरम्बरे। भूचराश्चुक्रुशुश्चैवं पाहि सीते महासति! ॥६४॥
सीताऽप्युत्तीर्णमम्भस्तत्स्वपाणिभ्यामचालयत्। पुनर्वापीप्रमाणं तदभूत्तस्याः प्रभावतः ॥६५॥

ततः सा जलपूर्णा दिव्यभूमिर्देवैः कृता रत्नबद्धोभयतटा वापी बभूव। कथंभूता वापी–कुमुदैः पद्मैः पुण्डरीकैर्निरन्तरा

पुनरास्फलद्वीचिनिचयमणिसोपानबन्धुरा। सीताशीलप्रशंसिनो नारदाद्या मुनयो जहृषुः, तथा सुराः सन्तुष्टाः सीतोपरि पुष्पवृष्टिं व्यधुः।

अहो शीलमहोशीलं रामपत्न्या यशस्करम्। इति लोकप्रघोषोऽभूद्रोदःकुक्षिम्भरिः क्षणात् ॥६६॥

तन्मातुः प्रभावं दृष्ट्वा लवाङ्कुशौ मुदितौ, हंसाविव तरन्तौ मातुः समीपमुपेयतुः। सीताऽपि तौ पुत्रौ मूर्ध्न्याऽऽघ्रायोभयोः पार्श्वे निवेश्य पुनः पुनः सौम्यदृष्ट्या विलोकयामास।

गत्वा सौमित्रिशत्रुघ्नभामण्डलविभीषणाः। सुग्रीवाद्याश्च वैदेहीं नमश्चक्रुः सभक्तयः ॥६७॥

तच्छ्रीरामः सीतां प्रत्युवाच-हे सीते! त्वं मया लोकोक्त्या परित्यक्तासि तन्ममापराधं सहस्व। इदं पुष्पकं विमानमध्यास्व। मया सहिता स्ववेश्मनि चल। अत्र कश्चिन्मम दोषो नास्ति। अथ—

सीताऽप्यूचे न ते दोषो न च लोकस्य कश्चन। न चान्यस्यापि कस्यापि किन्तु मत्पूर्वकर्मणाम् ॥६८॥

तथा-मा गा विषादमुचनं भुवनैकवीर! निष्कारणं च गुणिना किमियं मयेति।
दैवेन केनचिदहं दहने निरस्ता निस्सारिता तु भवतैव हृदिस्थितेन ॥६९॥

पुनः सीता प्रोचे—

श्रीरामचन्द्र! भवदीयहृदालवाले, नाहं स्थिता शुचिगुणामृतपूरितेऽपि।
यत्त्वं पुनर्मम वियोगदवाग्निदीप्ते, चित्ते चिरं निवसितोऽसि ततः कृतज्ञः ॥७०॥

तत्सर्वसमक्षं श्रीरामोऽप्योचत्—

तातस्नेहः सती कान्ता पौरुषं पवनात्मजे। भरते भक्तिदोर्वीर्यं सेवा सौमित्रिबान्धवे ॥७१॥

इत्याद्युक्त्वा रामेण पुनः प्रोक्तम्–हे सीते! द्रुतं विमान आरुह्य गृहे यावत्तद्वचनं श्रुत्वा श्रीरामं प्रति सीता प्रोचे–स्वामिन्! जयभूषणो नाम्ना केवल्यस्ति, तत्समीपे गम्यते गत्वा मुनिवन्दनं विधाय ततः स्वेप्सितं करिष्यते। रामेणोक्तमेवम्। ततः श्रीरामो लक्ष्मणसीतादिभिः परिवृतो मुनिवन्दनाय पूर्ववने गतः। तत्र वने मुनिं वन्दित्वा श्रीरामो मुनिपुरतो निषण्णः। मुनिना देशना चक्रे। यथा–

धर्मो जगतः सारः सर्वसुखानां प्रधानहेतुत्वात्। तस्योत्पत्तिर्मनुजाः सारं तेनैव मानुष्यम् ॥७२॥

एवंविधं मानुष्यजन्म लब्ध्वा धर्मे प्रमादो न विधेयः। यतः–

जिअं जलबिन्दुसमं सम्पत्तीओ तरंगलोलाओ। सुविणयसमं च पेम्मं जं जाणिसु तं करिज्जासु ॥७३॥

असरणमरन्ति इन्दा बलदेवा वासुदेव चक्कहरा। ता एयं नाउणं करेह धम्मुयमं तुरियं ॥७४॥

भीसणभयाडवीए एगो जीवो सयावि असहाओ। कम्महं तु अ भवालिं आहिंडइ विविहरुवेहिं ॥७५॥

अत्थो घरे नियत्तइ बन्धवसत्थो मसाणभूमिए। एगोअ जाइ जीवो न किंचि अत्थेण सयणेण ॥७६॥

दीहजन्ति वलन्ति न हु जिउं गिरि निज्झरणाइं। नहु अ लगिं जिउ धम्मकरी सुह न वि तु कांइ ॥७७॥

जस्सत्थि मच्चुणा सक्खं जस्स अत्थि पलायणं। जो जाणे न मरिस्सामि सो हु कंखे सुहेसिआ ॥७८॥

इत्यादि धर्मदेशनां श्रुत्वा सीता चिन्तयति–धिक् संसारमिदम्॥

जम्मदुःखं जरा दुःखं रोगा अ मरणाणि अ। अहो दुःखो भूसंसारो जत्थ किसन्ति जंतूणो ॥७९॥

अहो अस्मिन्संसारे मया कानि कानि दुःखानि न सोढानि ? अतः संसारं त्यजामि। धिक् संसारसौख्यम्। यत्र स्वल्पं सुखं प्रचुरं दुःखम्। अतः प्रव्रज्यां ग्रहीष्यामीति विचिन्त्य सीतया किं कृतम् ? यत्कृतं तदाह—

इत्युक्त्वा मैथिली केशानुच्चखान स्वमुष्टिना। रामस्य चार्पयामास शक्रस्येव जिनेश्वरः ॥८०॥
सद्यो मुमूर्च्छ काकुत्स्थो नोत्तस्थौ यावदेष च। तावत्सीता ययौ साधुजयभूषणसन्निधौ ॥८१॥

केवली स जयभूषणो मुनिर्मैथिलीं विधिवदप्यदीक्षयत्।
सुप्रभाख्यगणिनीपरिच्छदे तां चकार च तपःपरायणाम् ॥८२॥

इति श्रीमत्तपागच्छे भट्टारक श्रीहीरविजयसूरिराज्ये आचार्यश्रीविजयसेनसूरि यौवराज्ये पण्डितदेवविजय-गणिविरचिते श्रीरामचरित्रे गद्यबन्धे सीताशुद्धिव्रतग्रहणो नाम नवमः सर्गः ॥

## ॥ अथ दशमः सर्गः ॥

अथ भीतां सीतां प्रव्रजितां दृष्ट्वा श्रीरामः प्रेमपरवशो मूर्च्छां गतः। शीतोपचारादिभिः पुनर्लब्धचैतन्यो व्यलपदिति हे सीते! त्वं मां त्यक्त्वा क्व गताऽसि? भो बान्धवलक्ष्मण क्वास्ति सीता? लक्ष्मणेनोक्तम्—

सीतां यथा दोषभीतोऽत्याक्षीस्त्वं न्यायनैष्ठिकः। भवभीता स्वार्थनिष्ठा तथा सा सर्वमत्यजत् ॥८३॥

हे रामचन्द्र! एषा सीता या जयभूषणमुनिसन्निधौ दीक्षां लात्वा सुखं तिष्ठति। तच्छ्रुत्वा श्रीरामः प्रकृतिमालम्ब्योवाच–हे प्रिये। त्वं धन्या, त्वं कृतपुण्या, सुलब्धं तव मानुष्यं जन्म, येन त्वया जयभूषणसमीपे दीक्षाऽङ्गीकृता। इत्यादि प्रशंसां कृत्वा श्रीरामो जयभूषणकेवलिनं पप्रच्छ–हे भगवन्! अहं भव्यो वाऽभव्यः? जयभूषणकेवलिनोक्तम्—त्वं भव्योऽसि। अस्मिन्नेव भवे समुत्पन्नकेवलो मोक्षं यास्यसि।

रामः पप्रच्छ भूयोऽपि मोक्षः प्रव्रज्यया भवेत्। सर्वत्यागेन सा किन्तु लक्ष्मणो दुस्त्यजो मम ॥८४॥

मुनिराख्यदवश्यं ते भोक्तव्या बलसम्पदः। तदन्ते त्यक्तसङ्गः सन्प्रव्रज्य शिवमाप्स्यसि ॥८५॥

अथ विभीषणो मुनिं नत्वैवमपृच्छत्–हे भगवन्! केन प्राग्जन्मकर्मणा रावणः सीतां जहार? तथा लक्ष्मणः सङ्ग्रामे रावणमहनत्? तथा सुग्रीवो भामण्डलस्तथैमौ लवणाङ्कुशावहं च केन कर्मणा श्रीरामेऽत्यन्तभक्ता वर्तामहे। भगवाञ्जयभूषणकेवल्याह–

हे विभीषण ! यत्त्वयापृष्टं तद्वृत्तान्तं सावधानो भूत्वा शृणु—यथा दक्षिणभरते क्षेमपुरे नगरे नयनदत्तो वणिगस्ति । तस्य सुनन्दा नाम्नी पत्न्यस्ति । तयोःपुत्रौ धनदत्तवसुदत्तनामानावभूताम् । तयोर्मित्रं याज्ञवल्क्यो नाम विप्रोस्ति । तस्मिन्नगरे सागरदत्तनामा वणिगस्ति । तस्य पत्नी रत्नप्रभानाम्न्यस्ति । तयोः पुत्रो गुणधरो नाम । तयोः पुत्री गुणवती नाम्नी । सा गुणवती कन्या पित्रा सागरदत्तेन नयनदत्तवणिक्पुत्राय धनदत्ताय दत्ता । रत्नप्रभया मात्रा पुत्री गुणवती तस्मिन्नगरवासिने कस्मैचिच्छ्रीकान्तनाम्ने पुत्रायार्थलोभतो दत्ता । तत्स्वरूपं याज्ञवल्क्यविप्रेण ज्ञातं, तेन गत्वा स्वमित्रधनदत्तवसुदत्ताग्रे निवेदितम् । वसुदत्तो रात्रौ गत्वा श्रीकान्तमवधीत् । श्रीकान्तेनाऽपि खड्गेन हत्वा वसुदत्तो निपातितः । तावुभावपि विन्ध्याटव्यां कुरङ्गकावभूताम् । गुणवत्यप्यपरिणीतैव मृता । तत्रैव वने मृग्यभवत् । तस्या मृग्याः कृते तत्राऽपि युद्ध्वा द्वावपि तथैव मृत्वा वनमहिषौ जातौ । एवं भूयांसं भवं भ्रेमतुः । तदानीं धनदत्तोऽपि स्वभ्रातृवधपीडितोऽटन् निशि क्षुधितः साधून्ददर्श । साधून्दृष्ट्वा तेभ्यः साधुभ्यो भोजनं ययाचे । तेष्वेको मुनिरब्रवीत् । साधूनां भक्तपानादिसङ्ग्रहाभावात् दिवाऽपि हि गृहस्थेभ्यो दानं दातुं न युक्तम् । तर्हि निशायान्तु नो दीयते । तथाऽपि रात्रौ भोक्तुं तथा पानं पातुं नोचितम् । यतो निशायां जीवसंसक्तिर्भक्तपानादौ सम्भाव्यते । तथा रात्रिभोजने महान्दोषोऽस्ति । यतः—

घोरान्धकाररुद्धाक्षैः पतन्तो यत्र जन्तवः । नैव भोज्ये निरीक्ष्यन्ते न तु भुञ्जीत को निशि ॥८६॥
मेधां पिपीलिका हन्ति यूका कुर्याज्जलोदरम् । कुरुते मक्षिका वान्तिं कुष्ठरोगं च कोलिकः ॥८७॥
कण्टको दारुखण्डं च वितनोति गलव्यथाम् । व्यञ्जनान्तर्निपतितस्तालु विध्यति वृश्चिकः ॥८८॥

विलग्नश्च गले वालः स्वरभङ्गाय जायते। इत्यादयो दृष्टदोषाः सर्वेषां निशि भोजने ॥८९॥
नैवाहुति र्न च स्नानं न श्राद्धं देवतार्चनम्। दानं वा विहितं रात्रौ भोजनं तु विशेषतः ॥९०॥

इत्याद्युक्त्वा मुनिना धनदत्तो बोधितः। श्रावकीभूय क्रमेणायुःपर्यन्ते मृत्वा सौधर्मदेवलोके त्रिदशोऽभवत्। आयुःपर्यन्ते सौधर्मदेवलोकाच्च्युत्वा महापुरे नगरे मेरुनन्दनस्य व्यवहारिणो धारिण्यां सहचारिण्यां पद्मरुचिर्नाम्ना श्रेष्ठिपुत्रो जातः। परं साधुसंसर्गाच्छ्रावकोऽभवत्। स पद्मरुचिरेकस्मिन्दिने वस्त्राद्यलंकृतोऽश्वारूढः स्वेच्छया गोकुलं गच्छन् मार्गे पतितं मरणतत्परं वृषभमद्राक्षीत्। दृष्ट्वा पद्मरुचिः श्रेष्ठिपुत्रोऽश्वादवरुह्य तस्य वृषभस्य कर्णमूले पञ्चपरमेष्ठिनमस्कारं ददौ। नमस्कारप्रभावात्तन्नगराधिपश्रीदत्तराजस्य पुत्रोऽभवद् वृषभध्वजो नाम्ना। स वृषभध्वजकुमारः स्वयं नगरे भ्रमन्नन्यदा तां जरद्वृषभभुवं दृष्ट्वा स कुमारो जातिस्मरणं लेभे। स वृषभध्वजकुमारस्तत्र वृषभस्थानभूम्यां श्रीऋषभदेवचैत्यमकारयत्। तच्चैत्यैकभित्तौ मर्तुकामं वृषभं, तत्कर्णान्ते नमस्कारदायिनं पुरुषं, तत्समीपे सपर्याणमेकं तुरङ्गममालेखयामास। आलेखयित्वाऽऽरक्षकाः पुरुषाः स्थापिताः। तेषामुक्तं च—य एनमालेख्यं भित्तावालेखितचित्रं विदन्पुनः पुनर्विलोकयति स शीघ्रमत्रानेतव्यः। इत्युक्त्वा वृषभध्वजकुमारः स्वगृहं गतः। स्वगृहे सुखान्यनुभवन्नास्ते। एकस्मिन्दिने श्रीऋषभदेवचैत्ये देववन्दनाय पद्मरुचिः श्रेष्ठिपुत्रस्तत्राऽऽगतः। तत्र देवान् नत्वा स्तुत्वा स्वस्थमना यावता चैत्यं विलोकयति तावता चैत्यभित्तौ तच्चित्रं दृष्टम्। दृष्ट्वा विस्मितमनाश्चिन्तयति, किमेतत्? वारंवारं मेषोन्मेषं यथास्यात्तथा विलोक्यमानं दृष्ट्वाऽऽरक्षकैः पृष्टम्—भो महाभाग! त्वमेतस्य स्वरूपं किं वेत्सि? श्रेष्ठिनोक्तम्—किञ्चिद्वेद्मि। आरक्षकैर्गत्वा राजकुमाराग्रे विज्ञप्तम्। वृषभध्वजकुमारेणागत्य श्रेष्ठिपुत्रः पद्मरुचिः पृष्टः। भो पद्मरुचे! त्वं किं वेत्सि?

किमेतच्चित्रम् ? श्रेष्ठिपुत्रेणोक्तम्–हे कुमारेन्द्र ! शृणु–एकस्मिन्दिनेऽस्यां भूम्यामहं तुरङ्गारूढो यावद्यामि तावन्मयैषो जरद्वृषभो मार्गे पतितो दृष्टः। तद् दृष्ट्वा मम करुणा जाता। ततोऽश्वादुत्तीर्य मया वृषभकर्णे नमस्कारो दत्तः, तद्रूपमिदम्। यथैषो वृषभो, एषोऽहमेवः मत्पार्श्वे ममाश्वः। तच्छ्रुत्वा कुमारेणोक्तम्–एषोऽहं जरद्गवः। तव नमस्कारप्रभावेण मृत्वा वृषभध्वजनामा राजपुत्रो जातः। समुत्पन्नजातिस्मरणेन मया तवोक्तं सर्वं दृष्टं करतलामलकवत्। कुमारेणोक्तम्—

सर्वथा त्वं गुरुः स्वामी दैवतं चासि मे खलु। भुङ्क्ष्व राज्यमिदं प्राज्यं त्वयाऽयत्तं ममाऽपि यत् ॥९१॥

इत्युक्त्वा पद्मरुचिना सहैव वृषभध्वजः। विजहाराकृतद्वैधः पालयञ्छ्रावकव्रतम् ॥ ९२ ॥

श्रावकत्वं चिरं सम्यक् पालयित्वा विपद्य च। ईशानकल्पे जज्ञाते तौ देवौ परमर्द्धिकौ ॥ ९३ ॥

इतश्च पद्मरुचिश्रेष्ठिपुत्रजीवस्ततश्च्युत्वा वैताढ्यपर्वते। नंदावर्तनगरे नन्दीश्वरराजस्य कनकाभानाम्न्यां पट्टराज्यां पुत्रो जातो नयनानन्दनामा। क्रमेण राज्यं भुक्त्वा परिव्रज्यां लात्वा माहेन्द्रे त्रिदशोऽभवत्। ततश्च्युत्वा प्राग्विदेहेषु क्षेमायां नगर्यां विपुलवाहनस्य राज्ञः पद्मावत्यां पत्न्यां श्रीचन्द्रनामा कुमारोऽभूत्। क्रमेण राज्यं भुक्त्वाऽन्ते परिव्रज्यां गृहीत्वाऽनशनेन मृत्वा ब्रह्मलोके इन्द्रोऽभूत्। ततश्च्युत्वा त्वं बलभद्रो जातः पद्मनामा महाबलः रामेत्यपरनामा। वृषभध्वजराजपुत्रजीव एष वालिभ्राता सुग्रीवनामाऽभूत्।

श्रीकान्तजीवो वसुदत्तेन हतो मृत्वा भवं भ्रान्त्वा मृणालकन्दपत्तने वज्रकम्बुराजस्य हेमवतीराज्ञीकुक्ष्युद्भवः शम्भुनामा राजपुत्रो जातः। वसुदत्तोऽपि श्रीकान्तेन हतो मृत्वा भवं भ्रान्त्वा तत्रैव नगरे तस्यैव राज्ञो विजयस्य पुरोधसो रत्नचुडाख्यायाः पत्न्याः

कुक्षौ पुत्रत्वेनोत्पन्नः श्रीभूतिनाम्ना पुरोहितपुत्रो जातः।

गुणवत्यपि भवं भ्रान्त्वा श्रीभूतेर्नन्दना जाता सरस्वतीकुक्षीसम्भवा वेगवती नाम्नी। सा वेगवती पुरोहितपुत्र्युद्यौवनैकस्मिन्दिने प्रतिमास्थ मुनिं दृष्ट्वा जनैः पूज्यमानं स्तूयमानं विलोक्य सोपहासमदोऽवदत्–अहोऽयं साधुर्महेलया सार्धं स्वयं क्रीडन्मया दृष्टः। भो जनाः! यूयममुं मुनिं कथं वन्दध्वम्? तद्वचनं श्रुत्वा सर्वेऽपि लोको मन्दादरो जातः। सोऽपि ऋषिस्तज्ज्ञात्वैवमभिग्रहमग्रहीत् यावत्कालमयं कलंको नोत्तरिष्यति तावत्कालं मे कायोत्सर्गः। इत्यभिग्रहं गृहीत्वा कायोत्सर्गेणाऽऽस्थात्। ततः शासनदेवतया देवप्रभावाद्वेगवतीमुखं श्यामं कृतं भ्रमरपत्रवर्णाभम्। श्याममुखं दृष्ट्वा पित्रा पृष्टम्–हे पुत्रि! तव मुखं श्यामं किम्? केन हेतुनेदृशं भयंकर जातम्? तयोक्तम्–साधुनिन्दातो ममेदृशं मुखं जातम्। पित्रा पुत्री भृशं निर्भर्त्सिता–हे पुत्रि! त्वया किं कृतम्? साधुनिन्दा कृता, साधुनिन्दातस्तव महादुःखं भविष्यति। पुनरुक्तमतस्त्वं याहि साधुसमीपे। गत्वा सर्वलोकसमक्षं कथय–यन्मया साधोः कलङ्को दत्तोऽयं निष्कलङ्कः पुण्यवान् धर्ममूर्तिश्च। मया पापिन्याऽस्य कलङ्कोऽदायि। तत्प्रभावादहं श्याममुखी जाता। तच्छ्रुत्वा साऽपि तत्र गता, गत्वा तथैवोक्तम्–यथा पित्रा शिक्षितम्। प्रार्थयच्च–स्वामिन्! मयि कृपां विधेहि सौम्यदृशा विलोक्य कायोत्सर्गं पारय। इति श्रुत्वा मुनिना कायोत्सर्गं पारयित्वा तस्या वेगवत्या धर्माशीर्दत्ता। सा मुनिं नत्वा स्वस्थचित्ता श्राद्धधर्मं गृहीत्वा श्राविका भूत्वा स्वगृहं गता। लोकोऽपि तथैव तं मुनिं पूजयति। मुनिरपि विहरन्नन्यत्र ययौ।

अथ तां वेगवतीं विप्रपुत्रीमुद्यौवनां दृष्ट्वा शम्भुभूपतिर्ययाचे। वेगवतीपिता श्रीभूती राजानं प्रत्युवाच–अहं मम पुत्रीं तुभ्यं मिथ्यादृशे न दास्ये। राज्ञोक्तम्–अहं बलात्कारेणादास्ये। इत्युक्त्वा शम्भुना श्रीभूतिं निहत्य बलात्कारेण वेगवतीं श्रीभूतिपुत्रीं

लात्वा गान्धर्वविवाहेन वाहयित्वा तां वेगवतीं बलात्कारेण बुभुजे । तया वेगवत्या राज्ञः शापोऽदायि अहं भवान्तरे ते वधाय भूयासम् । तद्वचनं श्रुत्वा सा वेगवती शम्भुनाऽपि विसृष्टा, याहि मम सकाशाद्यत्र तव रोचते तत्र याहि । सा वेगवती राज्ञा विसृष्टा साधुसमीपे गत्वा दीक्षां लात्वा पूर्णायुः ब्रह्मदेवलोके गता ।

ततश्च्युत्वा शम्भुजीवरक्षोनाथस्य मृत्यवे । निदानवशतो जज्ञे सीतेय जनकात्मजा ॥ ९४ ॥

पूर्वभवे सुदर्शनमुनेर्वेगवत्या विप्रपुत्र्या कलङ्कोऽदायि तेन पापेनास्याः सीताया लोकेन कलङ्कोऽधिरोपितः ।

यतः–यो भूतेष्वभयं दद्याद् भूतेभ्यस्तस्य नो भयम् । यादृग्वितीर्यते दानं तादृगासाद्यते फलम् ॥ ९५ ॥

तिव्वयरेउपउसो सयगुणियोणिउ सयसहस्स कोडिगुणो । कोडाकोडिगुणो वा हुज्ज विवागो बहुतरो वा

अथ शम्भुराजस्य जीवो भवं भ्रान्त्वा क्षितिप्रतिष्ठे नगरे कुशध्वजनामा विप्रस्तस्य सावित्री पत्नी । तस्याः कुक्षौ प्रभासनामा पुत्रोऽभूत् । स प्रभासविप्रो श्रीविजयसेनसूरिपादान्ते प्रव्रजितः क्रमेण परीषहान्सहमानस्तीव्रं तपस्तेपे । एकस्मिन्दिने प्रभासमुनिवरः सम्मेतशिखरयात्रां कर्तुकामान्विद्याधरान्विद्याधरनरेश्वरान्कनकप्रभनामानं चाद्राक्षीत् दृष्ट्वा निदानमकरोत्–यथाऽनेन तपसेदृशो विद्याधरो भूयासम् । ततोऽनशनं विधाय मृत्वा तृतीयकल्प उत्पेदे ।

ततश्च्युत्वा रावणोऽभूत्खेचरेन्द्रस्तवाग्रजः । कनकप्रभऋद्धेर्यो निदानमकरोत्तदा ॥ ९७ ॥

धनदत्तवसुदत्तमित्रं यस्तु द्विजोऽभवत् । याज्ञवल्क्यो भवं भ्रान्त्वा त्वमभूः स विभीषणः ॥ ९८ ॥

अथ श्रीभूतिविप्रः शम्भुराजेन हतो मृत्वा शुभध्यानाद्देवलोकं गतः । ततश्च्युत्वा सुप्रतिष्ठपुरे वसुनामा विद्याधरोऽजनि । स व-

सुनामा विद्याधर एकस्मिन्दिने पुण्डरीके विजये पुण्डरीकिण्यां नगर्यां त्रिभुवनानन्दचक्रिणोऽनङ्गसुन्दरीकन्यां जहार। तवश्चक्रिणा प्रेषितैर्विद्याधरैः सार्धं वसुविद्याधरो यावता युद्धं करोति तावताऽनङ्गसुन्दरी विमानादवरुह्यैकस्मिन्वननिकुञ्जे प्रविष्टा। ते विद्याधराश्चक्रवर्तिसेवका वसुविद्याधरमेकाकिनं दृष्ट्वा पश्चाद्वलित्वा स्वस्थानं गताः। तदा वसुविद्याधरोऽनङ्गसुन्दरीमलब्ध्वा तद्वैराग्याद्व्रतमाददे। चिरकालं तीव्रं तपस्तप्त्वा प्राणान्तेऽनशनं कृत्वा निदानमकरोत्। यथा अस्य तपसः प्रभावतो भवान्तर एषाऽनङ्गसुन्दरी मम पत्नी भूयादितिनिदानं कृत्वा स्वर्गं ययौ। ततश्च्युत्वाऽयं लक्ष्मणोऽजायत। अनङ्गसुन्दर्यपि साध्वीसमीपे दीक्षां लात्वाऽत्युग्राणि एकावली–कनकावली–श्रेणितपः–घनतपः–आचाम्लवर्धमानप्रभृत्यनेकतपांसि तेपे। अन्ते विहितानशना पर्वतगुहायां सुप्ताऽजगरेण जग्रसे। तथापि समाधिना मृत्वेशानदेवलोके देवोऽभूत्। ततश्च्युत्वा विशल्या भूता। लक्ष्मणस्य महिष्यसौ। इति लक्ष्मणविशल्यापट्टराज्योः पूर्वभवकथा॥

योऽभूद् गुणवतीभ्राता नाम्ना गुणधरः स तु। भवं भ्रान्त्वाऽभवद्राजपुत्रः कुण्डलमण्डितः ॥९९॥
श्रावकत्वं पालयित्वा चिराय च विपद्य सः। सीतासोदर एषोऽभूद् भामण्डलनरेश्वरः ॥९००॥
इतोऽभूतां च काकन्द्यां वामदेवद्विजन्मनः। श्यामलाकुक्षिजौ पुत्रौ वसुनन्दसुनन्दनौ ॥१॥

एकदा तयोर्गेहे मासोपवासी कश्चिन्मुनिः समाययौ। ताभ्यां वसुनन्दसुनन्दाभ्यां प्रतिलाभितः। मृत्वा तद्दानधर्मेणोत्तरकुरुषु द्वावपि भ्रातरौ जातौ। ततोऽपि मृत्वाऽऽयुःपर्यन्ते सौधर्मे देवौ जातौ। ततोऽपि च्युत्वा काकन्द्यां नगर्यां रतिवर्धनभूपतेः सुदर्शनापट्टराज्ञीकुक्ष्युद्भवौ पुत्रौ जातौ प्रियङ्करशुभंकरनामानौ। तत्र पित्रार्पितं राज्यं भुक्त्वा दीक्षां लात्वा बहूनि तपांसि तप्त्वाऽऽयुःपर्य-

न्तेऽनशनेन मृत्वा ग्रैवेयके देवौ भूत्वा युवां लवणाङ्कुशौ जातौ ।

सुदर्शना तयोः पूर्वभवमाता भवं चिरम् । भ्रान्त्वाऽभूदेष सिद्धार्थोऽध्यापको रामपुत्रयोः ॥२॥

एवं जयभूषणमुनिवचनं श्रुत्वा बहवो लोकाः संवेगमापन्नाः । तदैव कृतान्तवदनो रामसेनानीः प्राव्रजत् । अथ श्रीराम उत्थाय सीतासमीपं गत्वा चेतस्येवं चिन्तयामास—

असौ शिरीषमृद्वङ्गी राजपुत्री मम प्रिया । सीता शीतातपक्लेशं कथं नाम सहिष्यते ॥३॥

इदं संयमभारं च सर्वभारातिशायिनम् । उद्वक्ष्यति कथं नाम हृदयेनापि दुर्वहम् ॥४॥

यद्वा सतीव्रतं यस्या नभंक्तुं रावणोऽप्यलम् । सा निर्व्यूढप्रतिज्ञैवं भाविनी संयमेऽपि हि ॥५॥

एवं विचार्य श्रीरामचन्द्रः सीतां ववन्दे । तथाऽन्येऽपि राजानो लक्ष्मणप्रमुखाः सीतां वन्दित्वा पुनः पुनः प्रशशंसुः । सर्वेऽपि सीतां नत्वाऽयोध्यां पुरीं ययुः । सीता तथा कृतान्तवदनो मुनिश्च द्वावप्युग्रं तपस्तेपाते । एवंविधमुग्रं तपस्तप्त्वा कृतान्तवदनो मृत्वा ब्रह्मलोके ययौ । सीताऽपि षष्ठिं वर्षाणि विविधं तपस्तप्त्वैकमासमनशनं कृत्वाऽन्ते मृत्वा द्वाविंशतिसागरायुःस्थित्याऽच्युते न्द्रत्वेनोत्पन्ना ।

इतश्च वैताढ्ये शैले काञ्चनपुरे नगरे कनकरथो नाम विद्याधरेन्द्रोऽस्ति । तस्य राज्ञो द्वे कन्ये अभूताम् । एका मन्दाकिनी, द्वितीया चन्द्रमुखी । पित्रा तयोः स्वयंवरः कृतः । तस्मिन्स्वयंवरेऽनेके राजानः समाहूताः । तथा रामलक्ष्मणादयः । तथा रामचन्द्रस्य पुत्रौ लवाङ्कुशावप्याकारितौ । तथा लक्ष्मणपुत्रा अप्याकारिताः सन्ति । श्रीधरादिकं सार्धं द्विशतं लक्ष्मणपुत्राणां समागतम् । सर्वे

राजान उच्चेषु मञ्चेषु स्थिताः शुशुभिरे । तावत्सुखासनासीने द्वे अपि कुमारिके समागते तस्मिन्स्वयंवरे । मन्दाकिन्या लवो वव्रे, चन्द्रमुख्याऽङ्कुशो वव्रे । द्वाभ्यां कन्यकाभ्यां लवाङ्कुशौ वृतौ दृष्ट्वा लक्ष्मणपुत्राणां सार्धं द्विशतं मत्सरतो लवाङ्कुशौ हन्तुं दधावे । तावता तयोः प्रधानेनोक्तम्–भो कुमाराः ! यथा रामलक्ष्मणयोर्न भेदस्तथा युष्माकममीषां च न भेदः । यूयं किमर्थं युध्यध्वे, युवयोर्युद्धं न युक्तमेवं उक्त्वा सर्वेऽपि युद्धान्निषिद्धाः । ते लक्ष्मणपुत्रा लज्जिताः स्वं निनिन्दुः । ते सर्वेऽपि संवेगमापन्नाः पित्राऽनुज्ञाता महाबलमुनिपादान्ते व्रतं जगृहुः । अथ तौ लवणाङ्कुशौ कृतोद्वाहौ सीरीशार्ङ्गिभ्यां सहायोध्यां पुरीमियतुः ।

इतश्चैकस्मिन्दिने हर्म्यमूर्ध्नि स्थितो भामण्डलश्चिन्तयति–मया श्रेणिद्वयस्य राज्यं कृतं तथा मयाऽनेके विद्याधरराजानो वशीकृताः । अथ दीक्षादानेनात्मानं वशीकरोमि तदा वरम् । किमन्यैर्दमितैः । यतः—

खरकरहतुरयवसभा मत्तगयंदावि नामदम्मंती । इक्को नवरि न दम्मइ निरंकुसो अप्पणो अप्पा ॥६॥

वर मे अप्पा दंतो संजमेणतवेण य । माहंवरेहिं दम्मंतो बंधणेहिं वहेहिअ ॥७॥

अप्पावेव दमेयव्वो अप्पाहु खलु दुद्दमो । अप्पा दंतो सुही होइ अस्सिंलोए परत्थय ॥८॥

एवं भावनां भावयतो भामण्डलस्य मूर्ध्न्याकाशतो विद्युत्पपात । विद्युत्पातेन मृत्वा देवकुरुक्षेत्रे युग्मत्वेनोत्पन्नः ।

इतश्च हनुमान् चैत्रपूर्णिमास्यां चैत्यवन्दनहेतवे मेरुपर्वतं गतः । तन्मेरुपर्वते मार्गे सूर्यमस्तमृतमवेक्ष्य विचिन्तयति–धिगशाश्वतं सुखं यतः—

धि धि धि संसारे देवामरिउण जन्ति रि होई । मरिउण रायराया परिपव्वई नरयजालाए ॥९॥

सा नत्थि कला तं नत्थि ओसहं तं नत्थि किंपि विन्नाणम् । जेण धरिज्जई काया खज्जन्ति कालसप्पेण ॥१०॥
जस्सत्थि मच्चुणा सक्खं जम्म अत्थि पलायणं । जो जाणि न मरिस्सामि सो हु कंखे सुहे सिया ॥११॥

इत्यादि चिन्तयन्वैराग्यमापन्नो हनुमान्गृह आगत्य स्वसुते राज्यं न्यस्य धर्मरत्नाचार्यसमीपे स्वयं परिव्रज्यामुपाददे । तमनुगार्धे सप्त शतानि राज्ञां प्राव्रजन् । हनुमत्पत्न्यो राज्यः सुज्येष्ठाद्या आर्यालक्ष्मीवतीपार्श्वे दीक्षां लात्वा तपस्तेपुः । हनुमान्मुनिरपि तीव्रं तपस्तप्त्वा ध्यानानलेन क्रमात् कर्माणि निर्दह्य शैलेशीं प्राप्याव्ययं पदं जगाम ।

ततः श्रीरामचन्द्रो हनुमन्तं प्रव्रजितं तथा मोक्षं गतं च श्रुत्वा चिन्तयति—धन्य एष हनुमान् । यो दीक्षां लात्वा मोक्षं गतः । पुना रामेण चिन्तितमहो ! ईदृशा भोगा, ईदृशं राज्यं कथं त्यक्तम् ? ईदृशानि सौख्यानि किं त्यक्तानि ? एवं संयमवैपरीत्यं यावता चिन्तयति तावत्सौधर्मेण ज्ञानं प्रयुक्तम् । रामः संयमवैपरीत्यं चिन्त्यमानो दृष्टः । तावतेन्द्रेण सभामध्ये सर्वदेवसमक्षं प्रोक्तम्—यथा—

रामश्चरमदेहोऽपि धर्मं हसति स्वयम् । सौख्यं विषयसम्भूतं प्रत्युतैष प्रशंसति ॥१२॥

अपराऽनयो रामलक्ष्मणयोः कोऽपि स्नेहोऽत्यन्तदुस्त्यजः । ईदृशः स्नेहः कस्यापि नास्ति । अतः संसारोऽपि दुस्त्यजः । तद्वचनमश्रद्दधानौ द्वौ देवौ कौतुकात्स्नेहपरीक्षाकरणार्थं तत्राऽयोध्यायां लक्ष्मणस्य निकेतन उपेयतुः । तौ देवौ मायया लक्ष्मणस्य राममरणलक्षणं करुणस्वरं सर्वान्तःपुरस्त्रीणामाक्रन्दं दर्शयामासतुः । यथा—

हा पद्म ! पद्मनयन ! बन्धुपद्मदिवाकर ! । अकाण्डमृत्युः कोऽयं ते विश्वस्यापि भयंकरः ॥१३॥
एवं च रुदती वक्षांस्याघ्नाना मुक्तकुन्तलाः । अन्तःपुरवधूः प्रेक्ष्य विपण्णो लक्ष्मणोऽवदत् ॥१४॥

ममासौ किं मृतो भ्राता जीवितस्यापि जीवितम्। पिशुनेन कृतान्तेन किं कृतं छलघातिना ॥१५॥
एवं च भाषमाणस्य वचसा सह जीवितम्। सौमित्रेर्निर्ययौ कर्मविपाको दुरतिक्रमः ॥१६॥
स्वर्णस्तंभमवष्टभ्य स्थितः सिंहासनेऽपि हि। सोऽथ प्रसारिताक्षो ऽस्थाल्लेप्यमूर्तिरिवाक्रियः ॥१७॥

लक्ष्मणं मृतं दृष्ट्वा तौ सुरौ विषण्णौ मिथो जजल्पतुः! अहो! आवाभ्यां किमकार्यं कृतं येन विश्वाधारो विश्ववत्सलो महापुरुषो हतः। इति तौ सुरावात्मानं निन्दन्तौ स्वं कल्पं जग्मतुः। अथ लक्ष्मणं मृतं दृष्ट्वा सर्वा लक्ष्मणपत्न्यः सपरिवारा विलुलत्कुन्तलाश्चक्रन्दुः। तदाक्रन्दमाकर्ण्य तत्र श्रीरामः समाययौ, उवाच च–भो युष्माभिरविचार्यामङ्गलं किमारब्धम्। एषोऽहं जीवंस्तिष्ठामि, एष ममानुजोऽपि जीवति को वक्तव्यं मृतः। य एनं मृतं वदिष्यति तमनेन खड्गेन हनिष्यामि। एवमुक्त्वा ताः सर्वा अन्तःपुर्यो मौनं कारिताः। पुना राम उवाच हे बान्धव! लक्ष्मण! तव किं बाधते, त्वं किं मौनमाधाय स्थितोऽसि, इत्युक्त्वा रामो वैद्यान् ज्योतिषिकानप्याजूहवत्। मन्त्राणां तन्त्राणां च प्रतिक्रियां कारयामास। परं नैकोऽप्युपचारो लगति, अभव्ये गुरुवचनवत्। मन्त्रतन्त्राणां वैफल्ये श्रीरामचन्द्रो मूर्च्छां प्राप। कथंचिल्लब्धसंज्ञः श्रीराम उच्चैःस्वरं विललाप। अथ ते विभीषणशत्रुघ्नसुग्रीवाद्याः श्रीरामसेवका हा हताः स्मेति भाषिणो विमुक्तकण्ठं रुरुदुः। कौशल्याद्या मातरो विशल्याद्याः पत्न्यो भूयो भूयो मूर्च्छां गत्वा करुणस्वरं चक्रन्दुः। तदा प्रतिमार्गं प्रतिगृहं प्रत्यट्टं विना शोकमन्यत्किमपि नाभवत्। शोकस्य राजधानीव, दुःखस्य भाण्डागारमिव तस्मिन्समये सा नगरीदृश्यभूत्। अथ रामपुत्रौ लवाङ्कुशौ कनीयस्तातमृत्युना सम्प्राप्तवैराग्यौ भवाद्भीतौ च श्रीराममूचाते–हे तात! त्वं पश्य लक्ष्मणो लघुभ्रातोऽकस्मान्मरणं प्राप्तस्तर्हि का जीवितव्याशाऽन्येषामस्मादृशां प्राणिनाम्। अतोऽस्माकमनुमन्यस्व,

यथा दीक्षाऽङ्गीक्रियते। कनीयस्तातरहितानामस्माकं गृहे स्थातुं न युक्तम्। इत्युक्त्वा तौ द्वावपि श्रीरामं नत्वाऽमृतघोषमुनिपादान्त उभावपि दीक्षां जगृहतुः। क्रमाद्दीक्षां परिपाल्य शिवमीयतुः। श्रीरामो भ्रातृविपत्त्या पुत्रवियोगाच्च भूयो भूयो मुमूर्छ। लक्ष्मणमेवं जगाद च-मया तव काचिदवमानना न कृतास्ति, तर्हि त्वमीदृशं मौनमालम्ब्य कथं स्थितोऽस्ति। एवमुन्मत्तभाषिणं श्रीरामं प्रत्येत्य विभीषणाद्याः सेवका गद्गदस्वरं जगदुः—

धीरेष्वपि हि धीरस्त्वं वीरो वीरेष्विव प्रभो!। लज्जाकरमिदं तस्मादधैर्यं मुञ्च सम्प्रति ॥१८॥

लोकप्रसिद्धमधुना सौमित्रेरौर्ध्वदेहिकम्। अङ्गसंस्कारपूर्वं हि कर्तव्यं समयोचितम् ॥१९॥

एवं श्रुत्वा श्रीरामः कुपितस्तान्प्रत्येवं बभाषे-भो खलाः। मे भ्राता किं मृतोऽस्ति? मे भ्राता जीवन्नस्ति। परं ममोपरि कुपितत्वान्न वक्ति। इत्युक्त्वा रामो लक्ष्मणं बभाषे-हे बान्धव! लक्ष्मण! त्वं किं मां खेदयसि? एकवारं ब्रूहि यथा दुर्जनानां प्रवेशो न भवति। इत्युक्त्वा राघवस्तमंसे आरोप्यान्यत्र स्नानगृहे नीत्वा निर्मलजलेनास्नपयत्। ततो लक्ष्मणं चन्दनैर्विलिलेप। ततो दिव्यभोजनैर्भाजनं पूरयित्वा स्वहस्तेन पुरतो मुमोच। कदाचिदुत्सङ्गे करोति, कदाचिच्छय्यायां शाययति, कदाचिद्भोज्यमास्ये प्रक्षिपति, कदाचित् जलं पाययति, कदाचिच्छिरसि छत्रं बिभर्ति, कदाचिच्चामरैर्वीजयति, कदाचिद्रामो नृत्यं करोति, कदाचिद्गायति, कदाचिल्लक्ष्मणं स्कन्ध आरोप्य परिभ्रमतीत्यादिचेष्टां कुर्वाणस्य रामस्य षण्मासा व्यतिक्रान्ताः। एवंविधं श्रीरामं दृष्ट्वेन्द्रजित्सुन्दयोः सूनवोऽन्येऽपि विद्विषत्खेचरा रामं जिघांसवोऽभ्येयुः। तथाऽयोध्यां च रुरुधुः। सुप्तसिंहं व्याधा इ। रामोऽपि लक्ष्मणमासने निधाय वज्रावर्तं धनुरास्फालयन्विद्याधरान् हन्तुं दधावे। तदा चासनकम्पेन देवैः सार्धं माहे-

न्द्रदेवलोकाज्जटायुदेव आययौ। तेनाऽऽगत्य रामविद्विषो विद्याधरा भृशंस्तर्जिताः स्वस्थानं गताः। भीता लज्जिताश्च ते विद्याधराः संवेगमापन्ना दीक्षां जगृहुः। ततो जटायुरमरः श्रीरामप्रतिबोधार्थं पुरुषरूपं कृत्वा शुष्कं वनं सिषेच। तथा दृषदि पद्मिनीं रोपयामास। तथा वालुकास्तैलार्थं पर्यपीलयत्। तद्दृष्ट्वा रामेणोक्तम्–भो मूर्ख! शुष्कस्तरुः क्वापि पुष्प्यति? तेनोक्तम्–यदि तव भ्राता जीविष्यति तदा शुष्कतरुरपि पुष्पिष्यति। इत्यादि सर्वत्राऽपि ज्ञेयम्। पुनस्तेन पुरुषेणोक्तम्–यदित्वमेवं वेत्सि दृषदि पद्मिनी न भवति, वालुकासु पीलितासु तैलं न भवति, निरसो वृक्षः सिच्यमानोऽपि सरसो न भवति तथा मृतः कोऽपि पुमान्सज्जो न भवति, इति किं न वेत्सि? यदस्त्वमतिनिपुणोऽपि स्वस्कन्धे मृतकं वहसि। रामेणोक्तम्–भो! त्वं किममङ्गलं भाषसे मद्दृष्टितो दूरं याहि।

अथ कृतान्तवदनो देवस्तद्बोधार्थं रामसमीपमुपाययौ। पुरुषरूपं कृत्वा स्त्रीमृतकं स्कन्धे निधाय रामाग्रे समाययौ। राम उवाच–भो पुमन्! स्त्रीमृतकं स्कन्धे किं वहसि? तेनोक्तं–भो महापुमन्! स्वयं स्कन्धस्थितं मृतकं न वेत्सि, परं मम स्कन्धे स्थितां भार्यां मृतां जानासि। अहो! मौढ्यमित्यादियुक्तिभिर्बोध्यमानो रामो दध्यौ-किमेतत्सत्यं? लक्ष्मणो मृतः? पुना रामेण लक्ष्मणमुखं विलोकितम्, मृतकं दृष्टम्, तदा श्रीरामः षण्मासपर्यन्ते सावधानोऽभवत्। प्रकृतिमापन्नो हाहा लक्ष्मणो मृत एवं प्रतिबुद्धः। ततः श्रीरामो राजलोकपरिवृतो लक्ष्मणशरीरस्य चन्दनादिभिरग्निसंस्कारं चकार। उभावपि देवौ जटायुकृतान्तवदनौ निजं स्थानं जग्मतुः। ततः श्रीरामो दीक्षां गृहीतुकामो शत्रुघ्नं प्रति राज्यदानायादिशत्। शत्रुघ्नो बभाषे–हे बान्धव! यदि त्वं दीक्षां प्रतिपत्स्ये तदाऽहमपि त्वया सह दीक्षामादास्ये। अहं राज्येन किं करोमि? यथा मर्कटो नालिकेरेण किं करोति, वानरो मुक्तावल्या, विधवास्त्री कङ्कणेन, वणिक् खड्गेन, बधिरो वीणया, दरिद्रो लीलया, दिगम्बरो दुकूलेन, मुनिराभरणेन, मूर्खः पुस्तकेन, पापी सुकृतेन, अन्धोऽञ्जनेन, षण्ढो दयितया, दुर्जन उपकारेण,

शाल्ूरः कमलेन, ग्रामीणः पण्डितगोष्ठ्या, रजकः क्षपणकग्रामेण, मक्षिका यक्षकर्दमेन, कापुरुषः सङ्ग्रामेण, पण्याङ्गना निर्धनेन, गतवयाः शृङ्गारेण तथाऽहं राज्येन किं करोमि । ततः श्रीरामो लवपुत्रायानङ्गदेवाय राज्यं ददौ । स्वयं मोक्षार्थसाधनाय मुनिसुव्रतस्वामिवंशे श्रीसुव्रतमहामुनेः समीपेऽगमत् । तत्र शत्रुघ्नसुग्रीवविभीषणप्रभृतिभिरन्यैश्च राजभिः परिवृतः श्रीरामचन्द्रो देशनाश्रवणार्थं वन्दित्वोपविष्टः । मुनिनाऽपि देशना दत्ता । देशनां श्रुत्वा षोडशसहस्रैर्महीनाथैः सार्धं श्रीरामो दीक्षां ललौ । तथा श्रीरामेण सार्धम् सप्तत्रिंशत्सहस्राणि वरयोषितः प्राव्रजन् । एवं श्रीरामेण सार्धं त्रिपञ्चाशत्सहस्राणि राजराज्यः प्रव्रज्यां जगृहुः । यथा—

पष्ठयब्दीं गुरुपादान्ते विविधाभिग्रहोद्यतः । तेपे तपांसि रामर्षिः पूर्वाङ्गश्रुतभावितः ॥२०॥

अथ रामः प्रच्छन्नैकविहारो गुर्वनुज्ञया । एकाकी प्रययौ निर्भीरटव्यां गिरिकन्दरे ॥२१॥

यस्मिन्दिने गुर्वनुज्ञयैकाकित्वविहारं प्रपन्नवांस्तस्यामेव रात्रौ श्रीराममहामुनेरवधिज्ञानं समुदपद्यत । किंभूतस्य श्रीरामस्य, ध्यानजुषः । तेनावधिज्ञानेन चतुर्दशरज्जुप्रमितं क्षेत्रं करतलामलकवत्पश्यति । तत्र तुर्यनरके लक्ष्मणं स्वकर्मणा दैवैः पीड्यमानमपश्यत् । यतः—

पश्यंश्चतुर्दशरज्जुप्रमं विश्वं करस्थवत् । देवाभ्यां हतमज्ञासीत् गतं च नरकेऽनुजम् ॥२२॥

तदा श्रीरामभट्टारकश्चेतसीदं चिन्तयामास—अहं पूर्वजन्मनि धनदत्ताभिधोऽभवम् । एष लक्ष्मणः पूर्वभवे वसुदत्ताभिधानो ममानुजोऽभूत् । तस्मिन्जन्मन्यकृतपुण्यो मरणं प्राप्य भवं भ्रान्त्वाऽस्मिन्भवे वसुदत्तजीवोऽत्राऽपि ममानुजो लक्ष्मणनामाऽभूत् । तत्र कौमारत्वे शतवर्षाणि मुधा जग्मुः । धर्माभावात् शतत्रयं मण्डलित्वे वर्षाणि जग्मुः । चत्वारिंशद्वर्षाणि दिग्विजये मुधा जग्मुः । सार्ध-

कादशसहस्राष्टपष्टिं च राज्ये मुधा जग्मुः। सर्वमपि द्वादशवर्षसहस्रं लक्ष्मणायुरकृतधर्मत्वान्मुधाऽगमत्। तेन हेतुना चतुर्थनरके गतः।

अथ राममहामुनिश्चिन्तयति–देवयोर्न कोऽपि दोषः। ईदृगेव हि कर्मणां विपाको भवति। एवं चिन्तयित्वा श्रीराममहामुनिः कर्मविच्छेदकृतेऽधिकोद्यतमनाः समभवत्। कथं भूतो मुनिः–निर्ममः, कर्मोन्मूलनतत्परः, समाधिनिष्ठश्च। अथैकस्मिन्दिने श्रीराममहामुनिः षष्ठोपवासान्ते पारणकृते युगमात्रदत्तदृष्टिः सञ्चरन्स्यन्दस्थले नगरे प्राविशत्। तं महामुनिमागच्छन्तं दृष्ट्वा तद्रूपमोहितो लोको मनसि चिन्तयति–अहो! अम्बरादवतीर्णोऽयं किं चन्द्रः? न हि, स तु कलङ्की वर्तते, अयन्तु निष्कलङ्को दृश्यते। तर्हि किं सूर्यः? न हि, स तु तीक्ष्णांशुर्वर्तते, अयं शीतांशुर्दृश्यते। तर्हि किमिन्द्रः? न हि स तु सहस्राक्षो वर्तते, अयं तु नेत्रद्वयसंयुक्तो दृश्यते। तर्हि किं कामो वर्तते? न हि स तु अनङ्गवान्, अयन्तु अंगवान् दृश्यते। इत्यादि विकल्पैर्वीक्ष्यमाणः श्रीराममहामुनिर्विहरति। प्रचुरसंमदाः पौराः संमुखीनाः समाययुः। तस्य महामुनेर्भिक्षादानाय नार्यः स्वस्वगृहद्वारे विचित्रभोज्यपूर्णानि भाजनानि पुरो दधुः। तस्मिन्नगरे तस्मिन्समये श्रीबलभद्रमुनिसमागमनोद्भवमहोत्सवान्महान्कोलाहलो बभूव। तेन कोलाहलेन गजवरा आलानस्तम्भानुन्मूल्योन्मत्ता इव नगरे भृशं बभ्रमुः। हया उत्कीर्णा बभूवुः। तेन श्रीराममहामुनिः पौरलोकढौकितमाहारमशुद्धत्वाद्दनेषणीयत्वाच्च नाग्रहीत्। ततो राममुनिः प्रतिनन्दीराजवेश्मन्यगात्। तत्र प्रतिनन्दी उज्झितधर्मणाहारेण भक्तपानेन तं बलदेवमहामुनिं प्रत्यलाभयत्। तत्र पञ्चदिव्यानि जातानि। यतः—

तदियं गंधोदयपुष्फवासं दिव्वा तर्हि वसुहाराय उट्ठा। पहयादुंदुभिओ सुरेहिं आगासे अहो दाण च घुट्टं॥

अमरैर्विदधे तत्र वसुधारादिपञ्चकम् । भगवान् रामभद्रोऽपि तदरण्यं ययौ पुनः ॥२४॥

श्रीराममुनिना चिन्तितम्–माऽभूद्भूयो नगरक्षोभः । इति विचार्यात्रैवारण्ये यदा भिक्षा लप्स्यते तदानीं मया पारणकदिने पारणं कार्यमित्यभिग्रहं गृहीत्वा श्रीराममुनिर्विविध तपस्तप्यमानः समाधिमापन्नः प्रतिमाधरो वनं विचचार ।

एकस्मिन्दिने प्रतिनन्दीनरेश्वरो विपरीताश्वेन ह्रियमाणस्तस्मिन्वने समागतः यत्र वने श्रीराममहामुनिर्वर्तते । ततः प्रतिनन्दी नरेश्वरस्यानुपदं राजसैन्यं समागतम् । सैन्यैस्तत्र शिबिर न्यस्तम् । तच्छिबिरे प्रतिनन्दी समागतः । तत्र राजा स्नानं कृतवान् सपरिच्छदो बुभुजे च । भोजनानंतर पर्यङ्कोपरिस्थितो गान्धर्वैर्गीयमानयशाः सुखमनुबभूवे । इतश्च श्रीराममुनिर्महामुनिः मासक्षपणपारणे पारणेच्छया यत्र प्रतिनन्दी राजाऽस्ति तत्राऽऽजगाम । स प्रतिनन्दी राट् राममहामुनिं दृष्ट्वा रोमाञ्चितशरीरो दानभूषणपञ्चकेन सहित प्रासुकैषणीयान्नपानादिभिः प्रत्यलाभयत् । दानभूषणपञ्चकं यथा—

आनंदाश्रूणि रोमाञ्चो बहुमानं प्रियं वचः । किञ्चानुमोदनापात्रं दानभूषणपञ्चकम् ॥२५॥

तत्र तदैव पञ्चदिव्यानि देवैः कृतानि । रामर्षिर्भोजनानन्तरं तस्य राज्ञोऽग्रे देशनां चक्रे । सोऽपि प्रतिनन्दी राट् मुनिपतेर्देशनां श्रुत्वा सम्यक्त्वद्वादशव्रतधारको बभूव । ततः प्रभृति श्रीरामस्तत्रैव वने देवदेवीभिर्गीयमानयशास्तस्थौ । कदाचिन्मासान्ते कदाचित्पक्षान्ते एवं द्वित्रिचतुर्मासपर्यन्ते रामर्षिः पारणकं चक्रे । कदाचित्पर्यङ्के तस्थौ, कदाचित्प्रतिलम्बितभुजः, कदाचिदुत्कटिकासने, कदाचिदूर्ध्वबाहुः कदाचित्पादाङ्गुष्ठस्थः, कदाचित्पार्ष्णिस्थश्चेति नानासनो ध्यानी मौनी च दुस्तपं तपस्तेपे । एकस्मिन्समये श्रीराममहामुनिः पृथिव्यां विहरन्कोटिशिलां शिलां ययौ, या शिला लक्ष्मणेन पूर्वं विद्याधरसमक्षं भुजाभ्यामुद्धृता । श्रीराममहामुनिस्तां

शिलामध्यास्य क्षपकश्रेणिमाश्रितः। निशायां प्रतिमाधरः शुक्लध्यानान्तरं भेजे। तदावधिज्ञानेन ज्ञात्वा सीतेन्द्रश्चिन्तयति-अहं श्री राममहामुनिमनुकूलैरुपसर्गैः क्षपकश्रेणिवर्तिनमप्युपद्रवं करोमि, यथाऽयं महामुनिर्ममामित्रं भवेत्। इति सञ्चिन्त्य सीतेन्द्रः साध्वी-रूपं विधाय विद्याधरकुमारिकाभिः परिवृता श्रीराममुनिसमीपं समाययौ। तत्राऽऽगत्य प्रथमं वसन्तर्तुविभूषितं महोद्यानं विचक्रे।

चूतचम्पककङ्केल्लिपाटलावकुलादयः। दधुः सद्योऽपि पुष्पाणि जन्यास्त्राणि मनोभुवः ॥२६॥

चुकूज कोकिलकुलं ववौ च मलयानिलः। रणन्तो भ्रमरा भ्रेमुः कुसुमामोदमोदिनः ॥२७॥

सीतारूपं च सीतेन्द्रो विकृत्य स्त्रीजनानपि। ऊचे प्रिय! प्रिया तेऽस्मि सीतेह समुपस्थिता ॥२८॥

रक्तं त्वयात्वा तदानीं त्वामहं पण्डितमानिनी। प्राव्रजं नाथ! पश्चाच्च पश्चात्तापो ममाऽत्यभूत् ॥२९॥

तथा च स्वामिन्! एताः सानुरागा विद्याधर्यस्तव पाणिग्रहणं कर्तुकामा विज्ञपयन्ति-स्वामिन्! अस्माकं पाणिग्रहणं कुर्विति! पुनः सीता प्रोचे-अहमपि तवादेशात्तपस्यां त्यजामि, एवं यावत्सीता प्रोचे, तावता विद्याधर्यः स्मरोज्जीवनभेषजमेवंविधं विविधं सङ्गीतं चक्रुः। परं श्रीराममहामुनिः सीतेन्द्रवचनैस्तेन सङ्गीतकेन वसन्तेन च ध्यानान्न चलितः, तथा तस्य महामुनेर्मनःसंयमाग्र चचाल।

माघस्य शुक्लद्वादश्यां तदा यामेऽन्तिमे निशि। उदपद्यत रामर्षेः केवलज्ञानमुज्ज्वलम् ॥३०॥

रामस्य केवलज्ञानमहिमानं सभक्तिकः। सीतेन्द्रो नाकिनोऽन्ये च विदधुर्विधिपूर्वकम् ॥३१॥

दिव्यस्वर्णाम्बुजासीनो दिव्यचामरराजितः। दिव्यातपत्रयाऽऽमो विदधे धर्मदेशनाम् ॥३२॥

देहे द्रव्ये कुटुम्बे च सर्वसंसारिणां रतिः। जिने जिनमते संघे पुनर्धर्माधिकारिणाम् ॥३३॥

संबुज्झह किं न बुज्झह संबोही खलु पेच दुल्लहा। नो हु वणमंति राइओ नो सुलहं पुणरावि जिविअं ॥३४॥

इत्यादिदेशनां श्रीराममहामुनिमुखाच्छ्रुत्वा देशनान्ते सीतेन्द्रः क्षामयित्वा लक्ष्मणरावणगतिं पृष्टवान्। ततः श्रीराममहामुनिरभ्यधात्-श्रूयतां भो सीतेन्द्र! अधुना चतुर्थे नरके शम्बूको दशाननः लक्ष्मणश्चेति। यतः-कर्माधीना हि देहिनां गतयः। तत्र नरके नरकायुश्चानुभूय विजयापुर्यां तौ दशाननलक्ष्मणौ प्राग्विदेहे विजयावत्यां नगर्यां सुनन्दराद्रोहिणीपुत्रौ जिनदाससुदर्शननामानौ श्रावकौ भविष्यतः,अर्हद्धर्मं च पालयिष्यतः। ततो विपद्य सौधर्मे त्रिदशौ भविष्यतः। ततोऽपि च्युत्वा विजया पुर्यां श्रावकौ भाविनौ। ततोऽपि मृत्वा हरिवर्षक्षेत्रे पुरुषौ भविष्यतः। ततस्तौ द्वावपि मृत्वा देवलोकं गमिष्यतः। ततश्च्युत्वा विजयापुर्यां जयकान्तजयप्रभनामानौ कुमारसार्वराड्लक्ष्म्योस्तौ कुमारौ भविष्यतः। जिनोक्तं संयमं तत्र पालयित्वा मृत्वा च लान्तके कल्प उभावपि देवौ भविष्यतः। तदा त्वमच्युतदेवलोकाच्च्युत्वाऽत्रैव भारते सर्वरत्नमतिर्नाम्ना चक्रवर्ती भविष्यसि। अथ तौ लान्तकाच्च्युत्वेन्द्रायुधमेघरथाभिधानौ तव पुत्रौ भविष्यतः। ततस्त्वं चक्रवर्ती राज्यं परिपाल्य संयमं लात्वा तीव्रं तपस्तप्त्वा वैजयन्ते विमाने व्रजिष्यसि।

इन्द्रायुधः स तु जीवो रावणस्य भवत्रयम्। शुभं भ्रान्त्वा तीर्थकरगोत्रकर्मार्जयिष्यति ॥३५॥

ततो रावणजीवः स तीर्थनाथो भविष्यति। वैजयन्ताच्च्युतस्तस्य भावी गणधरो भवान् ॥३६॥

ततो द्वावपि सीतारावणजीवौ मोक्षं यास्यतः। लक्ष्मणस्य जीवो मेघरथः प्रव्रजिष्यति। प्रव्रज्यां पालयित्वा देवो भविष्यति। ततश्च्युत्वा लक्ष्मणजीवो पुष्करवरद्वीपे प्राग्विदेहे रत्नचित्रायां नगर्यां जयनामा चक्रवर्ती भविष्यति। चक्रवर्तिश्रियं भुक्त्वा

परिव्रज्यां लात्वा क्रमेण च तीर्थनाथो भविता, निर्वाणं च प्रपत्स्यते। श्रीराममहामुनिमुखात्सीतेन्द्रो रावणलक्ष्मणचरित्रं श्रुत्वा श्रीराममुनिं प्रणम्य प्राक्स्नेहवशतो यत्र लक्ष्मणस्तत्र ययौ। तत्र शम्बूकरावणौ सिंहादिरूपं विकृत्य लक्ष्मणेन सह संग्रामं क्रियमाणौ ददर्श। तथा परमाधार्मिकाः क्रुद्धास्तानग्निकुण्डेषु न्यधुः। ततस्ते त्रयोऽपि दह्यमाना गलिताङ्गका उच्चै रटन्तो ददृशिरे। सीतेन्द्रेण चिन्तितम्–आः कर्मणां विपाकः। इत्यादिकं तेषां बहुदुःखं प्रेक्ष्य परमाधार्मिकसुरेभ्यः प्रोक्तम्–किं रे एतान्महापुरुषान्दुःखं दद्ध्वे? तैरुक्तम्–अस्माभिर्दुःखं न दीयते,तथापि क्षेत्रवेदनादिदुःखं परस्परकृतं च दुःखं न याति पूर्वकर्मवशतः। ततः सीतेन्द्रो रावणलक्ष्मणौ युद्धं कुर्वाणौ दृष्ट्वोवाच–भो किमर्थं युध्येथे? अथ पूर्ववैरं विमुञ्चतम्। युवाभ्यां पूर्वभवे तत्पापं कृतं येन पापेन नरक उत्पन्नौ, अद्यापि पूर्ववैरं किं न मुञ्चतम्? एवमुक्त्वा तौ रामलक्ष्मणौ युद्धान्निवार्य सन्तोषितौ। तथा रामकेवलिना ख्यातानन्योरग्रेतनभवान्प्रतिबोधार्थं सीतेन्द्रोऽकथयत्–तथा भो रावणलक्ष्मणौ! युवां प्राग्जन्मोपार्जितैः क्रूरकर्मभिर्नरकं मत्यापितौ सम्यक् सहेथाम्। युवयोर्दीर्घसंसारो नास्ति। एवमुक्त्वा तौ रावणलक्ष्मणजीवौ सन्तोषितौ।

अथ तेषां सीतेन्द्रः कथयति–अहं त्रीनपीतो नरकात्सुरलोके नेष्यामि, युष्माभिः काचिच्चिन्ता न विधेया, इत्युक्त्वा ते त्रयोऽपि स्वेन पाणिनोद्दध्रिरे। ततस्ते त्रयोऽपि ह्रियमाणाः पारदवत्करतलात्कणशो भूत्वा पेतुः। भूयोऽपि मिलिताङ्गास्तानुदध्रे। पुनस्तथैव पेतुः। एवं द्वित्रिवारान् कृत्वा सीतेन्द्रो विषण्णः, तदा ते प्रोचुः–हे सीतेन्द्र! त्वमस्मान्मुञ्च, यतोऽस्माकमुद्ध्रियमाणानां महद्दुःखं जायते। यतः—

कृतकर्मक्षयो नास्ति कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥३७॥

पुनस्तैस्त्रिभिः प्रोक्तम्-त्वमस्मान्मुक्त्वा स्वस्थानं याहि। ततस्तांस्तथैवमुक्त्वा श्रीराममहामुनिं नत्वा नन्दीश्वरेऽष्टाह्निकां कृत्वा सीतेन्द्रो देवः कुरुप्रदेशे भामण्डलराजजीवं प्रतिबोध्य ततः स्वयमच्युतदेवलोकं गतः।

उत्पन्ने सति केवले स शरदां पञ्चाधिकां विंशतिं, मेदिन्यां भविकान्प्रबोध्य भगवांच्छ्रीरामभट्टारकः।
आयुश्च व्यतिलङ्घ्य पञ्चदशचाब्दानां सहस्रान्कृती, शैलेषीं प्रतिपद्य शाश्वतसुखानंदं प्रपेदे पदम् ॥३८॥

इति श्रीमत्तपागच्छे भट्टारकश्रीहीरविजयसूरिराज्ये आचार्यश्रीविजयसेनसूरियौवराज्ये पण्डितदेवविजय-
गणिविरचिते गद्यबन्धे श्रीरामचरित्रे श्रीरामनिर्वाणगमनो नाम दशमः सर्गः॥

## ॥ समाप्तश्चेदं रामायणम् ॥

इदं रामायणं प्रायेण श्रीहेमाचार्यकृतरामायणमुपजीव्य मया कृतमिति संस्कृत भाषयैव लिखितम्। सत्यपि प्राकृतपद्यबन्ध चरिते तथा सत्यपि संस्कृतपद्यबन्धचरिते मयाऽऽत्मविनोदार्थं कर्मक्षयार्थं गद्यबन्धेन कृतमिति।

स्वस्ति श्रीमत्तपागच्छे भट्टारक युगप्रधान श्रीविजयदानसूरिशिष्याचार्य-श्रीराजविजयसूरि-शिष्यपण्डितदेवविजयगणिभिर्विरचितं समाप्तं चेदं रामायणम्। विक्रमसंवत्-१६५२ वर्षे आश्विनमासे कृष्णपक्षे दशम्यां तिथौ गुरुपुष्ययोगे श्रीमन्मरुस्थल्यां ज्येष्ठस्थित्यां स्थितेन पं० श्रीदेवविजयेन श्रीमालपुरनगरे श्रीमदकब्बरराज्ये विरचितं रामायणम्।

प्रत्यक्षरं निरूप्यास्य ग्रन्थमानं विनिश्चितम् । सम्यग्गणनया ज्ञेयं श्लोकपञ्चसहस्रकम् ॥

यदक्षरपरिभ्रष्टं मात्राहीनं च यद् भवेत् । क्षन्तव्यं तद्बुधैः सर्वं कस्य न स्खलना भवेत् ॥

अक्खरमत्ताहीणं जं चिअ पढियपाणमाणेण । तं खमह मज्झसव्वं जिणवयण विणिग्गया वाणी ॥

श्रीवाचकाग्रेसरधर्मसागरक्रमाब्जभृङ्गैर्बुधपद्मसागरैः ।
एतच्चरित्रं स्वधिया सुशोधितं वचस्विवाच्यं भवतु श्रियांपदम् ॥

इति प्रशस्तिः ॥ शुभं भवतु ।

